श्रीवरदपरब्रह्मणे नमः

Vaikhanasiya

# VIMĀNĀRCHANA KALPA

## (Sage Marichi Samhita)

श्रीवैखानसे - भगवच्छास्त्रे

मरीचि महर्षि प्रणीते

# विमानार्चनाकल्पाः


प्रकाशका

**तिरुमल - तिरुपति देवस्थानम्, तिरुपति**

**1998**

[illegible]

Vaikhanasiya

# VIMĀNĀRCHANA KALPA

(Sage Marichi Samhita)

श्रीवैखानसे - भगवच्छास्त्रे

# विमानार्चनाकल्पाः

वैखानस - व्याकरणपण्डित, व. रघुनाथचक्रवर्ति भट्टाचार्येण

व्याकरणपण्डित श्री सेतु माधवाचार्येण च

संशोधितः

वैखानसागम चुडामणि

माडंबाकं कृष्णस्वामि श्रीनिवास भट्टाचार्यैः

T.T.D. वैखानसागम अस्थान पंडितैः

परिशीलितः


प्रकाशकाः

तिरुमल - तिरुपति देवस्थानम्, तिरुपति

1998

# VIMANARCHANA KALPA

by

**MAHARSHI MARICHI**

T.T.D. Religious Publication Series No. 488
T.T.D. First Edition 1998
Copies : 1000



Published by
**Sri. M.K.R. VINAYAK,** I.A.S.
Executive Officer
Tirumala Tirupati Devasthanams
Tirupati



Printed at
**Bhagyam Quality Printers**
48/B, Ramanuja Iyar Street,
Chennai - 600 021.

# FORWORD

*Vimānārcana Kalpa* written by *Sage Marīci* is one of the important texts of *Vaikhānasa Āgama.* This is a reprint of the book published by the T.T.D. a few years ago.

The Vaikhanasa tradition of temple worship was founded by *Sage Vikhanasa Maharshi. Sri Vimānārcana Kalpa* text consisting of 101 patalas gives full details about construction of temples, preparation of different idols with detailed measurements, procedure for installation of idols, daily pooja, *visesa pūja* and *Prāyascittas.* It also exhaustively deals with *Bhakti, Prapatti* and *Yoga* systems. This book is often referred to as an authoritative text for rituals in ***Sri Venkateswara Temple*** at Tirumala.

I express my thanks to *Sri M.K. Sreenivasa Bhatta Charya* (T.T.D. Asthana Pandit) and *Sri Vaikhānasa Divya Siddhanta Vivardhini Sabha* for their co-operation and assistance in bringing out this edition.

I hope this book will serve the needs of all the scholars, devotees and Archakas for fully knowing about the construction of temples, installation of idols and the performance of rituals.

Tirupati
30-11-97

**M.K.R. VINAYAK.**, I.A.S.
Executive Officer
T.T. Devasthanams

श्रीश्रीनिवासाय नमः

श्रीमद्विखनसमहागुरवे नमः

# प्रस्तावना

कटिसुघटितहस्तं कालमेघाभिरामं
कमलमदहराक्षं पद्मया दीप्यमानम्।
प्रणतमुनिजनैस्तं प्राप्यमप्राप्यमानं
शरणमुपगतोऽहं प्राञ्जलिर्वेङ्कटेशम्॥

नारायणः पिता यस्य माता चापि हरिप्रिया।
भृग्वादिमुनयः शिष्याः तस्मै विखनसे नमः॥

"कलौ वेङ्कटनायकः" इति भगवद्वेदव्यासकृत-पुराणवचनानुसारेण शेषमहीधरशिखरे विराजमानः सप्तगिरिराजः इति सुप्रसिद्ध भगवान् श्रीवेङ्कटेशः भक्तानां मनसि प्रत्यक्षमिव विलसति। तत्र भगवदर्चनं वेदोक्तप्रकारेण श्रीवैखानसदिव्य-भगवच्छास्त्रीया श्रीवैखानसीयवैदिकैः क्रियते।

श्रीविखनसशिष्यैः भृग्वत्रिमरीचिकाश्यपैः चतुर्लक्षप्रमाणेन श्रीशास्त्रमनाधेय-मधेयमर्चाशास्त्रं प्रपञ्चितम्। तत्र मरीचिना कृतं विमानार्चनाकल्पमिति सुप्रसिद्ध। अस्मिन् ग्रन्थे शताधिकपटलानि सन्ति। अत्र भगवान् मरीचिः कर्षणादिप्रतिष्ठान्तविषयं सम्यक् व्याख्यातवान्। विमानादिनिर्णयलक्षणं ध्रुवकौतुकस्नपनबलिबेराणां लक्षणं, नित्यार्चनं, विशेषपूजाविधानं, स्नपनमित्यादीन्यथाचारमुद्घाटितवान्। ग्रन्थान्ते परमपुरुषार्थस्य मोक्षस्यावाप्तिमार्गं श्रीवैखानसशास्त्रग्रन्थगणनाविधिं च रचयामास अतोऽयं ग्रन्थः परमप्रामाणिकः वैखानसपरम्परायाम्।

अस्य ग्रन्थस्य प्रकाशने कृताधिकारेभ्यः श्रीतिरुमल तिरुपति देवस्थान कार्यनिर्वाहकेभ्यः एम्. श्री क्षीररामलिङ्गेश्वर विनायक, I.A.S., महोदयेभ्यः, श्रीतिरुमलतिरुपतिदेवस्थानपालकमण्डलिसदस्येभ्यः सादरं साभिमानं च नमांसि।

देवस्थानप्रचुरणविभागसंपादकेभ्यः एन्. एस्. राममूर्तिमहोदयोभ्यः धन्यवादशतानि। श्रीवैखानसशास्त्रग्रन्थप्रकाशने सिद्धप्रयत्नेभ्यः श्रीवैखानसदिव्यसिद्धान्तविवर्धिनीसभायाः कार्यदर्शिभ्यः दीविवंशजेभ्यः गौतमसगोत्रेभ्यः विखनसाचार्यवर्येभ्यः स्वस्तिर्भवत्विति आशीः।

श्रीस्वामीहाथीरामजी पीठाधिपतिभिः श्रीप्रयागदासजीसमभीरव्यैः महन्तवर्यैः श्रीश्रीनिवासभगवद्दिव्यभण्डागारोद्धृतद्रविणेन चेन्नपुर्यां मुद्रापितपुस्तकमनुरुद्ध्य पुनर्मुद्रितोऽयं ग्रन्थः। अस्मिन् मुद्रणे साहाय्यं कृतवतेभ्यः डाक्टर् मुत्तुकृष्ण महोदयेभ्यः "भाग्यम्" मुद्रणालयाधिकारिभ्यः सहर्षं कृतज्ञतापूर्वकधन्यवादन् व्याहरामि।।

इति

तिरुमल, **विद्वज्जनविधेयः**

२३-१२-९७. **माडम्बाक्कम् कृष्णस्वामि श्रीनिवासभट्टाचार्यः**

तरुमलतिरुपतिदेवस्थानास्थानपण्डितः।

तिरु

॥ श्री ॥

# मरीचिसंहिता

## उपोद्घातः

निखिलभुवनतलविदितमेव श्रीमतो वेंकटेशस्य क्षेत्रमिदं शेषमहीधरशिखरे विराजमानं अस्मिन् युगे प्रायस्तमसावकुण्ठितेपि भक्तजनानुकम्पया निजमाहेमान प्रत्यक्षमिव प्रकाशयन् सकलभुवनस्थिति मातन्वन् अशेषश्रुतिस्मृति मुख्य प्रतिपाद्यो भगवान्मुकुन्दः श्रुतिगोचरेणैवपथा ऋषिसंप्रदायात् समर्च्यमान इह विलसति। तदर्चनं च वेदानुयायित्वेन प्रसिद्धं वेदैकोपक्रमं श्री वैखानसशास्त्र मवलम्ब्य हि प्रवर्तते। तच्च शास्त्रं बह्वीभि स्संहिताभिर्विस्तृतं। तत्र भगवतो विखनसोमहर्षे श्चतुर्मुखात्मकस्य शिष्यप्रवरेण मरीचिना संपादितासु या आनंदाख्या संहिता सैवात्रानुष्ठानविषयः। कालतोलुप्यमाना सा संहिता समुज्जीवनीयेति कृतोत्साहैः, निरवधिक श्रीहरिगुरु भक्तिभरेण साक्षात्कृत श्रीमद्वेङ्कटाचलाधीशेनसहदिव्याक्षक्रीडारसविशेषास्वादनैकतानान्तःकरणानां विरागिकुलसार्वभौमानां श्रीस्वामीहाथीरामजी गुरुवर्याणांश्रीमद्दिव्यसिंहासनमलङ्कुर्वाणैः श्री शेषाचल श्रीपद पुरादिविलसच्छ्री भगवद्दिव्यालय श्रीकार्यनिर्वहणधुरीणैः विरागिकुलशिरोभूषणैः श्री प्रयागदासजी समभिख्यैः श्री महन्तवर्यैः मुद्राक्षरैः समुद्य प्रकाशिता लसति।

महर्षेर्मरीचेराचार्यश्सू तिप्रसिद्धो विखना नाम चतुराननएव, आहोस्वित् तदावेशयुतस्तच्छिष्यप्रवरो विखना नाममहर्षिरस्य वेदानुगृहीतस्यसंप्रदायस्य प्रवर्तकः तत्प्रणीतंच भगवच्छास्त्रं सर्वोत्तममिति तावत् कतिपयश्रुत्यादिप्रमाणोदाहरणेनाभिज्ञानुपतिष्ठामहे ॥ तत :-

धेनुर्वहाणामदिति स्सुराणां ब्रह्मा ऋभूणां विखना मुनीनाम् । ऋग्वेदे पवस्वंतं, वैखानसः पवस्वतेत्यादिशतर्चः वैखानसाधिदेवताः । यजुर्वेदेवैरवानसं पूर्वइहसामभवति, विरवनसादृष्टं सामापिश्रूयते - ऊहे दशरात्रे सप्तमेह्नि; विशेषेण रवननाद्विरवनाः । आह भगवान्व्यासः-कर्मकाण्डे "खनित्वाचात्मनात्मानं धर्मादि गुणसंयुतं । ध्यानमाविश्ययोगेन ह्यासीद्विख-नसो विभुः । खननं तत्र मीमांसाह्यासिद्धेः परतः परात् । विशेषेण खनेद्य स्मात् भावनान्मुनिसृष्टयोनाम्ना विखनसो लोके स आसीदंडजाप्रयः" इति गूढार्थप्रकाशने खनशब्दः प्रयुज्यते । तथामहाभारतेपि इति दशविधनिर्णये । "वैखानस इति" "क्वचित् विखनसः इति विखनाः" इति चत्रेधाऽयं शब्द स्समानार्थतया पठ्यते । वैयासिक्यादि निघंटुष्वपि विखनाश्च विरिंचन इति । भृग्वंगिरादयः नवापि विखनसः शिष्याः, यथोक्तम्।

एते विखनसः शिष्याः श्रुतिस्मृतिविधानत इति ।

भारतेच वेदानांव्यसनादर्वाक्प्राग्रूपं मिलितं तु यत् । तांतु वैखानसीं शाखां इति ब्रह्मविदो विदुरिति । भागवत मतप्रशंसायां श्रीयामुनाचार्यै-रुच्यते, "इदमपि (वैखानसमपि) भागवतमतमिति संगृह्यते" इति । वैखानसाः पांचरात्राश्चेति द्विविधाः भागवताः । कल्पसूत्र व्याख्यातारश्च तत्र तत्र भागवतानां सूत्रं विखनः प्रणीतं सूत्रमिति, उदाहरन्ति । वैखानससंहितासु वैखानसानां भागवता इत्येव व्यवहारोपि स्फुटः ।

अन्यत्रंच "वैखानसस्य सूत्रस्य अग्नेश्श्रामणकस्यच, नारायणस्य देवस्य याथार्थ्यं न च विन्दति" इति

बोधायनः धर्मे द्वितीयखण्डे "वानप्रस्था वैखानसशास्त्रेण समुदाचारेण" इत्यादौ श्रामणकंनाम वैखानसंसूत्रं "तेनाग्निमादधीत वानप्रस्थः" इति आपस्तंब गौतमयममनुशंखलिखितहारीतवसिष्ठादिभिः वानप्रस्थाग्निपुरोडाशपौंडरीक कुण्डादिविधानेषु मूलप्रमाणत्वेन विख-नस्सूत्रमेवाश्रितं, तथाचोक्तं ।

आदिकालेतु भगवान् ब्रह्मातु विखना मुनिः ।

यजुः शाखानुसारेण चक्रे सूत्रं महत्तरं ।

वनाश्रमाचारयुतं श्रौतस्मार्तसमन्वितं ।

यस्मिन्नेवतु संप्रोक्तं सूत्रं विखनसा परं,

वनस्थानांतु सर्वेषां विधिश्श्रामणकोभिधः,

वानप्रस्थास्ततस्सर्वे येद्विजाअन्येचसूत्रिणः

तत्सूत्रविध्यनुष्ठानात् स्मृता वैखानसास्तु ते

यत्सूत्राद्यंतमध्येषु भगवान्विष्णुरव्ययः,

यष्टव्यो गीयते यस्मात्, सर्वसूत्रोत्तमंतु तत् ।

वेदे वैखानसे सूत्रे योधर्मः परिकीर्तितः ।

सर्वैस्सधर्मोनुष्ठेयो नात्र कार्या विचारणा ।

भृग्वधिकारेच वैखानस सूत्रस्य सर्वथा वैष्णवत्वं, सर्वसूत्रोत्तमत्वंच उद्घुष्यते ।

गृहीत्वा पाणिनाविष्णुः तमुवाच मुदान्वितः ।

श्रीभगवानुवाचः —

विखनं स्त्वं महायोगिन् लोकसंरक्षणायवै ।

श्रुत्युक्तेनैव मार्गेण मत्पूजां कुरुसादरम्

श्री विखनाः । विधिना केनमन्त्रेण त्वत्पूजां करवाण्यहम् । वद स्वामिन्महाविष्णो त्वद्भृत्यस्य ममाव्यय ।

श्रीभगवान् * * * * * *

संगृह्य वैष्णवान् मन्त्रान् साङ्गवेदानुपादिशत् ।

द्वयंच मूलमन्त्रादीन् उपचारक्रमं तथा ।

जपहोमार्चनध्यानक्रमश्चोपदिदेशह ।

मानुषं दैविकं किंच सर्वशास्त्रं हरिस्स्वयम् ।

उपदेशक्रमेणैव कृत्वैवाध्ययन् मुनिः ।

ततोभगवताज्ञप्तः सृष्ट्वा तान्नवसंख्यकान्

अध्यापयामास तथा साङ्गोपाङ्गानिसर्वशः
काश्यपोऽत्रि मरीचिश्चवसिष्ठोऽङ्गिरसोह्महं
पुलस्त्यः पुलहश्चैवक्रतुश्चनवसंख्यकाः
एते विखनसः शिष्याः लोकानुग्रहकारिणः इति ।

तत्रैवालयार्चागृहार्चेति उभयोरर्चनविध्योः श्रुति चोदितत्वं प्रदर्श्य विष्णुपुरुषसत्याच्युतानिरुद्धाख्यपंचमूर्त्यात्मकस्य भगवतः पुरुषोत्तमस्य पूजामपि श्रुत्या एष पुरुषः पंचधापंचाग्निः इत्यादिकया सूचयति । किं च, ये वैखानससूत्रेण संस्कृतास्तु द्विजातयः। ते विष्णुसदृशा ज्ञेयाः सर्वेषा मुत्तमोत्तमाः ।

विष्णोः प्रियतमा लोके चत्वारः परिकीर्तिताः ।
अश्वत्थः कपिला गाव स्तुलसी वैखानसाद्विजाः ॥
वैष्णवेषुच तेश्रेष्ठाये वैखानससूत्रिणः ।
इत्येवं सूत्रिणां प्रशंसयासूत्रकारस्यैव महतीप्रशंसा कृता भवति।
पूजा वैखानसैर्विप्रैरालयेस्याद् विशेषतः
सर्वं संपत्करंचैव सर्व दुःख विनाशनं
कौर्मे ॥
मच्चित्तामद्गतप्राणाः मयि संगत मानसाः
अनन्यशरणा राजन् तस्माद्वैखानसा वराः ॥
पांचरात्रे-पौष्करसंहितायां
विप्रा वैखानसाख्या ये ते भक्ता स्तत्वमुच्यते ।
एकांतिनः सुसत्वस्था देहांतं नान्ययाजिनः ।
कर्तव्यमितिदेवेशं संयजन्ते फलं विना
प्राप्नुवन्तिच देहांते वासुदेवत्वमब्जज ! इति

अतएव शरणागतिदीपिकायां वैखानसानां प्रशस्तिर्यथा "त्वां पांचरात्रिकनयेन पृथग्विधेन वैरवानसे न च पथा नियताधिकाराः ।

संज्ञाविशेष नियमेन समर्चयन्तः प्रीत्यानयन्तिफलवान्ति दिनानि धन्याः । वर्णाश्रमादिनियमास्थिरसूत्रबद्धा भक्त्या निवेशित यथार्ह सुपत्रपुष्पा । मालेवकालविहिता हृदयंगमा त्वां आमोदयत्यनुपरागाधियां सपर्या । तथा वैखानसगृह्येच दशम प्रश्ने "मधूक्ते तोयम्, मांसोक्ते पैष्टिकं गृह्णाति" इत्युक्तेः शुद्धसात्विकत्वमेव वैखानसानां सिद्धम् ।। अच्छिद्र पंचकाल-परायणात्वादिकोधर्मः वैखानसानामेव स्वभावत स्सिद्धः परैरप्याकृष्य आत्मनिवर्णित इति शांडिल्यस्मृत्यादिदिशा विज्ञातं सुविदितामिति, तावदास्तां प्रपंचः ।

दक्षिणापथे केनचिदाधुनिकेन वैखानसानामपि अद्वैतित्वमुत्प्रेक्षितं । साचोत्प्रेक्षा वैखानससिद्धांते तस्यसर्वथापरिचयाभावं अनभिज्ञतांच व्यनक्ति । आग्रहविधुरै रस्मिन्नेव प्रयत्नेन महर्षिणा मरीचिनाकृते विमानार्चनकल्पे त्रिणवतितमे चतुर्नवतितमेच पटले वैखानस गृह्यसूत्रघटकयोः सगुणनिर्गुणशब्दयोः निरूपितं प्रामाणिकमर्थमादाय मायावादिसम्मतार्थत्वा भावोद्रष्टव्यः । ततश्च वैखानसाः जीवेश्वरयो र्निरुपचरित भेदवादिनइति निश्चेतुंशक्यते ।।

एतावताग्रंथेन वैखानसागमस्य श्रुतिपथैकवर्तित्वं बहुभिःप्रमाणैः सज्जनमुदे सूचितं । कालत स्साहचर्यदोषाच्च ये दोषा स्तदनुयायिष्वपि दत्तपदास्स्युः तान् व्युदस्य मूलग्रंथावलोकनपरा महान्तः स्वतः वेदोक्तधर्मानुष्ठानेन तत्रच उपासनावर्त्मनि विद्वदविद्वत्साधारिणीं आद्यभूतां अर्चासमर्चनपद्धतिं अवच्छिन्नसंप्रदायेन प्रदर्शयतां वैखानसानां वैदिकाग्रगण्यत्वं अवधारयेयुरिति, तथा तत्सिद्धांतेनैव शेषाद्रौ श्रीनिकेतनस्य अनन्यसाधारणः पूजाविधिः अनादितश्चलतीति, अयंच कोशः तमेवार्थं विद्वद्भ्यो ऽविद्वद्भ्यो दर्शयतीतिच विमृश्य एतत्प्रकाशने कृतो साहानां श्रीमतां महंतवर्याणां तन्नियोगेन एतत्परिष्करणे कृतश्रमाणां विदुषांच मुदमेवअर्हणीं मन्यमानाः मोदेरन्निति शम् ।।

व: - रघुनाथचक्रवर्ति भट्टाचार्यैः

सेतु माधवाचार्यैः

# मरीचिसंहिता विमानार्चनकल्पस्थ

## विषयानुक्रमणिका

## चतुर्थः पटलः



## पञ्चमः पटलः



## षष्टः पटलः



## सप्तमः पटलः



## अष्टमः पटलः



## नवमः पटलः

## एकोनविंशः पटलः



## विंशः पटलः

## एकविंशः पटलः

## द्वाविंशः पटलः



## त्रयोविंशः पटलः



## चतुर्विंशः पटलः

## पंचविंशः पटलः



## षड्विंशः पटलः



## सप्तविंशः पटलः



## अष्टाविंशः पटलः



## एकोनत्रिंशः पटलः

## चतुष्पंचाशत्तमः पटलः



## पंचपंचाशत्तमः पटलः



## षट्पचाशत्तमः पटलः



## सप्तपंचाशत्तमः पटलः



## अष्टपंचाशत्तमः पटलः



## एकोनषष्टितमः पटलः



## षष्टितमः पटलः



## एकषष्टितमः पटलः



## द्विषष्टितमः पटलः

## त्रिषष्टितमः पटलः



## चतुः षष्टितमः पटलः



## पंचषष्टितमः पटलः



## षट्षष्टितमः पटलः

## सप्तषष्टितमः पटलः



## अष्टषष्टितमः पटलः

## एकोनसप्ततितमः पटलः

## सप्ततितमः पटलः



## एकसप्ततितमः पटलः



## द्विसप्ततितमः पटलः

## पंचनवतितमः पटलः



## सप्तनवतितमः पटलः



## अष्टनवतितमः पटलः



## एकोनशततमः पटलः



## शततमः पटलः



## एकशततमः पटलः



। विषयानुक्रमणिका सम्पूर्णा ।।

१. अत्र संहितायामादित आरभ्य चत्वारिंशत्पटलैः (४०) कर्षणादि प्रतिष्ठान्तक्रियाः

२. ततः षड्भिः (६) पटलैर्नित्यनैमित्तिकार्चना।

३. ततः त्रिभिः (३) पटलैः स्नपनम्।

४. ततः एकादशाभिः (११) पटलैः उत्सवादि।

५. ततः एकोनविंशत्या (१९) पटलैः प्रायाश्चित्तम्।

६. ततः एकेन (१) पटलेन अग्निकुंडाद्यधिदेवताः।

७. ततः चतुर्भिः (४) पटलैः अनुष्ठानप्रकारः।

८. ततः शेषैः चतुर्दशाभिः (१४) ज्ञातृज्ञेयादितत्व, मोक्ष, तत्प्रभेद, तदुपायादि।

९. ततः एकेन (१) पटलेन ग्रंथसंख्या च निरूप्यन्ते॥

ॐ

# श्रीनिवासपरब्रह्मणे नमः

## श्रीमद्विखनसमहागुरवे नमः

## अविघ्नमस्तु

(शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्याये त्सर्वविघ्नोपशान्तये ॥ १ ॥

वन्देश्रीनयनोत्पलस्य शशिनं शेषाचलाऽधीश्वरं-
ब्रह्माद्यर्चितपादपद्मयुगलं लोकैकनेत्रोत्सवम् ।
वासिष्ठैः सनकादिभिर्मुनिगणैः संस्तूयमानंसदा-
भक्तानामखिलार्थदायिनमहं श्रीवेङ्कटेशं (गुरु) परम् ॥ २ ॥

हैमोर्ध्वपुण्ड्रमजहन्मकुटं सुनासं
मन्दस्मितं मकरकुण्डलचारुगण्डम् ।
बिम्बाधरंबहुलदीर्घकृपाकटाक्षं
श्रीवेङ्कटेशमुखमात्मनि सन्निधत्ताम् ॥ ३ ॥

श्रियःकान्तायकल्याणनिधयेनिधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम्) ॥ ४ ॥

(कोटिमन्मथलावण्यं सर्वगन्धर्वसन्निभम् ।
श्रीरुक्मणीप्राणनाथं वन्दे श्रीकृष्णदैवतम् ॥ १ ॥

श्रुतिस्मृतिनदीपूर्णं शास्त्रकल्लोलसंकुलम् ।
विष्णुभक्त्युदकंशुद्धं वन्दे श्रीविखनोऽर्णवम्) ॥ २ ॥

### मरीचिंप्रतिऋषिप्रश्नः

श्रीमरीचिंमहामुनिं स्वशिष्याऽर्पितकुशाऽऽसने समासीनं सर्वज्ञं जितेन्द्रियं शुद्धं नानालोकनिवासिनों धर्मसंसक्ता (संयुक्ता) ऋषयः समाऽऽगम्य, आनम्य, 'भगवन् केनमार्गेण कैर्मन्त्रैः कं देवमर्चयन्तः कान् लोकान् गमिष्यन्ति' इत्यूचुः ।

## मरीच्युक्तमुत्तरम्

मरीचिरुवाच-सुप्रसन्नं परमात्मानं नारायणं ध्यात्वा अभिवन्द्य श्रुत्यनुकूलेन मार्गेण चतुर्वेदोद्भवैर्मन्त्रैः तमर्चयन्तः श्रुतिभिरभिहितं शाश्वतम् अतीन्द्रियं परात्परतरं देवैरनभिलक्ष्यं तद्विष्णोः परमंपदं गच्छेयुः (प्राप्नुवन्ति) इति।

## विष्णोः सर्वोत्तमत्वे श्रुतिः

श्रुतिस्तावत् "विष्णु (र्वै) सर्वादेवताः, ( ) पुरुषएवेदंसर्वम्, (ऋ०स०८-४-१७) सब्रह्मासशिवः सेन्द्रः (तैत्ति० आ०८-२६) एषब्रह्माएषइन्द्रः एषप्रजापतिः एषसर्वादेवताः, ( ) अग्निर्वै देवानामवमः विष्णुः परमः तदन्तरेणसर्वा अन्यादेवताः, (ऐत० ब्रा० १-प० १-अ० १) यस्मात्परंनाऽपरमस्ति किंचित् यस्मान्नाणीयोनज्यायोऽस्तिकश्चित् वृक्षइवस्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेणसर्वम् (तै०उ०४) (परंब्रह्म) परंज्योतिः आपोज्योतिः") इति।

## विमानार्चनपदनिरुक्तिः

तस्मात् - परंब्रह्मपरंज्योतिरक्षरं सर्वभूतात्मकं सर्वाऽऽधारं सनातनं परमपुरुषमर्चयेत् - तत् - विमानाऽर्चनम्।

## अर्चनफलम्

ग्रामाऽग्रहारयो र्निवासिनाम् अनाहिताऽग्नीनां सामान्य मग्निहोत्र-फलदम्, आहिताऽग्नीनां सर्वनिष्कृति होमार्थं, सर्वसमृद्ध्यर्थं च भवेत्।

## तद्विधिपूर्वकं विखनसोक्तस्य विस्तरेण कथन प्रतिज्ञा

तस्मात् - 'अग्नौनित्यहोमान्ते विष्णोर्नित्याऽर्चा गृहे देवायतनेवा भक्त्या भगवन्तं नारायणमर्चयेत्' इति विखनसा सूत्रे समासेनोक्तं तदव (दहम) शेषविशेषेण समन्त्रकंसप्रयोगं क्रियामार्ग क्रमेण विस्तरतो वक्ष्यामि।

## आघारादीनां गृह्येद्रष्टव्यता

तस्मात् यत्र यत्र होमो(म)विधानं तत्र तत्र अग्न्याऽऽघा-रस्विष्टकृत्प्रभृत्यन्तहोमाश्च अस्य मन्त्राः वैखानस सूत्रे द्रष्टव्याः।

## भगवदर्चनेश्रुतिः

तस्याऽर्चने श्रुतिः- "प्रवः पान्थमन्धसोधियायते महे शूराय विष्णवेचाऽर्चत, (ऋ०स०२-३-२६) धृतोर्ध्वपुण्ड्रः परमीशितारं नारायणं पूजयतिस्म भक्त्या, अर्घ्यादिभिः पुरुषसूक्तमन्त्रैः संप्राप्नु याद्विष्णुपदं महात्मे" ति।

## ध्यानाद्भगवतः सकलत्वाऽभिव्यक्तिकथनम्, तदाराधनस्य फलकथनम्

पद्मकोश प्रतीकाशे विश्वस्याऽऽयतने पृथौ, हृदयेऽग्निशिखा परमात्मानं व्यवस्थितं ध्यानेन पश्येत्। यथा आकाशगतोवायुः विहरणेन सन्निहितोभवति, तथातत्र अचलंमनः कृत्वा तद्भक्त्या तेजोभासुरं रुक्मवर्णं रक्ताऽऽस्यं शुचिस्मितं ज्योत्स्नाऽवभासिताऽधरपल्लवं रक्तनेत्रं सुस्निग्धतनुं शंखचक्रधरं मकुटहारकेयूरादिभूषणैर्भूषितं सकलं शाश्वतं सर्वभूतेषु अशरीरमवस्थितम् अतिसूक्ष्मम्, अनिर्देश्यम्, अतिमात्रम्, अतीन्द्रियम्, अव्यक्तं प्रकृतेर्मूलम्, अनादिनिधनम् अखिलजगत्सृष्टिस्थितिलयकारणम् अचिन्त्यं निर्गुणम् अप्रमेयम् अप्रमत्तं सत्तामात्रमितिज्ञात्वा ध्यायेत्।

तद्ध्यानकथनसंकल्पनात् सकलोभवति, भगवदाराधनेन ऊर्ध्वगतिर्भवति।

## आचार्यादिवरणम्

तत्रसर्वकार्योपदेशकं वैखानससूत्रोक्तनिषेकादि संस्कारैः संस्कृतम् आचार्यम्, अर्चकपरिचारकस्थापकादीनृत्विजश्च वरयेत्।

## आराधनस्यभेदः प्रतिमार्चनस्य सहेतुकंश्रैष्ठ्यम्

तदाराधनंद्विविधम् - अमूर्तंसमूर्तमिति अग्नौहुतममूर्तम्, प्रतिमाराधनंसमूर्तम्, तच्छ्रेष्ठं यजमानाऽभावेऽपिअविच्छिन्नंभवति।

## विमानार्चनस्य फलजनकत्वम्

तद्विमानाऽर्चनं सर्वक्रतुफलप्रदं सर्वकामप्रदंचेति ब्रह्माचाऽशं सत्। तस्मात्क्रमेण क्रियामार्गं विस्तरतो वक्ष्यामि, तदवहितमनसः श्रृणुध्वमित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानाऽर्चनाकल्पे ऋषिप्रश्नोत्तरं नाम प्रथमः पटलः ॥१॥

# अथ द्वितीयः पटलः

## विशिष्टाऽऽचार्यवरणम्

अथ आलय भूपरीक्षादि समारम्भकालात् पूर्वस्मिन् यजमानः आचार्यं सर्वकार्योपदेशक वैखानस सूत्रोक्तविधिना निषेकादिसंस्कारैस्संस्कृतं विप्रं वेदविदं नित्यस्वाध्याययुतं गृहस्थं पत्न्यपत्ययुतं दयादिगुणैर्युक्तं शुभलक्षणैर्युक्तं भूपरीक्षादि सर्वक्रियामार्गज्ञं ज्ञानयोग विदंजितेन्द्रियं नित्यध्यानपरं निश्चलं नित्याऽर्चनपरं वैष्णवं भक्तिमन्त मेकं वरयित्वा ऽभिवन्द्य संपूज्य याचयेत् ।

## भूपरीक्षाविधिः, तत्कालश्च

आचार्यो यजमानेन भूमिंसम्यक्परीक्षयेत् यथेष्टमासे शुक्लपक्षे कृष्णपक्षे त्रिधाद्यके वा, कर्तुरनुकूलर्क्षे भूपरीक्षां कारयेत् ।

## अंकुराऽर्पणपूर्वं निमित्तदर्शनविधिः

तद्दिनात्पूर्वे अंकुरानर्पयित्वा हर्म्याऽऽगारादि शिल्पिशास्त्रज्ञं लक्षण-संपन्नं शुद्धमरोगिणं कुशलं शिल्पिनं आहूय, वैष्णवैस्सार्धं 'प्रीयतांभगवा' निति देवेशं प्रणम्य, देवंध्यायन् 'विष्णुर्मारक्षतु' इत्यात्मरक्षांकृत्वा सर्वालंकार संयुक्तां दीपांबुजकरकां कन्यां पुरस्कृत्य, तंदेशंप्रविश्य, प्रदक्षिणंकृत्वा, शकुनान्युपलक्षयेत् ।

## भूपरीक्षापूर्वं मृत्संग्रहः

चतुरश्रामायताश्रां वा, प्रागानतामुत्तरानतां समां वा भूमिं, शब्दस्पर्शरूपरसगन्धैस्संपरीक्षयेत् । वीणावेणु दुन्दुभिगजतुरंगवेदाब्धिध्वनियुतां, सुखस्पर्शां, श्वेतपीतरक्तकृष्णवर्णाभां, मधुराम्लतिक्तकटुकषायलवणरसां सुगन्धसंयुक्तां, प्रदक्षिणोदवर्तीं, क्षीरवृक्षतुलसीकुशदर्भ - विश्वामित्र-

विष्णुक्रान्तस्थलारविन्ददूर्वायुतां भूमिं, सुमुहूर्ते गृहीत्वा, आचार्यः प्राङ्मुख, उदङ्मुखो वा नीत्वा यस्मिन्देशे 'जीवन्त' इति जलं प्रक्षिप्य, मेदिन्यादिनाहस्ताभ्यांभूममभिमृशेत् 'इदंविष्णु' (ऋ० १-२-७) रित्याहरेत् ।

## त्याज्यभूमिकथनपूर्वं निमित्तदर्शन प्रकारः

नपुंसक वृक्षाऽऽढ्यं मूष-कपालाऽस्थि-पाषाण शर्कराऽऽकीर्णं, वल्मीकपतंग-कूप-भस्मां-गार-तुष-केशाऽन्विताम् अन्त्यजादिभूयिष्ठां भूमिं त्यजेत् । पूर्वोक्ते देशे हस्तायतविस्तारावगाढं खनित्वा, तदवटे तां मृदं प्रक्षिपेत्, अधिके महतीं वृद्धिं, हीने हानिं, समे समं, विद्यात् ।

## निमित्ताऽन्तर दर्शनपूर्वं कार्यारम्भविधिः

अथाऽन्यैर्निमित्तैस्संलक्ष्यकार्यमारभेत् ।

## ग्रामादौचतुः षष्ठ्यादिभागकरणपूर्वं विष्ण्वर्चनविधिः

ग्रामादिष्वेवंविधाय, चतुष्षष्टिपदमेकाशीतिपदं षट्पञ्चाशदुत्तरद्विशतपदं वा कृत्वा, तन्मध्यं ब्रह्मभागं चतुर्धाकृत्वा, तद्वायव्यांशे पश्चिमे पूर्वे वा मध्यसूत्रादुत्तरे दक्षिणे वा, तत्सूत्रं देवस्य दक्षिणपादपार्श्वं प्रासादप्राकाराणां भित्तिं वा समाश्रितं, एवं संकल्प्य, देवेशं विष्णुं नवषट्पञ्चमूर्त्तिविधानेन प्रतिष्ठाप्य अर्चयेत् ।

## ऐशान्यादिषु शंकरादिभवनम्

ऐशान्यां शंकरभवनं प्राङ्मुखं, वारुणे देवेशं प्राङ्मुख मासीनं स्थितं वा आदित्यांशे भास्करालयं प्रत्यङ्मुखं, याम्ये विन्ध्यवासिनीं प्राङ्मुखीं, भूतेशे विघ्नेशं, सुग्रीवे षण्मुखं, अदितौ मातृकोष्टं पराङ्मुखं, जयंते, दौवारिके वा, कृष्णस्याऽऽलयं, पुष्पदन्ते, शोषणे वा, राघवस्याऽऽलयं, महेन्द्रे महामत्स्यं सत्यके कूर्मस्याऽऽलयं, नैर्ऋते वाराहं, जवने वा अन्तरिक्षे वा नारसिंहं, (रोहिणे) नागे वामनं, त्रिविक्रमं च, गन्धर्वे बलभद्रं, मुख्ये परशुपाणिं, सूरिदेवे कल्किनम्, सोमेशयानं, ग्रहक्षते दैविकं वासुदेवं, वितथे मानुषं वासुदेवं, उष्णाशालादिमूर्त्तिं भृंगराजे, ग्रमाद्बाह्ये वा पञ्चवीराणां स्थानम् ।

### ग्रामादौ तत्प्रेक्षमूर्ति स्थापनविधिः

ग्राममध्ये बाह्ये दिक्षु विदिक्षु वा सर्वत्र स्थितमासीनं शयानं यानकं वा, ध्रुवकौतुकं, ध्रुवार्चां वा, ग्रामप्रेक्षमेव कारयेत् ।

### ग्रामाद्बाह्येविप्राऽऽवासस्थले नदीतीरादौ वा

ग्रामाद्बाह्येऽपि यत्र विप्रैर्वस्तव्यं तत्रैव मध्ये दिशासु विदिशासु च देवं, देवीभ्यां सहितं वा, संस्थापयेत्। वन नद्यद्रिसमुद्रपार्श्वे अन्यत्र तटाकाऽऽरामसमीपे विविक्तदेशे वा ।

### आलयद्वारस्योत्तमोत्तमत्वादिकम्

प्राग्द्वारमुत्तमोत्तमं, पश्चिमद्वारमुत्तमं, दक्षिणद्वारं मध्यमम्, उत्तरद्वारमधमम् ।

### एकाऽनेकमूर्तिविधानम्

सहस्रविप्राऽधिकग्रामादौ मध्ये विष्णुमनेकमूर्ति विधानेनाऽर्चयेत्, अशक्तश्चेदेकमूर्तिविधानेनवा । तन्न्यूने पञ्चविंशतिद्वयादर्वागपि पञ्चमूर्तिं प्राङ्मुखं, प्रत्यङ्मुखम् अनेकमूर्तिं वा, अन्येषां नगर्यादीनां पश्चिमे च एकमूर्तिविधिना विष्णुंप्रतिष्ठाप्याऽर्चयेदित्याह मरीचिः ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे भूपरीक्षा ऽऽलयदेशविधिर्नाम द्वितीयः पटलः ॥२॥

## अथ तृतीयः पटलः

अथ ग्रामादिवास्तुभेदः- ग्रामा-ऽग्रहार-नगर-पत्तन-खर्वट-कुटिक-सेनामुख-राजधानी-शिबिरा इति भेदाभवन्ति ।

### ग्रामादीनां स्वरूपम्

विप्राणां सभृत्यानां निवासो ग्रामः विप्रमुख्यानां अग्रहारः अनेकजन संबाधमनेकशिल्पि क्रयकविक्रयकाऽधिष्ठितं सर्वदेवता संयुक्तं नगरम्, द्वीपान्तरगतद्रव्य क्रयकविक्रयकाऽधिष्ठितं पत्तनम्, उभयसंमिश्रं खर्वटं, सपरिवारकैकग्रामणीकं कुटिकं, सर्वजातिसमाकीर्णं नृपवेश्म समायुक्तं

सेनामुखं, चतुरंगसमाकीर्णा नृपतद्भृत्यजुष्ठा राजधानी, नृपसेनाचमूनाथनि-वेशनं शिबिरमिति।

## ग्रामाऽग्रहारयोः प्रभेदः

तत्र ग्रामविन्यासं प्रागग्र मुत्तराग्रंवा, एकवीथिकं दण्डकम्, प्राङ्मुखं, द्विवीथिकं करीदण्डकं, नीलाऽऽनिलेशाऽनलपुच्छकं, दक्षिणादि चतुर्वीथिकं, स्वस्तिकं, सदेवं सतृतीयद्विवीथिकं नन्द्यावर्त्तं, सदीर्घक्षुद्र-वीथिकं पद्मवीथिकम्, प्रागग्रानलवीथिकं चतुष्पदञ्च, षट् सप्ताऽ (ष्टनवा ऽधिकदशाऽ) न्यतमक्षुद्रवीथिकं प्रकीर्णकम्, एकद्वित्रिचतुः पञ्चाधिक-विंशद्वीथिकम् उत्कीर्णकम् इति ग्रामाऽग्रहारयो र्विन्यास भेदः ।

## दण्डके - स्वस्तिकादिषु च देवपदादिनिरूपणम्

तत्रदण्डके पश्चिमे प्राङ्मुखम् उत्तरे दक्षिणामुखं वा, स्वस्तिकादिषु (पश्चिमे) पैशाचाऽभ्यन्तरे, बाह्येवा, ब्रह्मसूत्रादुत्तरे, श्रीवत्सादिषु ब्रह्मपदवायव्ये पञ्चमूर्तिविधानेन देवेशं विष्णुं संस्थापयेत्, दिशासु, विदिशा सुच, यथा दक्षिणदृष्ट्याग्रामं पश्येत्, तथाग्रामाऽभ्यन्तरे ग्रामाऽधिक्यमुखं च संस्थापयेत्, तद्धरिदृष्टिः शुभदा, हरपृष्टश्च शुभदः, सर्वत्र वाराहनारसिंह-वामन (राम) कृष्णान् ग्रामप्रेक्षकानेव संस्थापयेत्, ग्रामादिषु षट्-पञ्चाशद्द्विशतपदेषुपैशाचं परिहृत्यैव देवेशं संस्थापयेत्, अन्येषु पश्चिमेपैशाच बाह्ये विष्णोरालयं कुर्यात्, अभ्यन्तरे तान्त्रिकेण विधिनाऽर्चयेत् न वैदिकेन, प्रतिलोमान्तरालव्रात्यावासेषु नैवंविष्णुप्रतिष्ठापयेत्, श्रीवत्सादीनां वितथभृंगराजभल्लटाऽदिति महेन्द्रेषु निर्गमं कारयेत् । अविहितपदनिर्गमः, अन्यवास्तु संप्रेक्षणं, ग्रामयजमानयोराशुविनाशाय-भवति।

## आयादि निरूपणम्

व्यासाऽऽयामसमूहे, अष्टगुणिते नैकभक्ताऽवशिष्टमायं, त्रिगुणिते मनुभिर्हृतावशिष्टं व्ययं, अष्टभक्ताऽवशिष्टं योनिः, अष्टगुणिते सप्तविंशतिहृते फलं, यच्छिष्टम् ऋक्षं, नाहे त्रिंशद्धृते अवशिष्टं तिथिः, सप्तभक्ताऽवाशिष्टं वारं (व्ययाऽधिक कोणयोनौ नवभिर्गुणिते सप्तभिर्हृताऽवशिष्टं वारं) चतुर्भिर्गुणिते नवभिर्हृतमंशकम्, राजयजमा नयोः विपद्वधप्रत्यराऽन्त्य-वैनाशिकशशांकाऽष्टमाऽमर्त्याऽसुरर्क्षयोग - तिथिवारयोगदोषं क्रूरवारं च

परिहृत्य रिक्ता मध्याऽन्तरिक्तं कुर्यात् । क्रूरवाररिक्तादयोपि सिद्धाऽमृतवार-योगाः शुभाः, कर्तृवास्तुनक्षत्रपत्योरैक्ये, मैत्रेच, विपदादयः शुभाभवन्ति ।

## गृहश्रेणी निर्माणदेशः सहेतुकं पूजाविहीनग्रामे वासनिषेधः

वास्तुपुरुषमर्मसूत्रपातान् परिहृत्य देवताऽऽलय प्राकारसंश्लिष्टां गृहश्रेणीं कुर्यात्, विष्णुपूजाविहीने विप्रोनजात्वपि वसेत्, तत्र तामस भावात्, तत्र ग्रामाऽभ्यन्तरे देवं संस्थाप्य, महतीं पूजां (विविक्ते) वैदिकेनविधिनैव कारयेत्, सौम्यत्वात्, भुक्तिमुक्तिफलप्रदत्वाच्च, तद्विधेः ।

## अर्चकादीनां स्थानम्

तदर्चकानां तत्पार्श्वेस्थानं, नाभ्यैशान्यां सभास्थानम्, आग्नेय्यां गोष्ठागारम्, नैर्ऋत्यामापणम्, पैशाच बाह्ये प्राच्यां कुलालोर्ध्वनापितां ऽबष्ठानाम्, याम्ये तन्तुवायचक्रिणाम्, वारुणे क्रयविक्रयकारिणां वणिजाम्, सौम्ये द्विजभृत्यानां, वादित्रजीविनांच, आग्नेय्यां क्रोशमात्रे तक्षकादीनाम्, नैर्ऋते गव्यूतिमात्रे चण्डालपक्कणम्, वायव्ये मृगव्याध शाकुनिकाऽधोना-पितानाम्, पैशाचाद्बाह्यतः प्राकारपरिधे ऐशान्यां, नदी तीरे वा, दूरे श्मशानं ग्रामायामसमम्, वारुण्यां तटाकं त्रिदण्डसहस्रम्, अर्धंतदर्धं वा, सेतुबन्धंदृ-ढतरमत्युन्नतमनवछेद्यं, तत्र निर्झरोपकूल्या महाकुल्यादिजल यन्त्राणि च सम्यक् प्रकल्पयेत् ।

## वास्तुविषमविन्यास निषेधः

अनुगतकर्मण्यगर्भदैवतं वास्तुपरितो वर्धयति समं, नैवविन्यासभेदः क्लुप्तवास्तु विपर्यासो राजराष्ट्रग्राम यजमानानामाशु विनाशाय भवति ।

## वास्तुवशात्प्रासादादि निरू

वस्त्वंगवास्तुपरिकल्पने यजमानाऽनुकूलं ध्रुवबेरम्, तद्द्विगुणं, त्रिगुणं, चतुर्गुणं वा, प्रासादतारं, तं मुनिरस शर भागेत्वेकविहीनाधिकं, द्विगुणं, त्रिगुणं, साष्टांऽशाद्विगुणं वा, पञ्चधोत्सेधम् तद्वशात् प्राकारा दीनि परिकल्प्य तद्विमाननिर्देशहस्तदण्डेन परितः त्रिपञ्चसप्तनवान्यतमविस्तारां वीथिं समुपकल्प्य, परितस्तद्वर्णावसानपरिकल्पित त्रिदण्ड निर्गमां शालां

वस्त्वभिमुखामेव कल्पयेत्, विमाननिर्देशहस्तादिदण्ड मानेनैव विन्यसेत्, अन्यत्सर्ववस्त्वङ्गवास्तुवद्दण्डछेदं परिहृत्य, ग्रामादिकं हस्तछेदं परिहृत्य, गृहादीनि च कल्पयेत्, वस्त्वंगवास्तुवीथ्यां प्रतिलोमाऽन्तरालव्रात्यान्, नैवकल्पयेत्, चतुर्वीथिकमुत्तमं, त्रिवीथिकं मध्यमं, द्विवीथिकमधमम्, एकवीथिकमितिकेचित्, अनुकर्मणि वस्त्वं गवास्तुनस्समं समन्ताद्वृ-द्धिरिष्टा, वास्तु वस्त्वंगविन्यासौ संकीर्णौ नैवकारयेत्।

## कर्षणकालः युगादिलक्षणम्

अथोर्ध्वंवक्ष्ये कर्षणविधिम् - मार्गशीर्षादिद्वादश मासेषु उद्दिष्टमासे, शुक्लपक्षे, यजमानाऽनुकूलर्क्षे, यत्र देवाऽऽलयं कुर्यात् तत्र त्रिकराद्येकोन-षष्ठिकरान्तम् यथेष्टं शक्त्या विमानं, समण्टपं, सप्राकारं, चतुर्दिशं सीमां विनिर्णयति, अत्रतृणगुल्मलतादीन् संशोध्य, उन्नताऽवनतं समीकृत्य, युगलांग (ह) लादीन्याहरेत्, युगंवैणवं, द्विषट् प्रादेशं तथा खदिरेण क्षिणियमसनेपञ्चतालं, हलंशिरीषेण चतुस्तालम् ऋषिं पञ्चप्रादेशम्, अंगुलपरिणाहंप्रतोदं शेषं युक्त्यैवकारयेत्।

### कर्षणप्रकारः

मौञ्जीं त्रिवृतां रज्जुमाहृत्य, वृषौ, श्वेतौ, रक्तौ, कृष्णौ वा, न मिश्र वर्णौ, संपूर्णाऽगौ, सुमुखावरोगिणौ, निरुष्टौ सुवर्णश्रृंगौ रौप्यखुरौच कृत्वा, सर्ववाद्यसमायुक्तं यजमानो गुरुश्च वैष्णवैस्सार्धं तां भूमिं संप्रविश्य, तत्र पश्चिमे प्रपां कृत्वा, तन्मध्ये विष्वक्सेनं प्राङ्मुखं, दक्षिणे चक्रम्, उत्तरे वीशं च, धान्यपीठे समावाह्य, मुद्गान्नं गरुडस्य, अन्ययोः शुद्धाऽन्नं निवेद्य, अभिमुखे वृषौ प्राङ्मुखौ संस्थाप्य, तृणमुष्टिं प्रदाय, आचार्यो यजमानेन वस्त्रोत्तरीयाभरणै रभिपूजितो गृहीत दक्षिणो, मौञ्जीरज्जुं गृहीत्वा, वृषौ 'रुद्रमन्य' मितिबन्धयेत् 'त्र्यंबक' (ऋ. सं. ५-४-३०) मितियुगं, लांगलंच, वैष्णवं मन्त्रमुच्चार्यतां भुवं पश्चिमादि त्रिरेखं कर्षयेत्।

## बीजाऽऽवापादिकम्

पश्चात् कर्षकमाहूय अलंकृत्य, सर्वामपिबहुशः कर्षयित्वा, बीजानिच वापयित्वा, सर्वान् व्रीहीन् वापयेत्, उत्तमं षाष्ठिकम्, प्रियंग्वादी (दि)न् मध्यमम्, मुद्गसर्षपादी (दिअ) नधमम्, अस्मिन्सोममभ्यर्च्य विष्णुसूक्तेना-

ऽभिमृश्य, 'सोमं राजानं' वैष्णवं चोक्त्वा, नैर्ऋतादि (षु) सर्वत्र वापनं कृत्वा, वारुणैर्मन्त्रैर्जलसेकं कृत्वा, पश्चाद्रक्षां विधाय, प्रासेषु सर्वसस्येषु पश्चिमे पूर्ववद्विष्वक्सेनादीन् समाराध्य, हविर्निवेद्य, गाश्च तत्र समानीय, आनम्य, ('आगोदाना' दिति) गोदानसूक्तेन तानि सस्यानि गोगणेभ्यो निवेदयेत् ।

## बीजावापं विनापि-पद विभागकल्पनम्-पददेवता निरूपणम् - तत्पूजनम् - तत्रउत्तमत्वादिकम्

अथवा त्वरितः, कालयापनभीत्या वा, कर्षणं कृत्वा, पलालभाराणि (न्) दूर्वा (णि) तृणानि वा आस्तीर्य, तथैव गोगणेभ्यो निवेदयित्वा, (तां) भूमिं संशोध्य, समांकृत्वा, प्रागन्तैश्चोत्तरान्तैश्च दशाभिस्सूत्रैः एकाशीतिपदविभागं कृत्वा, तन्मध्ये नवभागं ब्राह्मं, तत्प्राच्यामर्यम्णषड्भागं, तद्दक्षिणे षट् दण्डधरस्य, तथा पश्चिमे षट् पाशभृतः तथाधनदस्योत्तरेषट्, आग्नेय्यां सवितृसावित्रयोः द्वौ पदौ, तथा नैर्ऋत्यां इन्द्रेन्द्रानुजयोश्च, वायव्ये रुद्ररुद्राजयोश्च, तथा ऐशान्याम् अपापवत्सयोश्च, प्रत्येकं द्वौ द्वौ, तद्बहिश्चैशान्यादि ईशं पर्जन्यं जयन्तं महेंद्रम् आदित्यं सत्यकं भृशम् अन्तरिक्षम् अग्निम् उष्मांशुं पूषणं वितथं गृहक्षतं यमं गन्धर्वं भृंगराजम् ऋष्टिं (षिं) निर्ऋतिं दौवारिकं सुग्रीवं पुष्पदन्तं सरित्पतिम् असुरं शोषणं योगं जवनं नागं मुख्यं भल्लाटं सोमम् अर्गळम् अदितिं सूरिदेवं च द्वात्रिंशद्देवताः पृथक्पृथगेकपदाधिपानभ्यर्च्य, एतेषां पञ्चचत्वारिंशद्देवानां प्रत्येकंद्विप्रस्थैस्तण्डुलैश्चरुं पत्का, गुल(ड) घृतदधियुक्तमुत्तमं, ब्रह्मणोऽर्यमादीनां चतुर्णांसावित्र्याद्यष्टानां मध्यमं, ब्रह्मण एकस्याऽधमम्, अन्येषां द्रोणैस्तण्डुलैरेकपात्रे चरुंपत्का, तत्तन्नाम्ना पूर्वमुदकं पुष्पं पश्चाद्बलिमुदकं दत्वा, पुष्पादीन् संशोध्य ।

## गर्भालयप्रदेशे पञ्चविंशति सूत्रसन्धौ देवतापूजा विधिपूर्वक पुण्याहविधिः

गर्भालयप्रदेशे प्रागन्तैरुत्तरान्तैः पञ्चभिस्सूत्रैः षोडशभागंकृत्वा, तत्सूत्रसन्धौ ईशानादि नागं भूतं यशं दुर्गां घोटमुखीं धात्रीं वपुषं राक्षसं जयं कृष्णं मुरुंडं शिवं प्राणं कपिं शक्रं पुरुहूतं विद्यां यशसं भद्रां वेदश्रुतं

तापसं सिंधुषां विद्याम् अमितं पाञ्चभौतिकं च, एतेषाम् एकपात्रे द्रोणाघ्रैस्तण्डुलैश्चरुंपक्त्वा, तत्तन्नाम्ना पूर्ववद्बलिं दत्वा, पुण्याहं वाचयेत् ।

### अशक्तविषये बालाऽऽलयंविनापि देवप्रतिष्ठाविधिः

अशक्तश्चैवं शुद्धिं कृत्वा तरुणालयं विना विमानंध्रुवबेरं कौतुकाद्यं च कृत्वा, प्रतिष्ठां कारयेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे पददेवता बलिविधिर्नाम तृतीयः पटलः ॥३॥

## अथ चतुर्थः पटलः

अथ प्रथमं तरुणाऽऽलयं वक्ष्ये --

### तरुणाऽऽलय देशनिरू०

यत्र मूलाऽऽलयं कुर्यात्, तस्मादैशान्येचैन्द्रसूत्रादुत्तरे, सौम्ये, वायव्ये, त्रिहस्तादि त्रित्रिहस्तान्तं तरुणालयं, द्वितीयाऽऽवरणे, तृतीयेवा, समारभेत ।

### तरुणाऽऽलय निर्माणविधिः

भित्तिमूलविशालं मात्राङ्गुळेन द्वितालं त्रितालं, चतुस्तालं वा, तदवशेषं नालीग्रहविशालं, समं, त्रिपादम्, अर्धंवा, मुखमण्टपं यथा मूलालयद्वारं तथा तरुणालये, मृण्मयलेपोपरिष्ठात् तृणाऽऽच्छन्नंलोष्टाऽऽच्छन्नं वा कृत्वा, अत्रानुक्तं सर्वं, द्वितीयतरुणालयस्योक्तविधिना कारयेत् नैवशिलेष्टकादिभिः, तन्मध्ये द्विवेदिसहित मर्चापीठं च कृत्वा, पश्चात् बालबेरं कारयेत् ।

### बालबेर-द्रव्य बेराधिवासादि निरूपणपूर्वं यागशालाधिविधिः

खदिराऽसनचम्पकाऽर्जुन पनस वकुळ मधूकाऽश्वत्थ बिल्व शमीनामन्यतमं, विधिनाऽऽहृत्य, शोषयित्वा त्वचं व्यपोह्य, मानाङ्गुलेन सप्तांगुलं, नवांगुलं, एकादशांगुलं, त्रयोदशांगुलं वा, देवीभ्यां सहितं रहितं

वा देवं, सलक्षणं, स्थित मासीनं वा, कृत्वा, स्थापन दिवसात्पूर्वं विधिना अंकुरानर्पयित्वा, अक्ष्युन्मोचनं कृत्वा, अधिवास्य, बालालयाभिमुखे, दक्षिणे वा, यागशालां कृत्वा, तोरणाद्यैरलंकृत्य तन्मध्येशय्यावेदिं द्विहस्तायतविस्तारां, तत्तुरीयोत्सेधां, तत्प्राच्यां सभ्याग्निकुण्डं, तत्प्राच्यामैशान्यां वा स्नानवेदिं च कुर्यात् पञ्चाग्नीन् कल्पयेदित्येके ।

## बालालयप्रतिष्ठाविधिः

बालालयस्योत्तरे वैखानससूत्रोक्तविधिना वास्तुहोमं हुत्वा, पर्यग्निपञ्चगव्याभ्यां शोधयित्वा, पुण्याहं वाचयेत् सभ्याग्निकुण्डे वा आघारं हुत्वा आलयाभिमुखे देवं संस्थाप्य, अभिमुखे कुम्भं, द्रोणद्वयपूर्णं, खण्डस्फुटितकालरहितं, त्रिगुणेनैकेन वा सूत्रेण, वैष्णवमंत्रमुच्चार्य, प्रदक्षिणमावेष्ट्य 'शुचीवोहव्या' इति प्रक्षाल्य 'धारासुसप्त' स्वित्यपामुत्पवनं कृत्वा, कुम्भजलेन 'नमस्सुलो' मीत्यापूर्य, 'इदमाप शिवा' इति अपोऽभिमन्त्र्य, चन्दनोशीराद्यैर्वासयित्वा, वस्त्रयुग्मेनाऽऽवेष्ट्य, सौवर्णान्यष्टमंगलपञ्चायुधवर्ण चिह्नानि, नवरत्नकुशकूर्चांश्च, पृथक् पृथक् विष्णुगायत्र्या क्षिप्त्वा, धान्यपीठेकुम्भं सपिधानं सन्यस्य, आचार्यश्चोत्तराभिमुखोभूत्वा, ब्राह्ममासनमास्थाय, प्रतिष्ठोक्तक्रमेणध्यायन् कुम्भेसमावाह्य, पश्चाच्छकुनसूक्तं समुच्चार्य कुम्भं बिम्बं च समादाय, स्नानश्वभ्रे प्रतिष्ठाप्य, चतुर्दशकलशैः संस्नाप्य, वस्त्रोत्तरीयाद्यैर्विभूष्य, अष्टोपचारैरभ्यर्च्य, शय्यावेद्यां धान्योपरि पञ्चशयनानि, वासांसि वा आस्तीर्य, तस्यां देवं कुम्भं च, निवेश्य पुण्याहान्ते सौवर्णं तां तवं वा प्रतिसरं, 'स्वस्तिदाविशस्पति' (ऋ० सं०-६६-९०) रितिबद्ध्वा, 'यद्वैष्णव' (वै० दै० म०६) मिति देवं शयने शाययेत् ऊत्तराच्छादनं कृत्वा, अग्निं समुज्वाल्य वैष्णवं हुत्वा, हौत्रं प्रशंस्य, आवाहनजुष्टाकारस्वाहाकारान् कृत्वा, वैष्णवं, विष्णुसूक्तं, श्रीसूक्तं, महीसूक्तं सर्वदैवत्यंच हुत्वा, अग्निमानम्य, रात्रिशेषं व्यपोह्य, आचार्यः प्रभाते स्नात्वा, अगारं प्रविश्य आनम्य, देवमुत्थाप्य, अष्टोपचारैरभ्यर्च्य, प्रणमेत् ; यजमान आचार्यादिभ्यो दक्षिणां दद्यात्, मुहूर्त्ते समनुप्राप्ते स्थापकादेवमादद्युः, आचार्यः शिरसा कुम्भंधारयन् अग्रतो गच्छेत् ; सर्ववाद्यसमायुक्तं, स्तोत्रनृत्तगेययुक्तं, शीघ्रं विनोदं कारयेदिति केचित् शकुनसूक्तं समुच्चार्य, तोयधारापुरस्सरं प्रदक्षिणं कृत्वा, अभ्यन्तरं

प्रविश्य, शुभे चरराशौ, 'प्रतद्विष्णु' (ऋ० स० २-२-२४) रिति देवं संस्थाप्य, विष्णुसूक्तं पुरुषसूक्तं जप्त्वा, देवपादौ स्पृशन्, 'भूर्भुवस्सुव' रितिबिम्बस्य मूर्ध्नि, नाभौ, पादयोश्च, क्रमेण विन्यस्य, यकारं पादयोरन्तरेपीठे न्यस्य, अकारं हृदये न्यस्य, तं प्रणवैर्वेष्टयित्वा, कुम्भस्थां शक्तिम् 'इदंविष्णु' (ऋ० स० १-२-७) रिति मन्त्रेण कूर्चेनाऽऽदाय, 'आयातुभगवा' (वै० म० प्र६) निति बिम्बस्यमूर्ध्नि 'विष्णुमावाहयामी' तिसंस्राव्य, आवाहयेत् 'दक्षिणे श्रियं, वामे हरिणी' मित्यावाह्य पीठान्ते प्रागादि सुभ द्राद्यावरणत्रय-देवानावाह्य आसनाद्युपचारैरभ्यर्च्य, पुण्याहं वाचयित्वा, दक्षिणेब्रह्माणम्, उत्तरे मार्कंडेयं, वामे शङ्करं, पद्मापितरं, द्वारेषुधात्रादि द्वारदेवान् द्वारपालन् विष्वक्सेन गरुड श्रीभूतादि महाभूतान्तान् परिषद्देवान् नवभेदेषु एकमार्गेणाऽऽवाहयेत्, पायसं शुद्धान्नं प्रभूतं वा, निवेदयेत्, अन्यत्राऽऽवाहन विसर्जनं च हित्वा नित्यार्चनाविधानेन नित्यं सम्यगर्चयेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे बालालय प्रतिष्ठा-विधिर्नाम चतुर्थः पटलः ॥४॥

# अथ पञ्चमः पटलः

अथ नवषट्पंचमूर्त्ति तरुणालय विशेषं वक्ष्ये ।

## नवमूर्तिबालाऽऽलयविधिः

पूर्वोक्ते देशे तस्य प्राकारान्नातिक्रम्य नवहस्तायत विस्तारं तरुणालयं कृत्वा, तस्मिन्नेकाशीति विभागं कृत्वा, तन्मध्ये नवभागं गर्भागारं, तद्ब-हिष्षोडशभागमभ्यन्तर भित्तिः, तद्बहिः चतुर्विंशतिभागमलिन्दं, तद्बहिः द्वात्रिंश द्भागं बाह्यभित्तिः, तद्भित्तौ (चतुर्दिक्षु) चतुर्द्वार युतमेक द्वारयुतम्, अन्यासु जालकं वा, समं त्रिपाद मर्धंवा, मुखमण्टपं, गर्भागारं सप्त सप्त विभागं कृत्वा, ब्राह्मे विष्णुमूर्त्तिं, तत्पश्चिमे मानुषभागे तृतीय तले कौतुकस्य, द्वितालोच्छ्रायं पीठं कृत्वा, अलिन्दे द्वारदक्षिणे पुरुषमूर्त्तिं प्राङ्मुखम्, अलिंद्रे दक्षिणाभिमुखं सत्यं, तथापश्चिमे पश्चिमाभिमुख मच्युतं उत्तरे चोत्तराभि-मुखमनिरुध्दं, तदलिन्द्रे अनिरुध्दमूर्त्तेर्वामपार्श्वे द्वितीयतले वाराहमुत्तराभि-मुखम् अच्युतमूर्त्तेरुत्तरपार्श्वे पश्चिमाभिमुखं नारसिंहं सत्यमूर्त्तेः पश्चिमतो

दक्षिणाभिमुखौ नरनारायणौ च कृत्वा, एवं नवमूर्त्तिप्रतिष्ठाक्रमेण प्रतिष्ठापयेत् ॥

## षण्मूर्तिबालाऽऽलयविधिः

षण्मूर्त्तिप्रतिष्ठाचेत् - एवमेव बालागारं कृत्वा, वाराहं नारसिंहं नर-नारायणौ च हित्वा, विष्ण्वादि पञ्चमूर्त्तिं, तृतीयतलकौतुकंच, तत्क्रमेण प्रतिष्ठापयेत् ॥

## पञ्चमूर्ति बालाऽऽलयविधिः

पंचमूर्तिप्रतिष्ठाचेत्-तथैव बालागारं कृत्वा, तृतीयतले पञ्चमूर्तिकौतुकं वाराहादींश्च हित्वा, विष्ण्वादि पञ्चमूर्त्ती स्तत्क्रमेण प्रतिष्ठापयेत् ॥

## नवमूर्त्यादि बालाऽऽलय प्रतिष्ठाविधिः

एतेषां बालबेराणि पूर्ववत्कृत्वा, प्रत्येकमक्ष्युन्मेषाऽधिवासनादि-कृत्वा, आदिमूर्त्ते र्यागशालाभिमुखे तत्प्राच्यां पुरुषमूर्त्तेः तत्प्राच्यांतृतीयतले कौतुकस्य आलयाद्दक्षिणे सत्यमूर्त्तेः यागशालां, दक्षिणे नरनारायणयोः, आलयात्पश्चिमे अच्युतमूर्ते र्यागशालाम्, तत्पश्चिमे नृसिंहस्य, आलयादुत्तरे अनिरुद्धमूर्ते र्यागशालाम्, तदुत्तरे वाराहस्य च, एवं षोडश द्वादशाष्टचतुस्तंभयुक्तां कृत्वा, प्रत्येकं तोरणपूर्ण कुम्भवितानध्वजदर्भ-मालाद्यैरलं कृत्य, मध्ये शय्यावेदिं चतुस्त्रिद्विहस्तायतविस्तारां तत्तुरीयांशोत्सेधां चतुरश्रां च कारयेत्, आदिमूर्त्तेः पञ्चाग्नीन्पौण्डरीकाग्निं चकृत्वा अनन्तशयनस्यनृसिंहस्य गार्हपत्यं, नरनारायणयोः पौण्डरीकं कारयेत् । आदिमूर्त्तेः शयानस्यच प्रत्येकं सभ्याऽग्निमेकमेव कारयेदिति केचित् । तत्तद्यागशालायां प्रत्येकंस्नान श्वभ्रंचकृत्वा, आलयस्योत्तरे वास्तुहोममेकमेवकृत्वा, गर्भागाराणि पर्यग्निपञ्चगव्याभ्यां संशोध्य, पुण्याहं वाचयित्वा, सर्वेष्वग्निकुण्डेषु आघारं हुत्वा, आचार्यः तद्बेराऽभिमुखे प्रतिष्ठोक्तविधिना कुम्भान् संपूज्य, आवाह्य, सप्तभिः कलशै र्बेराणि संस्नाप्य, तत्तद्वेद्यां धान्योपरि 'वेदाह' मित्यण्डजादीनि पञ्चशयनानि, वासांसिवाऽऽस्तीर्य, सर्वान् देवान्तत्तत्कुम्भं च तत्तद्वेद्यां समारोप्य, पुण्याहान्ते प्रतिसरं बध्द्वा, 'यद्वैष्णव' मितियद्दिग्द्वारं तद्दिङ्मौलिंशाययेत्,

तत्तत्प्रधानाग्नौ हौत्रं प्रशंस्य, तत्तन्मूर्त्तिमन्त्रै स्तत्तत्परिषद्देवानामावाहनादीनि कारयेत्, आदिमूर्त्तेरनन्तशयनस्यच सभ्याग्नौ वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीभूमिदेवत्यंसर्वदेवत्यं च हुत्वा, पुरुषमूर्तेराहवनीये पुरुषसूक्तं, सत्य-मूर्त्तेरन्वाहार्ये विष्णुसूक्तं, अच्युतमूर्त्तेर्गार्हिपत्ये वैष्णवं, अनिरुद्धमूर्त्तेरावसथ्ये रुद्रसूक्त मेकाक्षरं चतुष्कृत्वो हुत्वा, वाराहस्य सभ्याग्नौ 'क्ष्मामेका' मिति मन्त्रेण अष्टाधिकशातं हुत्वा, नृसिंहस्य गार्हपत्याग्नौ 'ये वा नृसिंह' इत्येकं, नरनारायणयोः पौण्डरीकाग्नौ 'सत्यस्सत्यस्थ' इति मन्त्रं विष्णुगायत्रीं च अष्टोत्तरशतं हुत्वा, अत्रानुक्तं सर्वं महा प्रत्तिष्ठोक्त क्रमेण कृत्वा, रात्रिशेषं व्यपोह्य, प्रभाते स्नात्वाऽऽचार्यादिभ्यो दक्षिणां दद्यात्; सर्वान् देवानुत्थाप्य रत्नन्यासं विना चरराशौ तत्तस्थानेप्रतिष्ठाप्य, पुण्याहं वाचयित्वा, नित्यार्चनविधानेनाऽभ्यर्च्य, हविर्नि वेदयेत् ॥

षण्मूर्तिप्रतिष्ठाचेत् वाराहं नारसिंहं नरनारायणौ च हित्वा, षण्मूर्तीः संस्थाप्याऽर्चयेत् । पंचमूर्त्ति प्रतिष्ठाचेत् अनन्तशयन वाराहा दीन्विना आदिमूर्त्यादि पंचमूर्तीः संस्थाप्याऽर्चयेत् । एषविशेषः अन्यत्सर्वंसमानं । यस्मिन्नेकतलविमानेध्रुवबेरस्येकस्यैव कौतुकानि पञ्चैव सन्ति अतः तेषां कौतुकानां बालस्थापनेस्थापनं यदीच्छेत्पूर्वं तरुणालयं सालिन्द्रम् अभ्यन्तरभित्तिविहीनं वा कृत्वा, तत्तत्पदे विष्ण्वादि पञ्चानां कौतुकानां पञ्चाग्नीन् परिकल्प्य, होमं हुत्वा संस्थाप्याऽर्चयेत् इत्याहमरीचिः

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे नवषट्पञ्चमूर्त्ति-तरुणालयप्रतिष्ठाविधिर्नाम पञ्चमः पटलः॥५॥

# अथ षष्टः पटलः

## प्रशस्त कालनिरूपणम्

अत ऊर्ध्वं प्रथमशिलेष्टकादि विन्यासविधिं वक्ष्ये । मासेषुफाल्गुनचैत्र वैशाखतैष्यज्येष्टेषूत्तमं, श्रावणाषाढकार्तिकाश्वयुजे-षुमध्यमं, शेषेष्वधमं, पूर्वपक्षे, कृष्णपक्षे, अन्त्यत्रिभागं हित्वा वा, श्रवणरोहिण्युत्तरहस्तास्वातिपुनर्वसु वारुणमैत्रेष्वेकस्मिन् यजमानानुकूलर्क्षे स्थिरराशावनिंदिते चाऽऽरभेत ।

## शङ्कुस्थापनम्

कृष्टभूमिमध्ये चतुर्दिशं चतुर्हस्तं जलेन समंकृत्वा, तन्मध्ये शङ्कुं संस्थापयेत्, शङ्कुवृक्षान् सारवत्तरान् याज्ञिकान् वा आहरेत्; माना-ङ्गुलेनअष्टाङ्गुलायतं, द्वादशाङ्गुलायतं वा, सुवृत्तंनिर्व्रणमायामसदृशं मूलनाहं छत्राकारं शङ्कुं कृत्वा, उदयात्पूर्वं तन्मध्मे शङ्कुद्विगुणमानेन मण्डलमालिख्य, तन्मध्ये शङ्कुंस्थापयेत् ।

## दिङ्निर्णयः

पूर्वाह्णाऽपराह्णयोः छाया यदि तन्मण्डलान्तगा तद्बिन्दुद्वयगतं सूत्रं प्रसारयेत् तत्पूर्वाऽपरादिक् उक्त छायां दक्षिणतो वामे च निदध्यात् । स शङ्कुर्नरतनुः तस्मात् षण्णवतिभागं कृत्वैकांशामङ्गुलं, तदङ्गुलेना-ऽवछायाः प्रतिमासं विशोधयेत् मेषे मिथुने सिंहे तुलायां च रवौस्थिते द्व्यङ्गुलं कुलीरे वृश्चिके मीने चतुरङ्गुलं, धनुषि कुंभे षडङ्गुलं, मकरे अष्टांऽगुलं नयेत्, वृषभे कन्यायां नाऽवछाया भवेत् । मासिमास्युक्तमंङ्गुलं त्रिंशद्भागं कृत्वा दिने दिने चैकैकं भागं युक्त्या शोधयेत् तस्मिन् पुनर्बिंदुद्वयं कृत्वा, तयोर्मध्यं पूर्वापरं सूत्रं प्रसार्य, दक्षिणोत्तरं तद्बिन्दुद्वयं मत्स्यमुत्पाद्य तन्मुखपुच्छविनिर्गतं सूत्रं प्रसारयेत् ॥

## शिलान्तजलान्तभूशोधनपूर्वं शिलादि स्थापनम्

तत्पश्चिमे 'मेदिनी' ति मंत्रेण जलान्तं शिलान्तं वा खनित्वाशल्यान-पोह्य, वालुकाभिरापूर्य, हस्तिपादेन दृढं कृत्वा समाह्नेऽतीते तत्खातंपञ्चधा कृत्वा, त्रिभागावसाने चोत्तमं, द्विभागावसाने मध्यमम्, एकभागावसानेचा ऽधमं, तस्मिन् शिलां वा, (अथ) इष्टकां वा, विन्यसेत् ॥

## शिलेष्टकादि लक्षणम्

तयोर्लक्षणं युग्मायुग्महस्तविमानानां तद्धस्तं प्रति त्र्यङ्गुलं द्व्यङ्गुलं वा, वर्धयेत् अङ्गुलिसंख्यासमायामं तस्याऽर्धविस्तारम्, अर्धबाहुल्यम्, अथवा त्र्यङ्गुलाद्येकादशाङ्गुलान्तमेकाङ्गुलवृध्या विस्तारं नवधाभवति, तदर्धबाहुल्य विस्तारं द्विगुणायतम्, एवं चतस्रः शिलावा अथेष्टका वा आग्रपादं मुखं पृष्टं च संलक्ष्यैव आहरेत् ।

## शिलेष्टकाप्रतिष्ठापूर्वकं तद्विन्यासः तन्मध्ये रत्नविन्यासश्च

अङ्कुरानर्पयित्वा, जलाधिवासं त्र्यहमेकाहं वा कृत्वा, प्रत्येकं वस्त्रेणा वेष्ट्य, वारुणैर्मंत्रैरभिमंत्र्य; तत्स्थानात् प्रमुखे षोडशद्वादशाऽष्टचतुर्भिः पादैर्युक्तां प्रपां कृत्वा, तोरणाद्यैरलंकृत्य, पूर्वस्यां रात्रौ तत्स्थानादुत्तरे वास्तुहोमं हुत्वा, वालुकोपरिपर्यग्निपंचगव्याभ्यां संशोध्य, पुण्याहंकृत्वा, यागस्थानस्यमध्ये चतुर्दिशं द्विहस्तायत विस्तारं तालोत्सेधां वेदिं कृत्वा, प्रागादि चत्वार्यग्निकुण्डानि तत्प्राच्यामैशान्यां स्नानश्वभ्रं च कृत्वा, पश्चादाघारं हुत्वा, शिलावा अथेष्टका वा, स्नानश्वभ्रे प्रतिष्ठाप्य, तत्प्राच्यां व्रीहिभिर्दण्डवत्पाङ्क्तिं कृत्वा, चतुर्दशकलशान् विन्यस्य, विधिनासंस्नाप्य, वेद्यांधान्योपरि पञ्च वस्त्राण्यास्तीर्य, शिलाद्यं च प्रत्येकंवस्त्रेणावेष्ट्य, चतुर्वेदरूपध्यात्वा, प्रागादि विन्यस्य, पुरुषादिमूर्तीर्नामाभिरभ्यर्च्य, तन्मध्ये नवरत्नानि विन्यस्य तस्मिन् रत्नेशं विष्णुमभ्यर्च्य, पुण्याहं कृत्वा, प्रत्येकं 'स्वस्ति दाविशस्पति' (ऋ० सं. ६-६-१०) रिति प्रतिसरं बध्वा, चतुर्वेदादि मंत्रैः शिलाद्यं प्राच्यामुत्तराग्रं दक्षिणे प्रागग्रं पश्चिमे चोत्तराग्रम् उत्तरे प्रागग्रं च शाययेत्, उत्तराच्छादनं कृत्वा, हविर्निवेद्य, हौत्रं प्रसंस्य पुरुषादि चतुर्मूर्ती रत्नेशं विष्णुं, दिग्देवांश्चाऽऽवाह्य जुष्टकारं स्वाहाकारं च हुत्वा, देवंध्यायन्, आहवनीये पुरुषसूक्त मैन्द्रमाग्नेयं वैष्णवं च, अन्वाहार्ये विष्णुसूक्तं ब्राह्मं याम्यं नैरृतं च, गार्हपत्ये वैष्णवम्, एकाक्षरादीन् वारुणं वायव्यं च, आवसथ्ये वैष्णवं रुद्रसूक्तं सौम्यं रौद्रंच प्रत्येकं दशकृत्वो जुहुयात्। रात्रिशेषं व्यपोह्य, प्रभाते स्नात्वा, मुहूर्त्ते समनुप्राप्ते यजमान आचार्यः स्थापकादीन् वस्त्रोत्तरीयाद्यैरलंकृत्य, दक्षिणां दद्यात् सर्वालंकारसंयुक्तं ग्रामंबालागारं वा, शकुनसूक्तं जपन्, प्रदक्षिणं कृत्वा, तंदेशं प्रविश्य, अग्निंविसृज्य, आचार्यो यजमानश्च स्थपतिना सार्धंविमान नित्यसूत्रं प्रसार्य, द्वारंविदित्वा, अभ्यन्तर द्वारदक्षिणे यमद्वयं हित्वा, भित्तिमध्ये चतुरश्रमुपलिप्य, नवभागं विभज्य, आचार्यःप्राङ्मुखमासित्वा, प्राणायामं च कृत्वा, 'अग्निमीले पुरोहित' (ऋ स० १-१-१) मिति प्रथमशिलेष्टकाग्रमूर्ध्वानि नम्, आग्नेय्यां तत्पादम्, 'इषे त्वोर्जेत्वे' (तै० स० १-१-१) ति याम्ये द्वितीयशिलेष्टकाग्रं नैरृत्यां पादम्, 'अग्नआयाहि, (सा म० १-१-१) इति वायव्ये तृतीयशिलेष्टकाग्रं वारुण्यां पादं 'शन्नोदेवीरभिष्टये' (अ० १-१-१) इत्यैशान्यां चतुर्थशिलेष्टकाग्रं सौम्ये पादं च, एवं क्रमेण विन्यस्य, तन्मध्ये

ब्राह्मंमन्त्रमुच्चार्य, नवरत्नानि सुवर्णं वा निक्षिप्य पश्चात्शिल्पिनमाहूय, अभिपूज्य तेनैव क्रमेण दृढंकारयित्वा, उपरिष्टात् भित्तिमूलं सोपपीठाधिष्ठानं केवलाधिष्ठानं वा कृत्वा, पादवर्गादि वर्गाढ्यं विमानं त्रितलमेकतलं वा परिकल्पयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे प्रथमशिलेष्ट-काविन्यासविधिर्नाम षष्टः पटलः ॥६॥

# अथ सप्तमः पटलः

अथ विमानविधिं वक्ष्ये - नलिनकादिषण्णवति भेदै स्त्रिचतुर्ह स्तादि रुद्रार्ककरांतमेकभूमिं पञ्चषड्ढस्तादि त्रयोदशाचतुर्दशकरान्तं द्वीभूमिं, सप्ताऽष्टकरादि पक्षषोडशकरान्तं त्रितलं, सप्तदश हस्तादि षट्शतकरान्तं चतुर्भूम्यादि द्वादशतलान्तं युग्माऽयुग्म हस्तैर्युतं संयोज येत्, एवं तलंप्रति मानं दशधाभवति ॥

## संकीर्णविमानलक्षणम्

एतेषु इष्टहस्तैर्वा सायाम समचतुरश्रवृत्तं विस्तारा त्यादाऽधिकमर्धा ऽधिकं, पादोनद्विगुणं द्विगुणं वा, आयतम्, आयत चतुरश्रवृत्तं तेषु ग्रीवोपरि भिन्नाङ्गं सङ्कीर्णंस्यात् ॥

## शांतिकादि विमानलक्षणम्

विमानविपुलस्य सप्तदशोत्सेधं शांतिकम्, अर्धाऽधिकोत्सेधंपौष्टिकं, पादोनद्विगुणंजयदम्, अद्भुतं पादाऽधिकं, द्विगुणं सार्वकामिकं स्यात्।

## हर्म्यभेदः तत्स्वरूपंच

नागरं द्राविलं, वेसरमिति त्रिविधं हर्म्यरूपं । खुरादिस्तूपिकान्तं चतुरश्रं नागरं, तथैव वृत्तं वेसरम् अथवा प्रस्तरान्तं समचतुरश्रं तदुपरि-वृत्तग्रीवाशिखरं च वेसरं तथैवच स्वश्रशिखरग्रीवं द्राविलंस्यात् ॥

पूर्वापरायामं दक्षिणावान्तरंभवति आयत चतुरश्रवृत्ते चायामेन-शांतिकोत्सेधग्रहणं कारयेत् । अर्पित मनर्पित मितिद्विविधं भवति । अर्पितमलिन्द्रविहीनम् अनर्पितमलिन्द्रयुक्तमेवं कारयेत् ॥

विमानस्य विस्तारं पादबाह्यम्, उत्सेधमुपानदादि स्थूपि पर्यन्तंस्यात् मानसूत्रं विन्यस्य ऐशान्यां किंचिदधिकम् । आग्नेय्यां किंचिन्न्यूनम्, एवं कारयेत् । अन्यथाचेत् सर्वंनश्यति मानसूत्राद्बहिर्हस्त मध्यर्ध द्विहस्तं वा अधिकविस्तारायामं जलान्तं शिलान्तं वा दृढप्रकृतिश्चेत् द्विहस्तं सार्धविस्तार मेकहस्तं वा, खनित्वा, तत्खातंचतुर्धा कृत्वा द्व्यंशं त्र्यंशं वा वालुकोपलशकलाद्यैर्जलेन संपूर्य, मुसलै र्हस्तिपादैर्दारुतुण्डै र्बृहत्तरैर्वा दृढंकृत्वा, शेषांशं पादमर्धं त्रिपादं हस्तं वा, महद्विमानं चेत् अधिष्ठान द्विगुणम् अध्यर्धं समं वा खातकुड्यं प्रकल्पयेत् तदूर्ध्वेदण्डप्रमाणेन समं कृत्वा, तदूर्ध्वेअधिष्ठानम् उपपीठं वा कुर्यात् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे विमानविधानंनाम सप्तमः पटलः ॥७॥

# अथ अष्टमः पटलः

अथाऽधिष्ठानकरण रूपभेदाः -

पदबन्धं, प्रत्यङ्गबन्धं, हरिहरहिरण्यगर्भाणां सामान्यकरणं, विशेष-विधानं य (द्) द्वारि तत्प्रवृत्तितल निर्गमंस्यात् पादबन्धं पद्मबन्धं पुष्पबन्धं श्रीप्रियाम्बुजं प्रतिबन्धं प्रतिक्रमं कपोतबन्धं श्रीबन्धमित्यष्टावधिष्ठानानि भवान्ति ।

## पादबंधादीनां लक्षणम्

तेषां क्रमेण भागान्वक्ष्यामि - तत्राऽधिष्ठानोत्सेवं त्रयोविंशतिभागं कृत्वा, जन्मतलोपरि एकांशंखुरम्, अष्टांशाजगती, सप्तांशंत्रिपट्टकुमुदम्, एकांशंकम्पम् द्व्यंशंकण्ठम्, एकांशंकम्पम्, द्व्यंशामहापट्टी, एकांशोर्ध्वपट्टिका च, एतत् पादबन्धंस्यात् ।

उत्सेधत्र्यष्टभागं कृत्वा एकांशोपानन्, द्व्यंशंपद्मम्, एकांशंकम्पम्, षडंशाजगती, पञ्चांशंत्रिवर्गकुमुदम्, एकांशंकम्पम्, द्व्यंशंकंठम्, एकांशंकम्पम् द्व्यंशामहापट्टिका, एकांशंपद्मम्, एकांशंपद्मम्, एकांशंकंपम् एतत् पद्मबन्धं स्यात् ।

उत्सेधं षड्विंशतिभागं कृत्वा, एकांशंखुरम् एकांशंपद्म मेकांशंकंपम् पञ्चांशा जगती(च) एकांशंपद्मम् एकांशंधृक् एकांशंपद्मं चतुरश्रंवृत्तकुमुदं

त्रिवर्गं वेति केचित् । एकांशंपद्मम्, एकांशंकंपम्, द्व्यंशंकण्ठम्, एकांशंकंपम्, एकांशंपद्मम् द्व्यर्धांशा महापट्टिका, एकांशंपद्मम्, एकांशं कंपम्, एतत्पुष्पबन्धं स्यात् ।

उत्सेधमेकविंशतिभागं कृत्वा - एकांशापादुका, एकांशंपद्मम्, एकांशंकण्ठम्, एकांशंदलम्, त्र्यंशंवृत्तकुमुदम्, एकांशंपद्मम्, एकांशंकंपम्, द्व्यंशंकण्ठम्, एकांशंकंपम्, एकांशंपद्मम्, द्व्यर्धांशा महापट्टिका, एकांशंपद्मम्, एकांशोर्ध्वपट्टिकाचेत्येतच्छ्रीप्रियाम्बुजम् ॥

उत्सेधमष्टादशांशं कृत्वा एकांशंखुरम्, एकांशंपद्मं षडंशाजगती पंचांशंवृत्तकुमुदम् एकांशमालिंगम्, एकांश मन्तरितं द्व्यंशंप्रतिमुखम् एकांशंवाजनम्, एतत् प्रतिबन्धं स्यात् ।

उत्सेधमेकोनविंशतिभागं कृत्वा, एकांशंपादुकं सप्तांशाजगती षडंशंवृत्तकुमुदम्, एकांशमालिंगम्, एकांशमन्तरितं द्व्यंशं प्रतिमुखम् एकांशंवाजनं नागवक्त्रसमं प्रत्यवसानम् एतत् प्रतिक्रमं स्यात् ।

उत्सेधं सप्तविंशतिभागं कृत्वा द्व्यंशंपादुकं षडंशंपद्मम्, एकांशंकंठम्, एकांशंदलं त्र्यंशंवृत्तकुमुदं, त्रिवर्गं वेति केचित् । एकांशंदलम्, एकांशंकंपम् द्व्यंशंकंठम् एकांशंकंपम्, एकांशंमुपरिदलं त्र्यंशंकपोतम्, एकांशमालिंगम्, एकांशमन्तरितद्व्यंशंप्रतिमुखम् एकांशं वाजनम्, एतत् कपोतबंधं स्यात् ।

उत्सेधं द्वात्रिंशद्भागं विभज्य, द्व्यंशमुपानत् एकांशंक्षुद्रोपानं (नत्) सप्तांशंपद्मम्, एकांशंकंठम् एकांशंदलं चतुरंशंवृत्तकुमुदम् एकांशंदलम्, एकांशंकंपं, त्र्यंशंकंठम् एकांशंकंपम्, एकांशंपद्मं चतुरंशंकपोतम्, एकांश मालिंगम् एकांशमंतरितंद्व्यंशं प्रतिमुखम्, एकांशं वाजनम्, एतत् श्रीबंधं स्यात् ॥

एतेषु नासिकांघ्रीन् युक्त्यायोजयेत् पादबंधे जन्मादिपञ्चवर्गेषु तत्तदवसाने द्वारस्थलं संकल्पयेत् । अन्येषु पट्टिकान्तेचैवं युक्त्याकारयेत् । प्रत्यंगेषु प्रतेरुपर्युपरिद्वारस्थलं संकल्पयेत्, प्रतिच्छेदं न कुर्यात्, कुर्याच्चेत् विनाशाय-भवति सर्वेषामङ्गानां प्रवेशनिर्गम मेकदंडादि त्रिदंडान्तं पाददण्ड वृध्द्या विमान विस्तारबाह्यांग निर्गमं नवविधं स्यात् । एतेष्विष्टप्रमाणेनोपानद्विस्तारं तन्त्रिचतुः पञ्चषट् सप्ताष्टांशं कृत्वा एकांशंखुर

निर्गमं शेषम् जगतीविस्तारं तत्समंकुमुदं तत्समं तद्बाह्यात् कंठप्रवेशं सर्वेषां पट्टिकां बुजकंपादीनां तत्तदुत्सेध समनिर्गमं, वेत्राणामुत्सेधं त्रिचतुः पंचषडंशंकृत्वा एकांशं निर्गमम्, एवं युक्त्याकारयेत् ।

इति श्री वैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे अधिष्ठानभेदनाम अष्टमःपटलः ॥८॥

# अथ नवमः पटलः

## एकतलविमाने शांतिकलक्षणम्

अथैकभूमिं वक्ष्ये-अधिष्ठानपाद प्रस्तरग्रीवा शिखरस्थूपिकाश्चेति षड्वर्गयुक् एकभूमिः, अथवा चतुर्वर्गयुतास्यात्, शांतिकोत्सेधं षडंशं कृत्वा, एकांशमधिष्ठानं, द्व्यंशंपादतुंगं, द्व्यंशं (खुरं) शिखरम्एकांशं स्थूपिकोदयमेवं चतुर्वर्गयुतम्, अथवा शिखरक्रियां लुपाविधानेन कारयेत् । शांतिकोत्सेधमष्टभागं कृत्वैकांश मधिष्ठानं, (पादं वा, तदुपरि प्रस्तरमेकांशम्, पादोनत्र्यंशं शिखरम्, एकांशं स्थूपिकोदयं स्यात्) तद्द्विगुणं स्तंभायामं, तदुपरि प्रस्तरमेकांशं, कंठमेकांशं, द्व्यंशं शिखरम् एकांशं स्थूपिकोदयंस्यात् ॥

## पौष्टिकलक्षणम्

पौष्टिकोर्ध्वं नवभागं (नवधा) कृत्वा तदेकांश मधिष्ठानं, पादा-र्धाधिकं द्व्यंशं पादायामं, प्रस्तरं पादार्धोनांशं, सपादांशंकण्ठम् पादो-नंत्र्यशम् शिखरम्, एकांशा स्थूपिका स्यात् ।

## जयदस्यलक्षणम्

जयदोत्सेधं दशांशं कृत्वा, एकांश मधिष्ठानं, द्व्यर्धांशं पादतुंगम् एकांशंप्रस्तरं, सार्धमेकांशं कण्ठं, त्र्यंशंशिखरम् एकांशंस्थूपितुंगं स्यात् ।

## अद्भुतस्यलक्षणम्

अद्भुतोत्सेध मेकादशांशं कृत्वा सपादांशमधिष्ठानं, तद्द्विगुणं स्तंभायामं, तदुपरि प्रस्तरमेकांशं, सार्धांशंकण्ठम्, त्र्यर्धांशंशिखरं, सपादांशं स्थूपिकोदयंस्यात् । सार्वकामिकोत्सेधम् ।

## सार्वकामिकस्यलक्षणम्

द्वादशांशं कृत्वा सपादांशमधिष्ठान द्विगुणंस्तभायामं, सपादांशं प्रस्तरं, सपादांशंकंठं, पादं (वा) तदुपरिप्रस्तरम् एकांशम्, एकांशंकंठं, पादोनत्र्यंशं शिखरम् एकांशं स्थूपिकोदयं स्यात्, अद्भुतोत्सेधमप्येवं योजये दिति केचित् ।

अथवा शान्तिक पौष्टिक जयदानां उत्सेधं क्रमेण सप्तषट्पञ्चभागं कृत्वा, तत्तदेकांशं हित्वा, समारोपयेत् इत्येके ।

## गर्भगृहलक्षणम्

विमानविस्तारं त्रिचतुः पञ्चसप्त नवैकादशभागं कृत्वा यथाक्रमेण एकद्वित्रिचतुः पञ्चषडंशं गर्भगृहविस्तारं स्यात्, विमानविस्तार समं त्रिपादमर्धं वा मुखमंटपं तद्व्यन्तरं त्रयोदशभागं कृत्वा तदेकां (कैकां) शाधिके (ना) यामं सप्तविंशति भेदं स्यात्, त्रित्रिसंख्याभिश्चोत्तम मध्यमाधमभेदैः नवधाभवति उत्तमानां विपुलं विमानविस्तारसमं सान्तरालं तस्यवेशनं द्विदण्डं दण्डार्धं पादं वा तदायामं, हस्तेन पादमर्धं त्रिपादमेक हस्तादि सपाद पञ्च हस्तान्तं सभित्तिकं द्वारं जालकं वा कुर्यात् । मध्येनिचानामन्तरालं विनैकदण्डान्तं पाददण्ड विवृध्या नवभेदैः प्रवेशं कार येत्, अन्येषां सर्वेषामन्तरा विना एतैः निर्गमंकारयेत् ।

## मुखपंटपलक्षणम्

अथवा मुखमण्टपं कृत्वा तत्प्रमुखे तदायामेन पादाधिकमर्धाधिकं त्रिपादाधिकं द्विगुणं वा विस्तारं, विमानात् पादार्ध त्रिपादाधिक विस्तारायाम युत मर्धमण्डपं कुर्यात् । एतन्मध्ये भद्रतोरणाद्यैर्युक्त मयुक्तं वा त्रिवर्गाढ्यं कुर्यात् ।

एतद्विमानस्य प्रमुखंविना पार्श्वत्रय(ये)मध्यभद्रविमान विपुला त्रिभागैकं, चतुर्भागं, पंचभागं, त्रिभागं वा; तन्निर्गमदण्डमध्यर्धं, द्विदण्डंवा, (मध्यं द्विदण्डमध्यर्धद्विदण्ड त्रिदंडं वा) पादं तस्यावसाने कुर्यात् । तोरणानामुत्सेधं स्थलादुपरि उत्तराधस्तात् द्विचतुर्भागात् त्रिभागं त्रिभागात् द्विभागंवा तोरणपादोत्सेध मर्धं त्रिभागैकम्, अथवा दंडेन त्रिचतुष्पंचदण्डविस्तारं तस्य पादबाह्यं तत्पादवशेन तदङ्गानिमानयेत् ।

तोरणान्तर गाढप्रवेशानं दण्डं, त्रिपाद मर्धं, पादं वा शेषं झषोत्सेधमुत्तरान्तं पञ्च-वक्त्रैर्युक्तं पार्श्वयोर्मकरस्यमध्येपूरितं गाढयुक्तं नानालतापत्रजाति विचित्रितं सर्वालंकारैर्यथाशोभं युक्त्या कारयेत् । विमानस्याधिष्ठाना दुपर्युत्तरान्तं पादतुङ्गं तत्ररसमुनिवसु नव दशभागं कृत्वा तदेकांशवेदि-कोत्सेधं तत्तुंगं चतुर्धा कृत्वा अर्धांशंकंपं, द्व्यंशंकठं कर्णम् अर्धांशंकंपं पद्ममर्धांशं, कंपमेवं, एव प्रत्यंगेषु योजयेत् ॥

अथवा रसांशं कृत्वा, एकांशंकंपं, द्व्यंशं कंठं, (कर्ण) शेषमुपरि बंधं स्यात् पङ्क्तिकांशेषु तुंगार्धंगलं, शेषं त्रिधा कृत्वा उपरिबंधं पूर्ववत् कारयेत्, अथवा चतुर्धाकृत्वा एकांशेन गलादधस्तात् कंपंकारयेदिति केचित् । पादोत्सेधं सप्ताष्ट नवदशभागं कृत्वा एकांशंपाद विपुलं, अथवा अधिष्ठानोच्चं त्रिचतुष्पं च भागं कृत्वा एकांशं विमाननिर्देशहस्तां गुलिभिः (र्वा)पादविष्कंभं स्यात्, चतुष्पञ्चषडंशं कृत्वा, एकांशहीनं भित्तिपाद विपुलं तत्र रसमुनिवसुनं द(या) धा विभज्य एकांशोनमग्र विस्तारं तद्दण्डसंज्ञं तेन सर्वांग प्रमाण निर्णयकारणं स्यात् । पादाश्चतुरश्रा अष्टाश्रा षोडशाश्रा वृत्ता इति मिश्रममिश्रं वा कारयेत् । समयुग्मंश्रेष्ठं विषमयुग्मं निषिद्धम् एकत्रिपञ्च सप्तनंद भक्तिवशेन संयोजयति । पादमूले अर्धदण्डेनपद्मं तदुपरि (कर्णे) कंठे (न) चतुरश्रं शेषमष्टाश्रं, षोडशाश्रं, वृत्तं वा, भित्तिपादं । पादात् पादान्तरं भित्तिप्रवेशं पाददण्डं स्यात् । दारुशिलास्तंभेषु मूलेऽर्धदण्डेन पद्मं, तदुपरिकंठे (कर्णे) न चतुरश्रं शेषमष्टाश्रं षोडशाश्रं वृत्तंवा भित्तिपादं, पादात्पादान्तरं भित्तिप्रवेशं पाददण्डं स्यात् । दारुशिलास्तंभेषु मूलमध्याग्रेषु चतुरश्रं, अष्टाश्रं, षोडशाश्रं, वृत्तं वा, सर्वत्रसर्वैस्समानं नयेत् । पद्मोपरि सिंहेभव्यालभूतनागादि कल्पयेदिति केचित् ।

पादाग्रे बोधिकावीरकांडफलकानामेकैकदण्डमुत्सेधं त्रिपाददण्डं वा, फलकायाः पादोनं; कुम्भोच्चं, तत्समंबोधिकोच्चं वेति केचित् । फलकोत्सेधार्धं ताटितुंग, धृंगुत्तुंगं, तदर्धं, पाददण्डं वा । ताटचधस्तात् एकदण्डेन मालास्थानं वीरकाण्डानां विपुलं पादविपुलमेव पादस्यक (र्णे) ण्ठेन पादात्क्रमेण ताटचूर्ध्वभागं विस्तारं तत्कर्णेन कुंभविस्तारं, तत्कण्ठेन फलकाविस्तारं, तत्सम, पादाधिकं वा, वोधिकाविस्तारं नानाचित्रितरंगादीनि कारयेत् । फलकोत्सेधं त्रिचतुर्भागं कृत्वा,

एकांशेनवेत्रम् अधस्तात्पद्मं, शेषं युक्त्या कारयेत्। अथवा फलककुंभ ताटीनामुत्सेधं तत्तद्विस्तारत्रिनागैकभागेन कारयेदित्येके।

अथ द्वारलक्षणं वक्ष्ये - पादायामद्वारोत्सेधं तदर्धविस्तारं विस्तारा-धिकमानं विमाननिर्देशांगुलेन एकाद्यष्टांगुलान्तं नवधाभवति। अथवा दण्डेन पाददण्डादि पादाधिकं द्विदण्डान्तं पाददण्डवृध्द्या नवविधं स्यात्। हस्तेन पादंसार्धपादमर्धभित्ति विस्तारं, समं वा बहलद्वार विपुल पादोत्सेधं सप्ताष्टन (न्द) वदशभागं कृत्वा, षट्सप्ता ष्टनवभागं शुद्धद्वारं, शेषांशं द्विधा कृत्वा एकांशं भुवंग मेकांशं पतङ्गम्, अथवा भुवंगमानं त्रिभागैकं शेषपतंगमानंस्यात्। तत्समं दक्षिणोत्तरस्तम्भ निर्गमं, तद्बहुलात्पादाधिक मर्धाधिकंपादोनद्विगुणं, द्विगुणं, तेषांविपुल बहलसमां नानापुष्पवल्लिकां कारयेत्।

अथवा तन्महद्वारं चेत् षोडशांशं कृत्वा त्रयोदशांशं शुद्धद्वारोत्सेधं सप्तांशमष्टांशं वा द्वारविस्तारं षोडशांशं द्विधाकृत्वा एकांशं भुवङ्गमेकांशं पतंगंस्यात् अन्यत्सर्वं पूर्ववत्कारयेत्।

## कवाटस्यलक्षणम्

कवाट विस्तारायामं द्वारसमं तयोर्बाहुल्यं द्वारस्तंभ बहुलार्धं तत्पादाधिकं पादहीनं वा, तयोरूर्ध्वाधः शिखायुक्तं शेषं युक्त्यैव कारयेत्।

द्वारपट्टिकायामं शुद्धद्वारसमं तस्यविस्तारं द्वारविस्तारादष्टांशं तस्यार्धं पादं वा बाहुल्यं वामकवाटान्वितं नानाचित्रै र्विचित्रितम् तद्दंड पार्श्वपट्टिकाग्रं द्वित्रयोपेत पञ्चसप्तनवाद्ययुग्मयष्टि समायुक्तं कारयेत्। शक्तंश्चेत् पट्टिकायष्टीः लोहजा एव कारयेत् आयसैः पुष्पमुकुल शंकुभि र्दृढं कृत्वा आयसैः पट्टैश्चंद्राद्यैस्त्रुट्याकारैर्वाकारै र्मुकुलाकारैश्च शोभनार्थं, रक्षार्थं संयोज्यतयो रूर्ध्वाधस्तान्मध्ये वलयैर्भुवंगपतंगयोर्मध्ये वलयद्वयं पुलकोपेतं कारयेत्। द्वार षडंश स्थान क्रमम् भुवङ्गस्थानक्रमम् भुवंगं दक्षिण शीर्षं, उत्तरपादम्, ऊर्ध्वाननं, द्वितीयं दक्षिणस्तंभ मुत्तराभिमुखम्, तृतीयमुत्तरस्तंभं दक्षिणाभिमुखम्, चतुर्थं पतंगमुत्तरशीर्षं दक्षिणपाद मधोमुखम् संस्थाप्य पश्चात् पञ्चमं दक्षिणकवाटं उत्तराभिमुखं षष्टमुत्तर कवाटं दक्षिणाभिमुखम् तक्ष्णासंस्थाप्य पश्चात् धातृविधातृभुवंगपतंगपतिरवरुणान् तत्तन्मन्त्रेणा-चार्यः स्थापयेत्।

द्वारस्तम्भं कवाटार्थं शिरीष पुन्नाग निंबवकुलार्जुन मधूक पनसाऽसनान् अन्यान् शुभान् पुंवृक्षान्वा विधिनाऽऽहृत्य दारु द्विधाकृत्वा दक्षिणांशम् दक्षिणस्तंम्भकवाटम्, वामांशमुत्तरस्तम्भ मुत्तरकवाटञ्च, तस्योर्ध्वभाग मूर्ध्वपट्टिकाञ्च कारयेत् । एवमेव वृक्षालाभे चैक जातीयश्शिलाभिः स्तंभं कवाटंकारयेत् । कवाटपृष्ठे बन्धनार्थं दारुणायन्त्रं यन्त्रिकाश्च कृत्वा बाह्यपार्श्वे चाऽऽयसा रक्षाबन्धन परं यन्त्रं यन्त्रिकां आयतवलयोपेता मयसा काञ्चनेनवा वल्मीकां कृत्वाऽऽर्पयेत् ।

## अथ प्रस्तरलक्षणं वक्ष्ये

प्रस्तरोत्सेधमेकविंशतिभागं कृत्वा त्र्यंशमुत्तरम् एकांशं वाजनं, त्र्यंशंवलभिः, वाजनमेकांशम् सप्तांशम् कपोतं आलिंगांतरितावैकैकांशौ प्रत्युत्सेध मेकांशं वाजनं स्यात् । उत्तरोच्चार्धं त्रिचतुभागं वा निर्गमं वसन्तकस्य, सत्समं पादोनमधर्वा कपोतस्य, समत्रिपादमर्धं वा, दण्डं सार्धदण्डं द्विदण्डं वा, निर्गमम्, अर्धदण्डेन लम्बनं वेति केचित् । प्रत्यालिंगयो र्मानसूत्र सममेवान्तरितम्, वाजनयो रुत्सेधं समाननिर्गमं स्यात् दण्डंसार्धदण्डं कपोतोत्सेधं वा नासिकातु गतारं तत् त्रिभागैकेननावगाढ (गगाध) युतम् तुंगार्धं वाज्जनान्तं वा शिखरोत्सेधं सिंहवक्त्रवत्कारयेत् ॥

## अथ ग्रीवालक्षणम्

तदुत्सेधम् त्रिचतुष्पञ्चभागं कृत्वैकांशम् वेदिको (दयं) त्सेधंग्रीवारूपवशेन चतुरश्रामष्टाश्रां वृत्तां वा, पूर्ववद्वेदि कांकारयेत् । वृत्तग्रीवायामप्यष्टाश्रां वेति केचित् । कण्ठार्धेन कोणेषु व्यतीत्ययेनमानमानयित्वा तयो र्मध्यं मध्यवर्गं स्यात् । एवं समचतुरश्रेप्यष्टाश्रा कर्त्तव्या, गळोदये वेद्यशेषितांशम् द्वादशभागं कृत्वा; अष्टांशं ग्रीवातुंग, सार्धांशमुत्तरार्धांशं वाजनं, सार्धांशं हंसं, वाजनमर्धांशं स्यात् ॥

अथवा षोडशभागं कृत्वा अष्टांशं गलोदयं, शेषांशै रुत्तरादीन् कुर्यात्, तेषां निर्गमं पूर्ववत् एताश्शिखरे संयोजयेदिति केचित् । मानसूत्रात् षट्सप्तांशैरहीनं वेदिविस्तारं, तस्मा त्तथैवकण्ठ (र्ण) विस्तारम् अथवा, तयोर्वेद्युत्सेधमानेन प्रवेशं कारयेत् ॥

## शिखरलक्षणम्

अथशिखरलक्षणं - हंसवाजनात् बहिरर्धदंडं दंडं सार्धदंडंद्विदंडं

वा शिखरस्यौष्टविपुलं हंसवाजनषोडशांशैकहीनं मध्यविपुलं, हंसवाजन सदृशमुदरविपुलं, तथैवेति केचित् । अथवा वेदिविस्तारसदृशमोष्ठविपुलं, तदष्टांशैकहीनं मध्यविपुलं, तच्चतुर्विंशतिभागैकहीन मुदरविपुलंस्यात् तत्पञ्चभागा (त्) त्र्यंशं बलिकस्याधारपट्टिका, तत्पञ्चांशाद्युगांशमूर्ध्व-पाट्टिका, तस्मात्तदैवपद्मतारं, तच्चतुर्भागैकं कंठिकातारं, शिखरोत्सेधार्धमुदरं, तस्मात् कर्णि (ण्ठि) कां तं क्रमात् संक्षिप्य (सं) त्र्यङ्गुलं चतुरङ्गुलं वा बलिकमंडल विस्तारं, तदर्धमुत्सेधं अर्धदण्डंत्रिपाददंडं वा पद्मतुंगम् अर्धदण्डं कंठि कोत्सेधम् अथवा पद्मादूर्ध्वं स्थूप्या संयोजयेत् इति केचित् । शिखरोत्सेधमष्ट भागं कृत्वा तच्चतुष्पंचषडंशावसाने मूर्धेष्टकां स्थापयेत्, नासिकाग्रे नासिकंठे (कर्णे) वा कारयेदिति केचित् ॥

## नासिकाविधानम्

नासिकाविधिं वक्ष्ये - शिखरव्यासात् त्रिचतुः पंचभागैकं नासिका विस्तारं, तत्समं त्रिपादं त्रिपादाद्विभागं वा यामं, ग्रीवानासिक (कायाम) निर्गमदंडं सार्धदंडं द्विदंडं वा, गाढप्रवेशविस्तारस्य त्रिचतुष्पंचभागैकहीनं ग्रीवोपरि नासिकोत्सेधं तत् त्रिभागैकहीनं दंडं, हीनदंडवशयुतं गाढशेषं, नानाविचित्रित वक्रपट्टियुतं तदर्धं त्रिपादं वा शिखरोच्चं तत्त्रिभागैकं कंठद्व्यंशेन सिंहवन्मुखं कुर्यात् ॥

## स्थूपिलक्षणम्

अथ स्थूपिका लक्षणं पद्मस्यत्रिभागैकं कुंभतारं, त्रिभागैकं नालं, तत् त्रिगुण पालितत्त्रिभगैकं मुकुलं स्यात् अथवा द्वाविंशतिभागं कृत्वा चतुरंशं-पद्मम्, एकांशंकण्ठि (र्णि) कोत्सेधम्, पञ्चांशं कुम्भोत्तुङ्गम्, सप्तांशंनालम्, सार्धांशापाली, त्र्यर्धांशंमुकुलं स्यात् ।

एवं स्वर्णेन रजतेन ताम्रेण वा कृत्वा संयोजयेत् अशक्तश्चेत् सुधया कृत्वा अग्रेचायसा सूचिं संयोजयेत् । एतेषां विमान निर्देशांगुलिना पादांगुलमर्धांगुलं त्रिपादांगुलमेकांगुलमर्धाधिकांगुलं द्व्यंगुलं त्र्यंगुलं वा दंडेनैकं त्रिपादंवांगं प्रतिहीनाधिक्यं न दोषायभवति, विस्तारोत्सेधाया महस्तेषु पादमर्धं त्रिपादं हस्तं वा वृद्धिंहानिं यथोचितमाहरेत् ॥

## आयादि परीक्षा

अथायादि परीक्षणम् (क्षा)-उत्सेधहस्ते अष्टगुणिते भानुत्रिघनैरपहृते

शेषमायं नक्षत्रं स्यात्, व्यासे नवगुणिते अष्टापहृते शेषं योनिर्व्ययंभवति, प्रणाहे नवगुणाहते सप्तत्रिंशदपहृते शेषं वारं तिथिर्भवति, एवं विमानगोपुरादि करणहस्तैर्मंडपाऽऽवरणग्रहादीनां व्यासाऽऽयाम समूहकरैः प्रतिमाना मुत्सेधाङ्गुलिभी रथादीनां व्यासायामसमूह मात्रैरायादीनि परीक्षयेत्। एतेषु अल्पदोष गुणाधिकमपि ग्रहीतव्यम् सार्धहस्तछेदे पादमर्धं त्रिपादं वा संयोज्य गणयेत् तच्छेषं हीनाधिक्यंयुक्त्या कुर्यात् अंगुलिछेदे यवैः (युक्तया) तथैव कारयेत् अत्रानुक्तं सर्वंशिल्पिशास्त्रोक्त विधिना कुर्यात् ॥

पश्चात्सुधावर्णा (द्यैरलङ्कार) द्यलं कारयेत्। प्रति व्यालसिंहेभाद्यैर्भूषयेत् ॥

वलभौ विद्याधर हंस भूत नागादीनि कुर्यात्। द्वारेषु द्वारपालकान् ॥

शिखरे महानास्यंतरे पूर्वे पुरुषं दक्षिणे नृसिंहं पश्चिमे अच्युतम् उत्तरेऽनिरुद्धं पूर्वे चक्रं दक्षिणे दक्षिणामूर्तिं पश्चिमे नृसिंहम् उत्तरे पितामहं च कल्पये (दशां० प) दिति केचित्। पादवर्गे तोरणस्यान्तरे दक्षिणे सत्यं पश्चिमे अच्युतम् उत्तरे अनिरुद्धं प्राग्द्वार दक्षिणे पुरुषं च दक्षिणे नृसिंहं पश्चिमे अच्युतम् उत्तरे वाराहं वेति केचित्। दक्षिणादि दि (शां) द्वारे तद्दिङ्मूर्तीः तद्वारदक्षिणभागेचाऽन्यान् यथा क्रमेणस्थिता नासीनान्वा कल्पयेत् मुखमंडपं दक्षिणे बाह्ये विघ्नेशम्, उत्तरे विंध्यवासिनीम् आग्नेयादिकोणेषु प्रस्तरोपरि गलस्थाने वाहनं मृगेशं खगेशं वा अन्यस्मिन् सर्वत्रदेवस्य विजयक्रीडनादीन्येव कारयेदित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे एकभूमिविधिर्नाम नवमः पटलः ॥९॥

## अथ दशमः पटलः

अथ द्वितलविधिं वक्ष्ये - तद्व्यासायामं नवधाभवति। अत्रत्र्यंशं गर्भविस्तारं, परितो गृहपिंड्यलिन्द्रहा (रा) श्चेकैकांशेन समावृताभवंति, बाह्यभित्तिं षट्भागं विभज्य व्यंशंकोष्ठम् एकांशं कूटम् एकांशं हारान्तरम्। अथवा तमष्टधाविभज्य तदेकांशं कूटतारं, मध्येद्व्यशां शालां, तयो र्मध्ये चैकैकांशं पंजर विशालं, शेषाऽर्धांशे हारान्तरं कारयेत्। अथवा मानसूत्राद्बहिः कूटकोष्टपं जराणांनिर्गमं पादार्धं, त्रिपादं, दंडं, सपादं सार्ध

सात्रपादं द्विदंडं समसूत्रे अन्यस्मिन् कूटात् बहिस्तथैवकोष्ठ निर्गमं कारयेत्। अलिंद्रवालुकाभिरापूर्य घनं सावकाशं संछादितंवा परिकल्प्य ऊर्ध्वे अलिन्द्रं त्यक्त्वा अभ्यन्तरमित्तावुपरिभूमिं कारयेत्।

उत्सेधमेकोनविंशत्यंशं कृत्वा अधिष्ठानं द्व्यंशं, चतुरंशपादं, पादोनद्व्यंशंप्र (स्त) स्तारं, त्र्यर्धांशंपादं, सार्धांशंमश्चम् अर्धांशावेदिका एकांशंकण्ठं (र्णं सपादाग्न्यशं शिखरं, पादोनद्व्यंशा स्थूपिकेत्येवं शान्तिकम्। पौष्टिष्टिकाद्युत्सेधानां पूर्वोक्तांशेषु पश्चांशं संयोज्य पादे शिरशिचैकैकांस्थूपिं विनाऽन्येष्वर्धांशं संयोज्य कुर्यात्। एवं सर्वमूह्यैव कुर्यात्॥

उपरितलपादोत्सेधमष्टधाविभज्य एकांशं वेदिकोदयं द्व्यर्धांशं कण्ठं (र्णं) त्र्यंशंशिखरम्, सार्धांशा स्थूपिकेति॥

अन्तरप्रस्तारं चैकान्तर दशभागं विभज्य एकांशं वेदिकोदयं, द्व्यर्धांशंकण्ठं, (र्णं) त्र्यंशं शिखरं, सार्धांशा स्थूपिकेति॥

अन्तरप्रस्तरप्रस्तरं चेदेकादशभागं विभज्य एकांशं वेदिकोत्सेधं, त्र्यंशंपादं, सार्धांशंमंचम् अर्धांशा वेदिः, सपादांशंकंठ (र्णं) पदान-त्र्यशांशिखरम्, एकांशा स्थूपिकेत्येव सर्वत्र कूटकोष्ठादीनि कारयेत्॥

प्रवेश निर्गमदण्डेन यथा शोभं यथाजालंनयेत् मुखमण्डपं दक्षिण-वामयोरूर्ध्वाधिरोहणार्थं सोपानं च युक्त्या कारयेत्॥

## तृतीयतलस्य

अथ त्रितलविधिं वक्ष्ये - व्यासायामं त्रयोदशभागं कृत्वा त्र्यंशंग-र्भगृहं, परितो गृहपिंड्यलिंद्रहारास्तद्बहिश्चालींद्रहारे संकल्प्य अभ्यन्तरा-लींद्रवालुकाभिरापूर्य, घनमेव बाह्यालींद्रं सावकाशं संछादितं वा कारयेत्। बाह्यभित्तेः परितः कूटशालादीनि पूर्ववत्कृत्वा अलींद्रं त्यक्त्वा तदभ्यन्तर-भित्तौ मध्ये तलं सालिंद्रं संछादितं तस्मिंश्च कूटशालादीनि पूर्ववत्कुर्यात्। अलींद्रं त्यक्त्वा गृहपिंडादुपरिभूमिं कारयेत्। मुखमण्टपं च कुर्यात् सोपानं युक्त्या चकल्पयति॥

उत्सेधं चतुर्विंशतिभागं कृत्वा अधिष्ठानं द्व्यंशं, पादं चतुरंशं, प्रस्तरं पादोनद्व्यंशं, पादं पादोनचतुरंशं, सार्धांशंमंचं, पादंत्र्यर्धांशं, सपादांशं प्रस्तरम् अर्धांशावेदिः, सार्धांशंकंठं (र्णं), त्र्यंशांशिखरम्, (स)

पादांशास्थूपिकेत्येवं शांतिकम् ॥

पैष्टिकाद्युत्सेधानां पूर्वोक्तांशेषु समांशं संयोज्य पादेषु शिरसिचै-कांशमन्येष्वर्धांशं संयोज्य युक्त्यासर्वमूह्यैव कुर्यात् एतेषां विन्यासविशेषः मूर्त्तिभेदं च उत्तरतो वक्ष्यामः ।

## चतुस्तलस्य

अथ चतुस्तलविधिं वक्ष्ये - व्यासायामं सप्तदशभागं कृत्वा त्र्यंशंगर्भगृहं, तत्परितश्चैकांशे गृहपिण्डयलींद्र हारादीन् कल्पयति तत्तत्तलावसाने कूटशालाद्यैस्तत्तद्भित्तिं समापयेत् । अधस्तलं सर्वत्रघनमेवकृत्वा तस्योर्ध्वे परितोऽलिन्द्रं त्यक्त्वा तदभ्यंतरे परितोऽलिन्द्रत्रये प्रगादि चतुर्दिक्षु मुखमण्डपसंयुक्तं गर्भगृहं संकल्प्य पुरुषादीन् संस्थापयेत् आग्नेयादि कोणेषु प्राङ्मुखं पश्चिमाभिमुखं तथैव कृत्वा कपिलादीन् संस्थापयेत्, तदूर्ध्वे परितोऽलिन्द्रं त्यक्त्वा मध्ये विष्णुमूर्त्तेर्गर्भागारं मुखमण्डप संयुक्तं, दक्षिणे नरनारायणयोः, पश्चिमे नृसिंहस्य, उत्तरे नरनारायणस्य गर्भागारं कृत्वा तदूर्ध्वे परितोऽलिन्द्रं त्यक्त्वा मध्येप्राङ्मुखशयनस्य गर्भागारं मुखमंडपं च कृत्वा परितस्तलं प्रति चर्यासोपानं प्रदक्षिणवशेनयुक्तितः कुर्यात् ॥

उस्सेधं पंचत्रिंशदंशं कृत्वाधिष्टानं त्र्यंशं, षडंशंपाद, द्व्यर्धांशं प्रस्तरं, पंचांशंपादं, व्यंशंमंचं, चतुरंशंशरणं, सार्धांशंकपोतं, त्र्यंशं पादं, सपादांशंमंचम् अर्धांशा वेदिका, एकांशा ग्रीवा, त्र्यर्धांशं शिखरं, पादोनद् व्यंशास्थूपिकेत्येतत् शांतिकम् । पौष्टिकाद्युत्सेधानां पूर्वोक्तांशेष्वष्टांशं संयोज्य पादेषु शिरसिचैकैकांशं संयोज्य शेषं समूह्यैव कुर्यात् । शिखरे पादांशं हित्वा स्थूप्यासह संयोजयेदित्येके ॥

अथ पंचतलं वक्ष्ये - पूर्वोक्तांशेषु तारे चतुरंशं संयोज्य परितोऽलिन्द्रं हारे संकल्प्याऽधरतलं घनमेवकृत्वा उपरितलेऽष्टदिक्षु गर्भगृहं संकल्प्य प्रागादि नृसिंहादीन् संस्थापयेत् । तस्योपरि चतुस्तलोक्त प्रकारैरेव कुर्यात् । उत्सेधेषु पूर्वोक्तांशेषु षोडशांशं संयोज्य अधस्तलस्याऽधिष्टानं चतुरंशम् अष्टांशंस्तंभं, चतुरंशंप्रस्तारम् (ए)ष विशेषोऽन्यत्सर्वं पूर्ववत् । तस्मिन् पौष्टिकाद्युत्सेधानामधस्तस्य पादे चैकांशम्, अन्ययोश्चैकांश पूर्वोक्तांशेषु योजयित्वा शेषं सर्वं समूह्यैव कुर्यात् ॥

एवं षट्तलादि द्वादशतलांतं तारे चतुरंशं, तुंगे कालांशं संयोज्य उत्सेध भेदार्थं द्व्यंशाधिक विभक्तेर्विनैव तलंप्रति युक्त्या संयोज्यकुर्यात् । सर्वेषां तलानामधस्तलं घनमेव कृत्वा षट्तलस्य द्वितीयतले प्राच्यां मध्ये पंचवीरान्, दक्षिणे राघवम् उत्तरे कृष्णं च, दक्षिणे मध्ये नृसिंह्मं, तत्पूर्वे वामनं, पश्चिमे त्रिविक्रमं, पश्चिमे मध्ये वाराहं, दक्षिणे परशुरामम्, उत्तरे बलभद्रं च उत्तरमध्ये कल्किं (कि)णं पश्चिमे कूर्मरूपं पूर्वे मत्स्यात्मकं च, गर्भगृहे संस्थापयेत् । तदुपरि पंचतलोक्तवत् ॥

समतलस्यद्वितीयतले देवस्य विजयक्रीडारूपाणि प्रगादि दिक्षु, विदिक्षु, अंतरालेषु, पूर्ववद्गर्भगृहं कृत्वा स्थापयेत् ॥

अष्टतलस्य द्वितीयतले प्राच्यां दक्षिणाद्युत्तरान्तं सनकं सुभद्रं मित्रं सनातनं च प्राङ्मुखं, दक्षिणे पश्चिमादि प्रागन्तं सुखावहं हयात्मकं मित्रं सर्वांश्च दक्षिणा मुखान्, पश्चिमे दक्षिणाद्युत्तरान्तं सनंदनं रामदेवं शिवं सनत्कुमारं च पश्चिमाभिमुखान्, उत्तरे पश्चिमादि प्रागन्तं संवहं पुण्यं विश्वं सुवहं चोत्तराभिमुखान् गर्भगृहं कृत्वा स्थापयेत्, अन्यत्सर्वं पूर्ववत् ॥

नवतलस्च द्वितीयतले प्रागादि दिक्पालान् आदित्यांश्च वसून् रूद्रान् मरुतो विश्वान् समऋषीन् समरोहिणीः मातृगणानपि गर्भगृहं कृत्वा स्थापयेदन्यत्सर्वं पूर्ववत् । सर्व स्मिन् यथेष्टस्थाने गर्भगृहं कृत्वा सर्वान् देवान् कल्पयेत् । दशतलाद्युक्ततलान्तं तलंप्रति यथाक्रमेण पीताभं महाविष्णुं रुक्माभं सदाविष्णुं, स्फटिकाभं नारायणं, चतुर्भुजं देवीभूषणायुधैस्सह स्थानकासनशयनमार्गेष्वेतेष्विष्टमार्गेण संस्थाप येत् । अथवा द्वितलादि द्वादश तलान्तं क्रमेण विस्तारं त्रिभागादि त्रयोदश भागान्तं विभज्य एकांशं गर्भगृहं शेषांशै र्गृहपिंड्यलिन्द्रभागादीन् कूटशालादींश्च व्यासोपान संयुक्तं वेणुरंध्रवत्, गर्भोपरि गर्भगृहं मुखमंडपं च परिकल्प्य आदितलं घनमेव कृत्वा उपरितलत्रये महाविष्णुं, सदाविष्णुं नारायणम् अन्येष्वधस्तात्स्थान-कासनशयनभेदेन विष्णुमूर्तिं पूर्ववत्संस्थापयेत् । अष्टतलादूर्ध्वं मूर्त्तिस्थापनं नाचरेदित्येके । सर्वेषु विमानेषु विस्तारात्रिभागै कविशालमेकदंडाद्य-र्कदंडान्तं द्वादशभेदैर्निर्गम युतं मध्यभद्रं कुर्यात् । महद्विमानं चेत् द्वयोः पार्श्वयोश्च कूटशालादीन् कल्पयेदित्याह मरीचिः ॥

इति श्रीवैखानसे मरिचिप्रोक्ते विमानार्चनाकल्पे द्वितलादिविधानं नाम दशमः पटलः ॥१०॥

# अथ एकादशः पटलः

## प्राकारः

अथ प्राकारलक्षणं वक्ष्ये - रक्षार्थं मंगलार्थं शोभार्थं तत्प्रासादार्धं, त्रिपादं, समं, पादाधिकं, अर्धाधिकं वा, प्रथमावरणम्। तत्समं, पादाधिकं, अर्धादिकं, पादोनद्विगुणं, द्विगुणं, त्रिगुणं, चतुर्गुणं, पंचगुणं वा, दितीयावरणम्। तस्योक्त प्रमाणेष्विष्टमानेन तृतीयावरणादि सप्त प्राकारांतं कारयेत्। प्रासादं परितश्चतुरश्रीकृत्य तत्पादाधिकमर्धाधिकं पादोनद्विगुणं द्विगुणं द्विगुणार्धं त्रिगुणार्धं चतुर्गुणंवा मुखायामं प्रथमावरणस्य, तत्परितश्च-तुरश्रीकृत्यैव द्वितीयावरणादि सर्वप्राकाराणां मुखायामं प्रयोक्तंव्यं। अथवा सर्वप्राकाराणां प्रासादं परितश्चतुरश्री कृत्यैवं मुखायामं योजयेदिति केचित्। हस्तमानं त्रिधाप्रोक्तम् अधमंमध्यममुत्तममिति यथाक्रमेण त्रिपंचसप्तहस्तमधमं त्रयं, नवैकादशत्रयोदशहस्तं मध्यमंत्रयं, पंचदशसप्त-दशैकोनविंशतिहस्त मुत्तमंत्रयम्। एवमेव सप्तप्राकारान्तं कारयेत्॥ तेषां मुखायामं पूर्ववत्।

प्रमुखे दक्षिणे पश्चिमे उत्तरे वा विस्तीर्णे देशे तत्तद्दिशि बाह्य प्राकारसममायामं, तत्समं त्रिपादमर्धं वा विस्तारमंकणं कृत्वा तस्मिन्नास्थानमण्डपं कारयेत्।

आलयाभिमुखे वोत्तरे वा बहूदकं विस्तीर्णं तटाकं कृत्वा तत्परितः शिलया इष्टकया वा तीरं कारयेत्। तत्तीरे मनोरमे वा आस्थानमण्डपं कुर्यादितिं केचित्।

तटाकस्य पश्चिमे तीरे तीर्थस्थानं प्राङ्मुखं त्रिपंचसप्तनवैकादश-हस्तैस्समाश्र, मायताश्रं वा, युग्मयुग्मांघ्रिभित्तिकं, मंडपं कूटं प्रपां वा कुर्यात्। तद्बाह्ये प्राकारं कारयेदितिकेचित्।

एकप्राकारमधमं, द्विप्राकारं मध्यमं, त्रिप्रकारमुतमंस्यात्। त्रिप्राकारं मध्यमाधमं चतुष्प्राकारं मध्यममध्यमं, पञ्चप्राकारं मध्यमोत्तमस्यात्। पञ्चप्राकारमुत्तमाधमंस्यात्। षट्प्राकारमुत्तममध्यमं, सप्त प्राकारमुत्तमोत्तमं स्यात्। प्राकाराणां भित्ति विष्कंभं हस्तं पादाधिक मर्धाधिकं, पादोनद्विगुणं, द्विगुणं वा, तत्त्रिचतुष्पञ्चषद् सप्ताष्टनवगुणितं भित्युत्सेधं विस्तारादष्टमां-शोनमग्रविपुलं प्रासादस्यपादाद्वा, प्राद् पानाद्वा, प्राकारभित्त्यंतरमुत्तमं,

भित्तिमध्ये मध्यमं, भित्तिबाह्ये चाधमं, तेषां प्रमुखद्वारं गोपुरं कृत्वाऽधस्ताद्वारि मार्गं प्राच्या, मुदीच्यां वा दक्षिणोत्तर पश्चिमेषुक्षुद्रद्वारं च, युक्तितः कारयेत् । एतेषां बहिरावरणपृष्टेप्येवं द्वारं गोपुरं वा कुर्यात् प्रथमावरणंविना अन्येषां कारयेदित्येके ।

तन्नवधा कृत्वा द्विभागमधिष्टानं, समांशंपादायामं, मानाङ्गुलेन षष्टयङ्गुलादूर्ध्वं षडङ्गुलवृध्यऽष्टोत्तरशताङ्गुलान्तं स्तंभोच्चं नवधा भवति समाङ्गुलं समारभ्यैकाङ्गुलवृध्यापंञ्चदशाङ्गुलान्तं नवविधं पादविष्कंभं, सार्धद्विहस्तादूर्ध्वं पादवृध्यासार्धचतुष्करान्तं नवधा भित्तिमानम्, उत्तरार्णः परितः प्राक्पश्चिमयोरुत्तराग्रं, दक्षिणोत्तरयोःप्रागग्रं, संयोज्य तस्योपरितलादीनि सन्यसेत्, एवमेव शिलाजं चाऽऽस्तरेत् ऊध्वे लुपाभिस्संछादयेदिति केचित्। शिलास्तंभोपरि दारुस्तंभं प्रयोक्तंव्यं, दारु स्तंभोपरि शिलास्तंभं न योजयेत् । अथवा तन्मुखायामं युग्मभित्तिसमायुक्तं द्वारादिकं नानोत्तराणि सन्यस्य तस्योपरि प्रागन्तमुत्तरान्तं च तुलादीन्यास्तरेत् । द्वारे द्वारशोभादि भेदेष्वेकमार्गेण गोपुरं कारयेत् । अथवाऽधिष्टानांते द्वारं हित्वा द्वारबाह्ये चोभयोः पार्श्वयोरभ्यंतर भित्तिवशादेकभित्ति (भक्ति) युक्तं सोपानं कारयेत् । तद्वत्स्तंभतुला दीनि युग्मं च संयोजयेत् । अत्रानुक्तं सर्वं शिल्पिशास्त्रोक्तमार्गेण कुर्यात् ॥

## गोपुर

अथ गोपुराणां लक्षणं वक्ष्ये - द्वारशोभा द्वारशाला द्वारप्रासादं द्वारहर्म्यं द्वारागोपुरमिति पञ्चधाभवंति । तेषां क्रमेणविस्तारोव क्ष्यतेमूल प्रासादविशालं द्वित्रिचतुष्पञ्चषडंशं कृत्वा एकांशोनंद्वाराशोभादी-नामाभासानां विशालंस्यात् समाष्टनवदशैकादशभागं कृत्वा एकांशोनं-विकल्पनां चतुष्पञ्चषट्समाष्टांशं कृत्वा एकांशं व्यपोह्य शेषांशैर्मध्यमानां, त्रिभागैकमर्धं त्रिभागं द्विभागं चतुः पञ्चांशयोरेकोनमि तिद्वारशोभादीना-मुत्तमानां विशालंस्यात् । अथवा हस्तमानेनद्विहस्तादिद्व्यष्ट (द्विरष्ट) हस्तान्तमेकहस्तविवृध्या द्वारशोभादीनामेकैकं त्रित्रिभेदे (क्षुद्रां) त्रिःपञ्चभेदं त्रिहस्ताद्येकत्रिंशत् करांतं द्विद्विहस्तविवृध्याद्वारशोभादीनामल्पानां विस्तारं त्रिःपञ्चभेदं स्यात्, नवहस्तादि समत्रिंशत्करां तद्वि द्विहस्तविवृध्यामध्यमानां विशालं त्रिः पञ्च भेदं स्यात् । अथोत्तमानांविशालं पञ्चहस्तादि त्रयोदश

हस्तान्तं द्विद्विहस्त विवृध्याद्धारशोभाविशालं पञ्चविधं भवति । पञ्चदशहस्तादि त्रयोविंशति हस्तान्तं द्विद्विहस्त विवृध्या द्वारशाला विशालंस्यात्, पञ्चविंशति हस्तादि त्रयस्त्रिंशद्धस्तांतंद्वारप्रासाद विशालं, पञ्चत्रिंशत्करादि त्रिचत्वारिंशद्धस्तान्तं द्वारहर्म्यविशालं नवपंचकरादि त्रिपञ्चाशत्करान्तं द्वारगोपुरव्यासमित्येवं पञ्चानां व्यासं पञ्चविंशतिभेदं विधीयते । तेषामुदितं विशालस्य पादार्धं, त्रिभागाद्द्विभागं, पादोनद्विगुणं, द्विगुणं वा, यामं पञ्चविधंस्यात् । उत्सेधविन्यासगण्यालंकारदीनि सर्वाणि मूलप्रसादस्योक्त मार्गेणैकतलाद्यर्कतलान्तं समूह्यैव गोपुराणि कारयेत् ।

आधिष्ठानं पादबंधमेवद्वारविस्तारं सार्धहस्तं त्रिपादहस्तं द्विहस्तं सार्धद्विहस्तं पादोनत्रिहस्तं त्रिहस्तमिति सप्तधा भवति । तत्तद्द्विगुणमुत्सेधं स्यात् ॥ अथवा मूलभूमेरधिष्ठानांघ्रितुङ्गद्धारतुङ्गतदर्धविस्तारम् अथवा द्विहस्तविस्तारात्र्यंङ्गुलाद्येकविंशत्यङ्गुलान्तं द्व्यंङ्गुलविवृध्याद्धारविस्तारं दशधा भवति । गोपुराणां निर्गमं विस्तारार्धं त्रिभागैकं पञ्चभागाद्विभागं, प्राकारभित्ति बाह्यतः कुर्यात् । अन्यत्सर्वं मूलप्रासादस्योक्त विधिना कारयेत्॥

## परिवारालय

अथ परिवाराणामालयं गर्भव्याससमं पादहीनमर्धं वा, अथवा त्रिहस्तं, पञ्चहस्तं वा, मुखमंडपसहितं (कृत्वा) स्थापयेत् ॥ परिवाराणां ध्रुवकौतुकसंयुक्तमुत्तमं, कौतुकंविना तत् स्थाने पीठम् कृत्वार्चयेन्मध्यमम् आलयं ध्रुवकौतुकं च विना यथोक्ते देशे शैलान्यैष्टकानि वा मानांगुलेन, मात्रांगुलेन वा, द्वादशांगुलोत्सेधानि तदद्विगुणायत विस्ताराणि, त्रिवेदि सहितानि, पीठानि कुर्यात् । अथवा एकवेदिकं यथालाभप्रमाणेन पीठं कृत्वा कारयेदिति केचित् । एतदधम मार्गार्चनं स्यात् । अन्यथा महत्तरो दोषो भवति । परिवाराणामालयं मुखमण्डपं कूटं वा प्राकारा-श्रयमेव कर्त्तव्यम्, पीठश्चेदालयाश्रयमेवकारयेदित्येके ॥

अथ आलयाभिमुखे महामण्टपं मूलालयस्थसम, मध्यर्धं द्विगुणार्धं, त्रिगुणं, त्रिगुणार्धं, चतुर्गुणमिति समचतुरश्र, मायतचतुरश्रं वा युग्मपाद युग्मभक्तिकं मूलधाम्नादि भूमिप्रमाणेनाऽधिष्ठान पाद प्रस्तराणि कृत्वा संछाद्य मध्ये सभां युक्त्या कल्पयेत् ।

तत्प्रमुखे तथैव नृत्तमण्डपं आग्नेयादि कोणेषु तथैवास्थान मण्डपं कारयेत्। प्रथमावरणे द्वितीये वामाधि (लि) काविहीने च आलयाभिमुखे, मंडपपूर्वे सोपानपूर्वे वा, स्नपनागारं, मंडपं, कूटं वा, नेकद्वारयुतमेकद्वारयुतं वा कृत्वा द्वितीयावरणे, तृतीये वा, आग्नेय्यां पचनालयं विमानसमं, पादाधिक, मर्धाधिकं, पादोनद्विगुणं द्विगुणं, द्विगुणार्धं, त्रिगुणमिति विस्तारं समधा भवति विस्तारात्पादाधिकमर्धाधिकं वा आयामं चतुरश्रं चतुरश्चतुः शालोपेतं तन्मध्ये रूपं तद्दक्षिणतो मूलधाम पादुकादि प्रस्तरान्तोत्सेधं चतुर्धा कृत्वा एकांशमधिष्ठानं सोपपीठं वा द्व्यंशं पादवर्ग, मेकांशंप्रस्तरं, प्राकाराभ्यन्तरं प्राकारमध्यं प्राकारबाह्यं वा अस्यभित्तिविष्कंभं हस्तमात्रं, पादहीनं, पादाधिकं वा, मंडपाकारंलुपायुक्तं वा कारयेत्। तद्वारदक्षिणे पूर्ववत्प्रथमेष्टकाः शिलावा संस्थाप्य तथैवान्ते च स्थापयेत्। सुधाकर्म कृत्वा अभ्यंतरे प्राच्यां दक्षिणाद्युत्तरान्तं चुल्लिं। युग्मायुग्म संख्या (ख्य) दक्षिणशालामध्ये नित्याग्निकुण्डं पश्चिमशालामध्ये सोपान द्वारम्, उत्तरतो हविर्द्रव्यो पसंचय स्थानम् अधस्ताद्दक्षिणतः प्राच्यां वा वारिमार्गं च कारयेत्। प्रथमावरणे द्वितीये वा दक्षिणे होमस्थानं कारयेदिति केचित्। यागशालां द्वितीयावरणे आग्नेय्यां वा पञ्चहस्तनवहस्तायत विस्तारं चतुर्द्वारयुतं मण्डपं कूटं वा कुर्यात्। अत्राऽनुक्तंसर्वं शिल्पिशास्त्रोक्तविधिना कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे प्राकारगोपुरादि-विधिर्नाम एकादशः पटलः ॥११॥

# अथ द्वादशः पटलः

## परिकारस्थान

अथ परिवारस्थानं वक्ष्ये - मुखमण्डपसोपानमध्ये श्रीभूतं, प्रथमावरणाद्यग्रायामं चतुर्धा कृत्वा सर्वत्रापितृतीयांशे श्रीभूतगरुडस्य चक्रध्वजशंखमहाभूताऽक्षहन्तान् क्रमेण परिकल्पयेत्। अथवा द्वितीयावरणे द्वितीयांशे गरुडं, तृतीयांशे चक्रं, तृतीयावरणे द्वितीयांशे शंखं, तृतीयांशे ध्वजम्, चतुर्थावरणे तृतीयांशे यूथाधाधिपं, पञ्चमावरणे तृतीयांशेऽक्षहन्तम्, अथवा गोपुराद्बाह्ये प्रासादस्यार्ध समायामं नीत्वा तत्रैव अक्षहन्तस्य पीठं

परिकल्पयेत् । अथवा सर्वत्र प्रथमावरणाद्यंकणस्याऽग्रायामं चतुर्धा कृत्वा विमानपार्श्वादि द्वितीयांशे गरुडं, तृतीयांशे बलिपीठञ्च कल्पयेदिति केचित् । परिवाराणामालयं, पञ्चनालयं, पुष्पसञ्चय स्थानम्, उदकपानीय स्थानं; नृत्तमंडपञ्च, मूलधामप्रेक्षं; स्नपनमण्डप मास्थनमण्डप प्राकारं, गोपुरं च, बहिर्मुखं, विमानगर्भगृहमभ्यन्तरमुखं ज्ञात्वैवमारभेत ॥ प्राग्द्वारे देवतागारे प्रथमावरणे द्वितीये वैन्द्रैशानयोरंतरे स्नानोदकपानीयपुष्पसंचयस्थानं, प्लोतवस्रोत्तरीय गन्धतांबूलाद्यर्चनाद्रव्यसंचयस्थानं च, ऐन्द्राग्न्योर्मध्ये शय्यादेशम्, उत्तरद्वारं चेत् सोमोदानयो र्मध्ये स्नानोदकादि द्रव्यसंचयस्थानं, सोमेशानयोर्मध्ये शय्यास्थानं च, सर्वत्रापि महानसमाग्नेयमेव कारयेत् ॥

परिषद्देवानां स्थानं वक्ष्ये - गर्भगेहे ध्रुवबेरस्य पादयोर्मध्ये विष्णुः तत्प्रागादीशानान्तं पुरुषकपिलसत्ययज्ञाच्युतनारायणानिरुद्धपुण्याश्च, द्वितीयावरणे वाराह सुभद्र नारसिंह्येशितात्मवामनसर्वोद्वहत्रिविक्रम सर्वविद्येश्वराश्च, तृतीयावरणे इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरै शानाश्च, दक्षिणेश्रीः, वामेहरिणी च, कर्मार्चास्थाने सुभद्रसर्वहयात्मकसुखवहराम-देवसंवहपुण्यदेवसुवहाश्च, द्वितीयावरणे मित्रसनातनात्रिसनन्दन-शिवसनत्कुमारविश्वसनकाः, तृतीयावरणे इंद्रादयः, दक्षिणे भित्तिपार्श्वे पितामहपुण्यौ, वामे गंगाधरपद्मापितरौ, द्वारेषु धातृबिधातृभुवंगपतंगपतिर-वरुणाश्च, न्यक्षादि विमानपालाः शिखाग्रे स्थूप्यधस्तात् प्रागादि चतुर्दिक्षु बहिर्मुखासीनाश्चा अधस्तादधिष्टानवर्गं, परितः प्रागादि न्यक्षविवस्वंत-न्मित्रक्षत्तारः, पीठेषु समर्चनीयाः, मनिकसंध्येऽभ्यन्तरद्वारे मुखमण्डपद्वारे विखनसतापसौ, प्रथमावरणादि सप्तप्राकार द्वारेषु किष्किन्धबहुमर्दतीर्थौ, विघ्नेशनागेशौ, शंखपद्मौ, तुहिणबलिंदौ, नंदकशार्ङ्गौ, चक्रचूलि शंखचूलिनौ, चंडप्रचंडौ चेत्येतानष्टादश द्वारपालानर्चयेत् । सोमेशानयोरन्तरे विष्वक्सेनं, प्रथमावरणाऽऽद्यंकणे चतुर्भाग् द्विभाग श्रीभूतगरुडचक्रध्वजं शंख यूथाधिपाक्षहांतानेताननपायिनश्च तत्तत्सूत्रे संयोज्यैवाऽर्चयेदिति केचित् । प्रथमावरणे, द्वितीयेवा, प्रागादीशानान्तं इन्द्रादीन् प्राग्द्वारादि द्वारदक्षिणपार्श्वेषु कोणेषु च, प्राग्द्वारादुत्तरे भास्करमिंद्रात्दक्षिणाद्यंतराले, चंद्रांगारक बुध बृहस्पतिकाव्यमन्दराहुके-तूनेतान् गृहांश्च, तृतीयावरणे गंगा यमुनानर्मदासिंधूः, प्रागादिचतुर्दिक्षु तत्तद्वारदक्षिणपार्श्वे पूर्वद्वारोत्तरे दुर्गांआग्नेयादिषुकोणेषु, सिद्धिं श्रियं ज्येष्ठां

धात्रीं च अन्तराले सुधासुंदरी सुव (स्वा) हास्वधामायासंहलादि नीराकासिनीवालीश्च पचनालये हवीरक्षकं, पुष्पमण्डपे पुष्परक्षकं, वारिसंचयस्थानपार्श्वेपुरुषं, प्लोतवस्त्रोत्तरीयादि द्रव्यसंचयस्थानपार्श्वे त्वष्टारं, शय्यास्थाने कौमोदकीं, हविर्द्रव्यादि संचयस्थाने सर्वेश्वरं, होमस्थाने बलिरक्षकमर्चयेत्। चतुर्थावरणे पूर्वद्वारोत्तरे गविष्ठं, दक्षिणे पृथिवीं पश्चिमे दक्षिणे अग्निम्, उत्तरे वायुंच, आग्नेयादिषु कोणेषु ऋग्यजुः सामाथर्वणश्च, अन्तराले शिवं विष्णुं तक्षकं शुभं भूतनायकं पवित्रं पावनं क्षितिजं च। पञ्चमावरणे पूर्वद्वारोत्तरे दक्षिणे चक्रंह्रीमनुमतिं; दक्षिणे ब्रह्माण्याद्यास्सप्त-मातृः, पश्चिमे जयाद्यप्सरसश्च, उत्तरे कुण्ठिन्यादि सप्तरोहिणीश्च, आग्नेयादिषु कोणेषु वत्सरादीन् प्राणा (दीन्म) रुतः, शतरुद्रानन्तराले वा ईशानेंद्रयोरन्त (र) राले अजैकपदः एकादशरुद्रादीन्, इंद्राग्न्योरन्त रालेधात्रादि द्वादशादित्यान्, यमाग्नेययोरंतरे गन्धर्वान्, यमनीलयोर्मध्ये मुनीन्, नीलवरुणयोर्मध्ये अमृतजान्, वरुणोदानोर्मध्ये, अश्विनौ, सोमोदानयोर्मध्ये विद्याधरंश्च, षष्ठावरणे प्राग्द्वारादुत्तरे तुंबुरुं, तद्दक्षिणेनारदं, दक्षिणे ऋतून्, पश्चिमे प्रजापतिम्, उत्तरे मुद्गलम्, आग्नेय्यां हलेशं, नैर्ऋत्यां यक्षं वायव्यां जांबवन्तं, ऐशान्यां सुरमम्, अन्तराले प्राच्यामुत्तरे किन्नरमिथुनं, तद्दक्षिणे प्रह्लादं, दक्षिणे कामंविपां च, पश्चिमे व्याजि (जु) नीं कामिनीं च उत्तरे प्रभांसुंदरीं च, सप्तमावरणे पूर्वद्वारोत्तरे ब्रह्माण, तद्दक्षिणे अर्यम्णं, दक्षिणे दंडभृतम्, उत्तरे धनदम्, आग्नेयादिषु कोणेषु सवितृसावित्रौ, इंद्रं (इंद्रें) द्रानुजौ, रुद्ररुद्रानुजौ, अपापवत्सौचान्तराले प्रागादि चतुर्दिक्षु ईशादि पददेवान् क्रमेण कारयेत्। अत्रानुक्तान् सर्वान् बाह्ये महत्पीठं कृत्वा सर्वे देवा इति संकल्प्याऽर्चयेत्। एतेषामनुक्तं सर्वं भृगूक्त विधिना कारयेत्। यूथेशपीठं यथोक्तेदेशे गर्भागार विस्तृताद्वारोत्तुङ्गाद्वा, पंचभागत्रिभागैक-भागमर्धं वा हस्तमानेन त्रिहस्तं द्विहस्तम् एक हस्तंवा पीठस्यायामविस्तारं तत्समोत्सेधं, तन्मध्येपूर्व वत्प्रथमेष्टकां शिलां वा विन्यस्य पीठोत्तुङ्गं-षोडशांशं कृत्वा एकांशमुपानं, चतुरंशाजगती त्र्यंशंकुमुद मर्धांशंकंपं, चतुरंशकठं, अर्धांशंकपं, द्व्यर्धांशामहापट्टिका तदूर्ध्वंकंपंअर्धांशं (चतुर्दिग्मध्यमहद्व) शंखनादसमतद्भूताकारयुक्तं वियुक्तं वा कृत्वा समासेष्टकांविन्यस्य ततुरीयांश मूर्ध्वपद्मं, तत्पद्मं पचधाकृत्वा एकांशंपद्माऽऽधारवृत्तकंपं तस्योर्ध्वे द्व्यंश मधोदलं, शेषांशमूर्ध्वदलम्, ऊर्ध्वाधः षोडशदलैः युक्तं कुर्यात्। पद्मतुंगस्यपादांशेनाऽर्धांशेन वा

उपपीठंकारये दिति केचित् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे परिवारस्थान निर्णयो नाम द्वादशः पटलः ॥१२॥

# अथ त्रयोदशः पटलः

## गर्भ न्यासविधिः

अथ गर्भ (वि) न्यासविधिं वक्ष्ये-समुद्रात्पर्वतान्नदीतीरात्त्ङदात् खलाद्वल्मीकात्कुलीर वासात् गजदन्तोद्भेदा वृषविषाणोद्भेदाच्च मृत्तिकां, वज्रमौक्तिक वैडूर्य स्फटिक पुष्यक चन्द्रकान्त नील ब्रह्ममणीन्, मनश्शिलाहरिता लांजन श्यामसीससौराष्ट्रगोरोचना गैरिकपारता (दा)न्, शालि नीवारक कंकुमाष कुलुत्थ निष्पावतिल मुद्गयवान्, सुवर्ण रजत ताम्र पित्तलायसाऽऽरकूट वृत्त लोह वैकृत त्रपु सीसान्, यथाक्रमेणाहरेत् ।

हेमरूप्य ताम्रायसलोहांश्च, पद्मोत्पल कुमुद कल्हार कन्दांश्चऽऽहरेत् । सुवर्णेन चतुर्वर्णचिह्नानि स्रुक्स्रुव कमण्डलुजुहूपजुहूपभृत् छत्र चामराङ्कुश ध्वज तुलातोद्युगलाङ्गूलादीनि, गज गरुड कच्छपांश्च, शंखचक्रगदाशार्ङ्गाऽसींश्च पञ्चायुधांश्च (नीच) श्रीवत्सपूर्णकुंभ भेर्याऽऽदर्शमत्स्ययुग्माऽङ्कुश शंखाऽऽवर्त्तानष्टमंगलान् यथालाभ मानेन कारयति ।

फेलायामविशालं त्रिपञ्चसप्तनवैकादशत्रयोदशपंचदशासप्तदशैकोन-विंशत्येकविंशति त्रयोविंशतिपंञ्चविंशत्यङ्गुलमेतद्यथाक्रमेणैकतलादि द्वादशतलान्तं विमानानां गर्भभाजनं, तद्भित्युच्चत द्विस्तारसमं अष्टांशोनं षट्भागोनं पंञ्चभागोनं वा तस्यबाहुल्य एकद्वित्रिचतुर्यवं नवकोष्ठ्युतां छिद्रांरम्यां फेलां कारयति । कोष्टभित्युच्चं विस्तारार्धं त्रिभागैक भागंवा तत्पादानां यथोचितमर्धांगुलभित्युच्चं निर्वृणंवृत्तं चतुरश्रं वा शुद्धेन ताम्रेण वा कारयेत् । अथवा तत्प्रसादविष्कंभ तदष्टांशोनं, तत्पादहीनं वा, फेलाऽऽयाम विशालं शेषं पूर्ववत् । शुभेकर्त्रनुकूलेनक्षत्रेराशौ शुभोदये गर्भन्यासं कुर्यात् ।

आलयाभिमुखे दक्षिणे वा, प्रपांकृत्वा तोरणाद्यैरलंकृत्य तन्मध्ये द्विहस्ताऽऽयत विस्तारां तालोत्सेधां व्रीहिभिर्वेदिं कृत्वा तत्प्राच्यामाह-

वनीयाग्निकुंडं कृत्वा सायाह्ने देवाभिमुखे धान्यराश्युपरि प्रागग्रं वस्त्रमास्तीर्य फेलां विन्यस्य तस्मिन्मृदादिद्रव्याणि संभृत्य आचार्य श्चोत्तराभिमुखोभूत्वा गायत्र्या प्रणवाद्यायतानि द्रव्याणि संप्रोक्ष्य 'मेदिनी' ति फेलामभिमृश्य ब्रह्मादि नवपदेषु तत्तद्देवत्यमन्त्रेण मृद्रत्नधातुबीज लोहान् क्रमेण सन्यस्य पञ्चायुधान् तत्तन्मन्त्रै र्मध्यमादि चतुर्दिक्षुविन्यस्य मध्ये ब्राह्मणादि वर्णचिह्नानि चतुर्दिक्षु हेमादि लोहान् पद्मादिकन्दानि तत्तद्दिगीशमन्त्रैः पृथक् पृथक् विन्यस्य गजगरुडकूर्मरूपाणि बाह्यपदे तत्तन्मन्त्रेण विन्यस्य ऽष्टदिक्षुमंगलान् यथाक्रमेण तत्तद्दिगीशमंत्रैस्सन्यस्य उत्तराच्छादनेन आच्छाद्य दिक्परिच्छेदं कृत्वा रात्रौतस्याऽऽलयस्योत्तरे वास्तुहोमं हुत्वा पर्यग्नि पञ्चगव्याभयामालयं संशोध्य पुण्याहं वाचयित्वाऽऽहवनीया (ये आ) घारं हुत्वा धान्यवेद्यां पञ्चवस्त्राण्यास्तीर्य तन्मध्ये फेलां द्रव्यसहितां स्वस्तिसूक्तेन सन्यस्य तस्यां नागेन्द्रं तत्परितश्च इंद्रादिलोकपालांश्चऽऽभ्यर्च्यवस्त्रेणावेष्टयोपरि पुष्पाणिविक्षिप्याऽधिवास्य अग्निंपरिस्तीर्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीसूक्तं महीसूक्तं ब्राह्मं नागाधिदेवत्यं दिग्देवत्यं च हुत्वा पञ्चायुधेभ्यो नागराजाय इद्राय अग्नये यमाय निऋतये वरुणाय वायवे सोमाय ईशानाय नारायणाय सर्वरत्नेभयः सर्व धातुभ्यः सर्व बीजेभ्यः सर्वलोहेभ्यो नदीभ्यः पाताळेभ्यो वृक्षेभ्यो नागेभ्यो दिग्गजेभ्यः स्वाहेति व्याहृत्यन्तं हुत्वा अन्तः परिषेकं कृत्वा तद्रात्रौ सुमुहूर्त्ते प्राप्ते यजमानः आचार्यादीन् बस्रोत्तरीयाभरणैरलं कृत्य दक्षिणां दद्यात्, आचार्यस्तद्भाजनं शिरसाधारयन् वाद्यघोष समायुक्त मालयं प्रदक्षिणी कृत्य अभ्यंतर द्वारदक्षिणे स्तंभसमीपे, यजमानो ब्राह्मणश्चेत्पट्टिकोपरि क्षत्रियश्चेत्कुमुदोपरि वैश्यश्चेज्जगत्युपरि शूद्रश्चेत्पादुकोपरि च एवं स्थानं संकल्प्य तस्मिन्मेदिनीमभ्यर्च्य आत्मसूक्तं जप्त्वा 'इदंविष्णोर्वीर्यमि' ति ध्यात्वा मेदिनीदेवी, विष्णुर्योनिं ध्रुवसूक्तं च, जप्त्वा तत्रैवगर्भं संस्थापयेत् । पश्चादग्निमासाद्य स्विष्टाकारं पूर्णाहुती च यजेत् । अग्निंविसृज्य शिल्पिनमाहूय दृढं कृत्वा तस्योपरिविधिना विमानं कारयेत् ।

अथ समासेष्टकाशिला विन्यासविधिं वक्ष्ये - पूर्वपक्षे कर्तुरनुकूलर्क्षे शुभेमुहूर्त्ते समासिकां कुर्यात् । विमान मेकद्रव्यकृतं (चेत्) श्रेष्ट 'म्' द्विद्रव्यकृतं मध्यमम्, त्रिद्रव्यकृत मधमम् । एकद्रव्यकृत विमाने तद्द्रव्येण मूर्धेष्टका विन्यसेदन्ययोर्यद्रद्व्यकृत मुपरिस्थलं तेनैवमूर्ध्नविन्यासं कारयेत्॥

इष्टकोपरि पादुकात्पङ्क्तिकान्त शिलयैवकृतं चेन्न दोषाय भवेत्। शिलया इष्टकयादारुणा वा पादुकादि स्थूप्यंतंयत्कृतं तदेकद्रव्यकृतम्, मसूराकान्तं प्रस्तरान्तं वा शिलयैव कृत्वा शेष (शिष्ट) मिष्टकाकल्पितंयत्। तत्तद्विद्रव्य-कृतम्। एतदेव शिखरं लुपाविधानेनकृत्वोपरिलोष्ठाछादनं यत्तत्रिद्रव्यकृतम्। शक्तश्चेत्तदेवताम्ररजत रुग्मै (कमै) राछादयेत् एतदुत्तमं भवति। सर्वेषां स्थूपिं लोहभाजनमेव कारयेदित्येके। तदालयपादविस्तारद्विगुणा यामां तदर्धविस्तारं तदर्धबाहळयामेव इष्टकां शिलां वा कृत्वा तत्स्थानं शिखराग्रे नासिकापृष्ठे नासिकाग्रांते वा ताम्रजं खादिरं बेरोक्तवृक्षजं वाऽऽहृत्य एकतल प्रासादे बहुतले वा, मूलतले वा पादविष्कंभाद्वादशाऽष्टसमषट्गुणं वा कीलदैर्घ्यं तत्पादविष्कंभात् त्रिभागैकभाग मर्धंवा विस्तारं तत्षडंशैकांशं स्थूपिकाग्रविस्तारं तस्याऽऽयामं समधाकृत्वा त्रिभागमूले चतुरश्रं शेषंसुवृत्तं शिखराकारं वा कारयेत्। अथवा तदूर्ध्वतलपादायाम सदृशं तत्पाद विष्कंभ विस्तारम् अग्रमेकांगुलमालये तन्मध्ये सुषिरं समचतुरश्रं कृत्वा कीलादधस्तात्स शिखं युक्तितः कारयेत्। आद्येष्टकावदंत्येष्टकाना मधिवास होमाद्यं सर्वं स्थूपिकील सहितं कृत्वा कीले विष्णुं तदाधारे महीं प्रागादिष्विष्टाकासु पुरुषाद्यामूर्त्तीः तद्बाह्येप्रागाद्युत्तरांतं न्यक्षं विवस्वंतं मित्रं क्षत्तारंञ्चाऽभ्यर्च्य शयने शाययेत्। प्रतिसरमाबध्योत्तराच्छादनंकृत्वा आहवनीयादिषु पूर्ववध्दोमं हुत्वा रात्रिशेषं व्यपोह्य प्रभाते स्नात्वा आलयमाविश्य प्रदक्षिणं कुर्यात्। यजमान आचार्यादीन्नववस्त्रोत्तरी-याद्यैरलंकृत्य दक्षिणां दद्यात्। स्थापकाः शिलावाऽथेष्टकां वा कीलसहितं समादाय ग्राममालयं वा प्रदक्षिणं कृत्वा ताश्चाऽसकरं विमानं समारोप्य शिल्पिनासार्धं सूत्रं प्रसार्य शिलावाऽथेष्टका वा तन्मध्ये छिद्रे पूर्ववत् प्रागग्रं तच्छिद्रेतन्मूलं तद्दक्षिणे छिद्रे दक्षिणे मूलं पश्चिमे छिद्रे (अग्रं) पश्चिमे मूलम् उत्तरे छिद्रे उत्तराग्रमेवं छिद्रं पूर्ववच्चतुर्वेदादि मंत्रैरूर्ध्वाननं संन्यस्य सुधामालिप्य तन्मध्ये रत्नं, सुवर्णं वा यथा शक्ति विन्यस्य सुधामालिप्य मेदिनीमंत्रेण मयूरांघ्रिंविन्यस्य तस्योर्ध्वसुषिरे विष्णुसूक्तेन स्थूपिकीलं प्रतिष्ठापयेत्। पश्चाच्छिल्पिनमाहूय सुदृढं कृत्वा शिखरं समाप्य तस्मिन् प्रागादि चतुर्दिक्षु न्यक्षादीनावाह्याऽभ्यर्च्य शेषांशं विधिना कारयित्वा शक्तश्चेत्ताम्रजं, राजतं, सौवर्णं वा, कृत्वा तस्याऽधस्तात्सुधावर्णानुलेपं च कारयेत्।

इति श्री वैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे गर्भन्यासमूर्धेष्टका विधिर्नाम त्रयोदशः पटलः ॥१३॥

# अथ चतुर्दशः पटलः

## परिवाराणां नवभेद निरूपणम्

अथ परिवाराणां नवभेदविधिं वक्ष्ये - आलयांतर्गत देवा, द्वारदेवा द्वारपालाश्च, सर्वत्र समाना उच्यन्ते । विष्वक्सेन गरुड श्रीभूत न्यक्ष भूतपीठानि एते पञ्चपरिवारा अधमाधमम्, एतैस्सार्ध मिन्द्रादि (दिग्दे) देवा, भास्कर प्रमुखे चक्रशंखौ च एते षोडशपरिवारा अधममध्यमम्, एतैस्सहिता विवस्व न्मित्रक्षत्तारः, अभिमुखे ध्वज यूथाधिपौ च एकविंशति देवा अधमोत्तमम्, एतै स्सहिताः सिद्धि श्रीहविः पालकस्कंद विघ्नेश सप्तमातृ पुरुषज्येष्ठाभार्गव ब्रह्मचन्द्राश्चैते द्वात्रिंशद्देवा मध्यमाधमम्, एतैस्सह तृतीयावरणे भास्कराऽङ्गारक स्कंद दुर्गा सप्तरोहिणी मन्दसप्तमातृबुधबृहस्पतिपुरुषाश्चैते द्विचत्वारिंशद्देवा मध्यममध्यमम्, एतैस्सह ज्येष्ठाशुक्र गंगासप्तर्षिब्रह्म चन्द्ररुद्राऽश्विकपिल पञ्चभूत सरस्वत्यश्च एते मध्यमोत्तमम्, एतैस्सह चतुर्थावरणे पुथिव्यातुनर धर्मधात्रीसुर प्रिया पुष्पेशव्याहृतिदस्रभव मनुहरिशाङ्कराश्चैते प्युत्तमाधमम्, एतैस्सह एकादशरुद्राद्वादशादित्या एतेचोत्तममध्यमम्, एतैस्सहब-लिरक्षक वसुजया दश एते चोत्तमोत्तम मिति । प्र (ति) मुखे अनपायिनो द्वारे घात्रादीन् प्राकार द्वारेषु द्वारपालकान् यथोक्ते देशे सम्यगर्चयेत् ।

## अर्चकादिभेदेन अधमादिकथनम्

नवविधार्चक परिचारकान्वक्ष्ये - मन्त्रकल्पवित् शौचाचार संयुक्तस्सुपुष्टांग ऋत्विगुक्तगुणोपेत एकोऽर्चको द्वौ परिचारकौ अधमाधमम्, अर्चकौ द्वौ परिचारकाश्चत्वारश्चाऽधममध्यमम् अर्चकास्त्रयः नवपरिचार-काश्चाधमोत्तमम्, अर्चकाश्चत्वारः षोडश परिचारकाश्चमध्यमाधमम्, षडर्चकाः पञ्चविंशतिपरिचारकाश्च मध्यमध्यमम्, अष्टार्चकाः चत्वारिं-शत्परिचारकाश्च मध्यमोत्तमम्, द्वादशार्चकाः पञ्चाशत्परिचारकाश्च उत्तमाधमम्, षोडशार्चकाः चतुः षष्टि परिचारकाश्चोत्तममध्यमम्,

विंशत्यर्चकाः अशीति परिचारकाश्चोत्तमोत्तमम्, देवेशस्य प्रतिसंध्यमेकैकः पुरुषःतथाबेरं प्रति पूजार्थमर्चकाः परिचारकाश्च बहवो भवंति ।

## आचार्यादीनां भूम्यादि दानम्

नित्य नैमित्तिकार्थ माचार्यार्चकादीनां जीवनार्थं अन्यद्दिव्य-विभावार्थंचाऽत्यन्तपुष्कलान् भूमिभोगान् आचार्यस्यहस्ते देवसन्निधौ यजमानस्सोदकं दद्यात् । सर्वमाचार्य नियोगेन कारयेत्, आचार्यार्चकादयः क्लेशयुक्ता श्चेज्जनास्सर्वे सर्वदाक्लेश युक्ता भवेयुः । राज्ञोराष्ट्रस्य च महद्भयं, ग्रामयजमानयो र्नाशश्च भवेत् । तस्मात्सर्व प्रयत्नेन आचार्यार्चकादी नां जीवनार्थं भूमिभो सुसंपन्नं कल्पयेत् । आचार्यार्चकपरिचारकादीनामभावे तत्पुत्रादीन् तदभावे तन्नियुक्तांश्च (न्वा) कारयेत् । अन्यथा महत्तरोदोषो भवति इति विज्ञायते ॥

इति श्री वैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे नवविधपरि-वाराचार्याऽर्चक विधिर्नाम चतुर्दशः पटलः ॥१४॥

# अथ पञ्चदशः पटलः

अथ बेरार्थं शिलाग्रहणं वक्ष्ये–

## शिलाभेदः

गिरिजा भूमिजा वारिजा चेति शिला त्रिविधा भवति । गिरेरुपरि-जातोर्ध्वमुखा, पार्श्वजाता पर्वतप्रेक्षा, समुद्रजातोर्ध्वमुखा, भूमि जाता ऽधोमुखा, नद्यादि जलमार्गजाता जलागमनमुखा, तासां भूमिजातामुख्या, तस्मान्मह॥दक्षु अशीर्षा, दुस्थानस्थाचाऽग्राह्या; शिलाश्चत्रिविधाः पुंस्त्रीनपुंसकाश्चेति । एकवर्णाघना स्निग्धाचाऽऽमूलाग्रमार्जवान्विता घण्टानादसमा पुंशिला । स्थूलमूला क्षीणाग्रा कंसाध्वनि युता स्त्रीशिला, स्थूलाग्रा कृशमूला हीनस्वरा नपुंसकशिला, पुंशिलाभिः पुंबेराणि स्त्रीशिलाभिः स्त्रीबेराणि नपुंसकशिलाभिः प्रासादतलकुड्यादीनि कारयेत् । अथ एकस्यांशिलायां देवदेव्यौच कारयेदित्येके । शिलाछेदने तक्षणे चापि मंडूकोदृश्यते यदि सा शिला गर्भिणीति ज्ञात्वा तां यत्नेन परिवर्जयेत् ।

## शिलानयनादि प्रकारः

पूर्वपक्षे पुण्ये कर्त्तुरनुकूले नक्षत्रे आचार्यो यजमानश्च शिल्पिनासार्धं साधनैर्होमसंभारैस्सह शिलाग्रहणाय गत्वा वने वनपार्श्वे जलपार्श्वे वा शिलां वीक्ष्य परितस्तृणगुल्मलतादीनि संशोध्य तदुत्तरपार्श्वे सूत्रोक्त विधिना वास्तुहोमं हुत्वा पर्यग्निंकृत्वा पञ्चगव्यै पवमानाद्यैः संप्रोक्ष्यद्विप्रस्थैस्तण्डुलैश्चरुं पक्त्वा गुलदधिघृतलाजैर्युक्तं शिलायाः पार्श्वे दक्षिणे वनराजायेति, वामे देशाधिपतय इति, परितः प्रागादीशांनान्तं सर्वेभ्यो देवेभ्यो, यक्षेभ्यो, विद्याधरेभ्यो, राक्षसेभ्यः, पिशाचेभ्यो, नागेभ्यो, गन्धर्वेभ्यः, अष्टादश गणेभ्यश्चेति, पूर्वमुदकं पुष्पंबलिमुदकं च दत्वा तत्रस्थान् शीघ्रं व्रजतेति परितः (शीघ्रं) खनित्वा शिल्पिना सार्धमानीय शुद्धोदकैरभिषिच्य आचार्य उत्तराभिमुखोभूत्वा प्राणायामं कृत्वा आत्मसूक्तं, महीसूक्तं च, जप्त्वा समाहितो देवंध्यायन्, हस्ताभ्याम् 'इदंविष्णु' रिति मंत्रेण शिलाग्रहणं कृत्वा उलिकां ताडनी मप्यादाय विष्णुगायत्रीं, 'चित्रं देवाना' मित्युक्त्वा मूर्ध्नि पार्श्वयोः पादे च किंचित् छित्वा शिल्पिनमाहूय विधिना मानयित्वा किंचिदप्यधिकं हेयशिलां छेदयित्वाप्लवगे, शकटे वा, शिलामारोप्य अप्रमादेनाऽऽलयमावेश्य कर्ममण्डपेन्यस्य बेरंमानोन्मानाद्यैर्लक्षणोपेतं स्थानकादि भेदेष्वेकमार्गेण साङ्गोपांङ्गावयव, मत्यर्धावयवं वा, सर्वत्राऽहीनं, सुन्दरं, चित्रं, चित्रार्धं वा कारयेत् ॥

## दारवादि बेरकरणादि

एवमेव दारवं कारयेत्। ध्रुवार्चाचेत् स्थानक, मासीनं यानकं वा, सर्वांग संपूर्णं सुव्यक्तं कारयेत्। अथ ध्रुवबेरं ताम्रजं शैलंदारवं वा विधीयत। दारवान्मृण्मयंश्रेष्ठं मृण्मयात्शैलमुत्तमं शैलात्ताम्रंमुख्यं भवति, ध्रुवार्चाबेरं चेत् ताम्रजं, शैलं वा कुर्यात् । बेरायामं तदर्धायामविस्तृतार्ध्र मुत्तमं, तद्गुणांशात् द्व्यंशं मध्यमम्, तच्चरांशाद्गुणांश मधमम् ।

## ध्रुवबेर विधानम्

तद्धामविस्तृतार्धं द्विधाकृत्वा तस्याऽपरार्धं षड्विंशतिभागं कृत्वा तत्पूर्वार्धांशेन सह एकैकं संयोजयेत्। सप्तविंशत्युत्सेधं भवति। गर्भागारस्य चतुर्भागात् त्रिभागं, त्रिभागात् द्विभागं, शरांशाद्गुणांशं, गर्भार्धं वा,

तस्याऽपरार्धं पूर्ववत्कुर्यात् । पादोत्सेधं, द्वारोत्सेधंवा, तत्पादाधिकं, पादहीन, मर्धं वा, नवांशोन, मष्टांशोनं वा, अधिष्ठानस्य पादमर्धं, त्रिपादं, समं, सपादाधिकम्, अर्धाधिकं, पादोनद्विगुणं, द्विगुणं वा हस्तमानेन शरहस्त मानांगुलेन पञ्चविंशत्यङ्गुलाद्येकचत्वारिंशदङ्गुलान्तं द्व्यंङ्गुल-वृध्ध्याऽङ्गुलिभेदं नवधा भवति । यजमानसमं, तदष्टांशं कृत्वा एकद्वित्रिचतुरंशाधिकं नेत्रास्यबाहुस्तनान्त मित्येतन्नवधा भवति । एतेष्विष्टमानं विनिश्चित्य पादाद्युष्णीषान्तं ध्रुवबेरं कारयेत् ।

## चित्रादिविधानं तत्फलंच

तच्चित्रं चित्रार्धं चित्राभासमिति त्रिविधं भवति उत्तमंचित्रं, अर्धचित्रंमध्यमं, आभासमधमं षण्मानैस्सहितंचित्रं नाहार्धंसंदर्शन-मर्धचित्रं, नाहोन्नतिभ्यां हीनं यत्तदाभास सर्वत्रलोहजं मृण्मयं चित्रमेव अर्धचित्रं न कारयेत् । कुर्याच्चेदाभिचारिकंभवति । शैलंदारवं च चित्रं अर्धचित्रं वा कारयेत् । आभासंपटकुड्यादिलेख्यम्, बेरे चित्रे अर्चनं ऐहिकामुष्मिकफलप्रदम्, अर्धचित्रे अर्चनं केवल मामुष्मिकफलप्रदम्, आभासेऽर्चनं ऐहिक फलप्रदम् । तदाभासं द्विविधं भवति अचलं चलमिति । अचलं भित्तौ लिखितं, चलंपटलिखितंस्यात् । तस्मादचल मेव कारयेत् । आभासं भित्तौसंलिख्य तस्मिन्नक्षिमोचनंध्रुवबेरशुद्धिं च कृत्वा अक्षरन्यासदिकं कृत्वा प्रतिष्ठाप्य तत्प्रमुखे ब्राह्मे दैविके मानुषे वा रत्नन्यासं कृत्वा कौतुकं प्रतिष्ठाप्य ध्रुवात्कौतुकबेरे समावाह्य अर्चयेत् । आवाहन विसर्गौ तस्मिन्नेव समाचरेत् । ध्रुवार्चाचेदाभासार्चनं न कुर्यात् । चित्रंचित्रार्धं वा कृत्वा प्रतिष्ठाप्याऽर्चयेत् ।

## पीठविधानम्

तद्बेरं पीठोत्तुंगं, बेरोत्तुंगात्तुरीयांशं गुणांशैकांशं वा, चतुरश्रं, वृत्तं, पद्माकारं वा, तदुत्सेधंसप्तभागंकृत्वाऽधः पद्मं चतुरंशम् ऊर्ध्वपद्मंत्र्यंशम्, ऊर्ध्वाधः षोडशदलैर्युक्तं देवपादौ परितश्चाष्टाऽङ्गुलंनीत्वा एवं पीठं कारयेत् । स्नानवेदिं तत्परितः षोडशाऽङ्गुलां गर्भागारत्रिभागैकभागां वा चतुरश्रा द्विमेखलां तदूर्ध्ववेदिविस्तारं भागं तदर्धमुत्सेधं, तत्परितश्चतु रङ्गुलविस्तारोत्सेधा मधोवेदिं तन्मध्ये षडङ्गुलमवगाढंपञ्चाऽङ्गुलं चतुरङ्गुलं

वा प्राच्यामुदीच्यां वा वारिमार्गं चतुरङ्गुलं मात्राऽङ्गुलेनैकवेदिं कारयेत् । अथवा पीठं विना शिलाभिरिष्टकाभिर्वा वेदिंकृत्वा तन्मध्ये सुदृढं संस्थापये दिति केचित् । एवं ध्रुवार्चाबेरस्थापनम् अन्यत्सर्वं युक्त्या कारयेत् ॥

## गर्भालयपदविन्यास विधानम्

अथ गर्भालयपदविन्यासविधिं वक्ष्ये - प्रागग्रैरुत्तराग्रैश्च सप्तदश सूत्रैः षट्पञ्चाशत् द्विशतभागंविभज्य तन्मध्ये षोडशभागं ब्राह्मं, तत्परितश्चतुरधिकाशीति भागं दैविकं, तत्परितः षण्णवतिभागं मानुषं, तद्बहिः षष्टिभागं पैशाचं भवति । तन्मध्ये ब्राह्मे कौतुकपीठं, दैविक-भागंत्रिधाकृत्वा तस्यापरभागे तन्मध्ये वा स्थानकं, देवमानुषयोरन्तरे च आसनं किंचिद्दैविकमाश्रित्य मानुषांशे शयनं संस्थापयेत् । ध्रुवार्चाचेत् गर्भागारं सप्त सप्त विभागं कृत्वा तन्मध्ये चैकं पदंब्राह्मं तत्परितश्चाष्टभागं दैविकं तद्बाह्येषोडशभागं मानुषं तद्बहिश्चतुर्विंशतिभागं पैशाचंभवति । ब्रह्मस्थाने स्थापयेत् शांतिकं दैविके पौष्टिकं देवमानुषयो र्मध्ये जयदम् । एवं ध्रुवार्चां संस्थायेत् ॥

देव्यादि प्रमाणम् - देवस्यबाह्वंतं, स्तनांतं, कर्णांतं वा, देव्योर्मानम्, मुन्योर्वीश शैषिकयोरन्येषां परिवाराणां चतत्समं पादहीन मर्धपादं वा तत्तदालयवशाद्वा कारयेत् । ब्रह्माणं शंकरं च ध्रुवबेरसमं नवांशेनमष्टांशेनंवा कारयेत् । येन द्रव्येण देवः कृतः तेनद्रव्येण देव्यादि परिषद स्तत्तदुक्तताल क्रमेण कारयेत् ।

स्थानकस्य पीठोर्ध्वेचाऽऽसीनस्य सिंह्मासनोर्ध्वे तस्यऽधस्ताद्वा, शयानस्याऽनंतोर्ध्वे, पादपार्श्वे बेरमध्ये वा रत्नन्यासं कृत्वा बेर संस्थापयेदित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे शिलाग्रहणबेर-प्रमाणपदविभागस्थाननिर्णयो नाम पञ्चदशः पटलः ॥१५॥

# अथ षोडशः पटलः

अथ शिलाबेरस्थापनविधिं वक्ष्ये --

उत्तरायणे मार्गशीर्षमाघौ विवर्ज्य शुक्लपक्षे कृष्णे अंत्यत्रिभागंहित्वा श्रवणरोहिणी श्रविष्ठाहस्ताऽनूराधारेवती त्र्युत्तरासुचाऽन्यस्मिन् सुप्रशस्ते कर्त्तुरनुकूले नक्षत्रे स्थिरे शुभे राशौ प्रतिष्ठां कुर्यात् ।

तद्दिनात्पूर्वं अंकुरानर्पयित्वा संभारानाहृत्य तद्बेरशुध्यर्थम् आलयाभिमुखे, उत्तरे वा, बिंबार्धाधिकमानेन अवटंबिंबदध्नं कृत्वा तस्मिन् जले गव्ये, कुशोदके च, प्रत्येकं दिनत्रयम्, एकाहं, यथा संभवकालं वा, अधिवासं कारयेत् । बिम्बं महच्चे त्कुम्भजलैः 'आपो, हिरण्य, पवमानै' रभिषेचयेत् ।

आलयाभिमुखे दक्षिणे वा यागशालां षोडशस्तंभसंयुक्तां प्रपां वा कृत्वा कूटं वा कृत्वा तोरणाद्यैरलंकृत्य तन्मध्ये शय्यावेदिं चतुरश्रां तद्भित्तिसमविस्तारं तत्तुरीयांशोत्सेधाम्, अथवा बिंबार्धाधिकायामां यथालाभोत्सेधां वेदिं कृत्वा तत्प्राच्यां सभ्याग्निकुण्डं तस्योत्तरे स्नानवेदिं च कृत्वा आलयादुत्तरे वास्तुहोमंहुत्वा आलयं यागशालां च पर्यग्निपञ्चगव्याभ्यां शोधयित्वा सभ्याग्नावाघारं हुत्वा स्नानवेद्यां देवंसंथाप्य तस्याऽभिमुखे व्रीहिभिर्दण्डवत्पङ्क्तिं कृत्वा पञ्चगव्यादि द्वादशद्रव्यसं पूर्णान् कलशान् सोपास्नान्विन्यस्य विधिना संस्नाप्य वस्त्राद्यैरलंकृत्य प्रतिसरमाबध्य शय्यावेद्यां धान्योपरि पञ्चशयनानि पञ्चवस्त्राणि वाऽऽस्तीर्य देवीभ्यां सह देवेशं शाययेत् मुन्यादीनां स्थापनं यदि प्रत्येकं स्नापनशयनादीनि कारयेत् ।

यतोद्वारं ततोमौलिं कृत्वा उत्तराच्छादनं कुर्यात् । बेरे महति जलाधिवासं हित्वा यागस्थानमध्ये शय्यावेदिं विना. तत्कालात् पूर्वे बेरंसमानीय शुध्दोदकैः पवमानाद्यैः संस्नाप्याऽभ्यर्च्य पश्चाद्वास्तुशुध्दिं कृत्वा प्रधानहोमं कलशस्नापनं च कारयेत् । अभिमुखे धान्यवेद्युपरि शयनान्यास्तीर्य प्रतिसरंबध्वा देवेशं 'शयनेशेत' इति स्मृत्वा उत्तराच्छादनै र्बिम्बं समाच्छाद्याऽधिवास्य अग्निं परिस्तीर्य हौत्रंप्रशंस्यऽऽवाहनजुष्टाकार स्वाहाकारान् कृत्वा पुरुषसूक्तं, वैष्णव मेकाक्षरादि सूक्तं, महीसूक्तं, ब्राह्म, मैन्द्रं, सर्वदेवत्यं च हुत्वा रात्रिशेषं व्यपोह्य प्रभाते स्नात्वाऽऽलय

मावेश्यशयनस्थं देवमादाय अष्टोपचारैरभ्यर्च्य पदविभागं कृत्वा तद्विहितपदेरत्नादीनि विन्यस्य पश्चादग्निं विसृज्य बेरंगर्भालयं नीत्वा 'प्रतद्विष्णु' रितिबेरं संस्थाप्य विष्णुसूक्तं, पुरुषसूक्तं, वैष्णवं, ध्रुवसूक्तं च, जप्त्वा बेरस्यपादं स्पृशेत् । देव्यादीन् तत्तन्मन्त्रमुच्चार्य तत्तत्स्थाने प्रतिष्ठापयेत् ।

शिल्पिना बेरं संस्थाप्य पश्चान्मन्त्रेण स्थापनं कुर्यादित्येके । बेरे महत्यल्पेवाऽधिष्टानाऽवसाने बेरं संस्थाप्य पश्चाद्विमानं कारयेत् । शिलाबेरं, ताम्रजं वा अथैष्टकलशैमृण्मयं दारवं वा संस्थापयेत् । मृण्मयेतृणाच्छन्नेचैक बेरमेव स्थापयेत् । ऊध्वदृष्टिमधोदृष्टिंतिर्यगीक्षणंनैवबेरम् । समदृष्टिं संस्थाप्य पश्चाच्छिल्पिना घटी शर्करादीनि कारयेत् ।

अथ ध्रुवार्चास्थापनविधिं वक्ष्ये - बेरं शिल्पिभिर्निरपेक्षमेवकारयित्वा यथोक्तमङ्कुरादीनर्पयित्वा कौतुकस्योक्तविधिनाऽक्षिमोचनंकृत्वा पञ्चगव्या-ऽधिवासं कृत्वा रात्रावालयस्योत्तरे वास्तुहोमं हुत्वा पर्यग्निपञ्चगव्याभ्यां आलयं यागस्थानं च संशोध्य पुण्याहं वाचयित्वा यागस्थानस्य मध्ये शय्यावेदिं परितश्चग्निकुण्डानि कृत्वा अधिवासगतंदेवं आसाद्य अभिषिच्य वस्त्रोत्तरीयाद्यैरलंकृत्याऽभ्यर्च्य आलयमावेश्य यज्ञालये स्नान श्वभ्रस्य पश्चिम धान्यराशौ संस्थाप्य सर्वहोमेष्वाघारंहुत्वा देवस्याभिमुखे यथोक्तेनविधिना कुंभपूजां कृत्वा तस्मिन् देवमावाह्य सप्तकलशैः कुंभसमभ्युक्ष्य पश्चाद्वेरं संस्नाप्य वस्त्रोत्तरीयाद्यैरलंकृत्य अभ्यर्च्य पुण्याहान्ते प्रतिसरंबध्वा शय्यावेद्यां धान्योपरि अण्डजादीनि पञ्चशयनानि पञ्चवस्त्राणिवाऽऽस्तीर्य कुंभं बिंबं चारोप्य विधिनास्ययेत् । यदिस्यादौत्सवं बलिबेरं च देवेनसहा ऽक्षिमोचनं कृत्वा पृथगेवाधिवासनं स्नपनं च कृत्वा प्रतिसरंबध्वा तद्वेद्यांप्रत्येकं शयनान्यास्तीर्य तद्देवं शाययेत् ।

सभ्याग्नौ होत्रं प्रशंस्याऽऽवाहनादीनि कृत्वा चतुर्दिक्षु चतुर्वेदा-ध्ययनं कारयित्वा सर्वहोमेषु यथोक्तं जुहुयात् । रात्रिशेषं व्यपोह्य प्रभाते-स्नात्वाऽऽलयमाविश्य देवं प्रणम्योत्थाप्य आराध्य गर्भालयपदविभागंकृत्वा यथोक्ते पदे पीठेरत्नादीनिन्यस्य यजमान आचार्यादिभ्यो दक्षिणांदत्वा पूर्णा-हुती जुंहुयात् ।

पश्चान्मुहुर्त्ते प्राप्ते देवेशं प्रणम्य अनुमान्य कुंभंविना देवं गर्भालय-मानीय रत्नोपरि विष्णुसूक्तं पुरुषसूक्तं ध्रुवसूक्तं, वैष्णावंच, जत्प्वा

'प्रतद्विष्णु' रिति देवं संस्थाप्य पश्चादष्टबन्धं प्रयोजयेत् । लाक्षागुडमधूच्छिष्टगुग्गुलून् परस्परं समभागं कृत्वा एषां द्विगुणं सज्जरसं, गैरिकं, घनचूर्णमर्धं, सर्वेषामर्धं तैलं संयोज्य लोह पात्रेनिक्षिप्य लोहदर्व्यासमेनाग्निना सुपक्वं पचेत्, तद्बन्ध मानीय तत्पीठरन्ध्रे प्रक्षिपेत् तत्दृढं दृषत्समंभवति ।

तस्य ध्रुवबेरोक्तशुद्धिं कृत्वा पश्चादाचार्यश्शाय्यावेदिमासाद्य कुंभं संगृह्य शिरसाधारयन् अग्रतो गच्छेत् । स्थापका औत्सवं बलिबेरं चादायाऽनुगच्छेयुः आलयं प्रदक्षिणीकृत्याऽभ्यंतरं प्रविश्य देवाभिमुखे- धान्योपरि कुम्भंसन्यस्य मुखमण्डप औत्सवं बलिबेरं च प्रतिष्ठापयेत् । आचार्यश्चाऽऽत्मसूक्तं जप्त्वा मन्त्रन्यासमक्षरन्यासं च कृत्वा समाहित- उत्तराभिमुखोभूत्वा देवं ध्यायन् 'इदंविष्णु' रिति कुम्भस्थां शक्तिमादाय 'आयातुभगवा' निति बिम्बस्य मूर्ध्नि 'विष्णुमावाहयामी' तिसंस्राव्य आवोहयेत् । बेरं परितः पुरुषाद्यावरणत्रयदेवान् मित्राद्यावरणत्रयदेवां श्चाऽऽवाह्य 'अस्त्वासन' मित्यासनं दत्वा पश्चादौत्सवे बलिबेरे च तस्माद्दी- पाद्दीपमिवाऽऽवाहयेत् । ध्रुवार्चाबेरमावाहनविसर्गाभ्यांविनाऽऽसनाद्यैरर्च- येत् । एष विशेषोऽन्यत्सर्वं समानमिति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे शिलाबेरध्रुवार्चाबेरस्थापन विधिर्नाम षोडशः पटलः ॥१६॥

## अथ सप्तदशः पटलः

अथ बेरार्थं दारुसंग्रहणं वक्ष्ये-खदिराऽसनतिमिशमीचन्दन चम्पक मधूकजातिवृक्षाश्चाऽन्येस्निग्धास्साराः शुभवृक्षाश्च सस्यक्षेत्र समीपोत्पन्नाः पद्मोत्पल कुमुदवत्तटाक समीपजाता याज्ञिकाद्रुमाः, तुलसीवृक्ष (कुशपुष्प) समीपजाताश्च वृक्षास्संग्राह्याः ।

पुष्पफलविस्तीर्णाः क्रिमिदष्टाः जन्तुयुता अग्निदग्धा वाताहताजीर्णाः कोटरा स्त्वचाहीना भिन्ना अनेक पक्षि निवासा वल्मीकसंकटाः सर्पवासा देवायतनस्थाश्मशानचण्डालवास समीपस्था अनुक्तस्थानस्थाश्चाऽग्राह्याः।

वृक्षास्त्रिविधाः पुंस्त्रीनपुंसका इति । आमूलाग्रमार्जवयुतं सुवृत्तं शाखानेकयुक्तं पुंवृक्षं, स्थूलमूलं कृशाग्रं स्त्रीवृक्षं, कृशमूलं नपुंसकंवृक्षं न गृण्हीयात् । पुंवृक्षेणपुंबेरं स्त्रीवृक्षेण स्त्रीबेरं कारयेत् ।

पूर्वपक्षे कर्त्तुरनुकूलर्क्षे तदर्थमाचार्यो यजमानश्च साधनै र्होमसंभारैः शिल्पिभिस्सार्धं प्राङ्मुख उदङ्मुखो वा वनं गत्वा निमित्तानि संलक्षयेत् । क्रौञ्चच क्रिवायसपिंगळाऽक्ष चकोर कपोतहंस कृकलासादयो दक्षिणगाः शुभाः अभ्युदयकराश्च, चाषः श्येनश्चटिट्टिभाः वामगाः सिद्धिदाः गृहगौळी-कौशिकक्रोष्टु पिंगलाक्षवनकुक्कुटाद्या वामत स्सर्वे सिद्धिप्रदाः प्रभामिनीवष्णे वध्वजच्छत्रपूर्णकुंभशुक्लवसन पुष्पगजवृषगोमिथुनदधिपयो रुधिर मांस मधुभाण्डगर्भिणी सुरावेश्या यदिदृश्यंते तच्छुभकरं भवति । इत्येवं शिलाग्रहणकालेपि ज्ञेयम् ।

शुभे मुहूर्त्ते तं वृक्षमासाद्य परितस्तृणगुल्मलतादीन् संशोध्य अस्मिन् देशे 'वसंत उद्वसते' त्युक्त्वा शान्तिं वाचयित्वा वृक्षस्योत्तरपार्श्वे वास्तुहोमं हुत्वा वृक्षमूले पर्यग्निकरणं कृत्वा पञ्चगव्यैस्समभ्युक्ष्य पुण्याहंवाचयित्वा चरुं पत्क्वातिलचूर्ण सक्तुमुद्गनिष्पावयुतं, वृक्षमूले वनराजायेति परितः प्रागादीशानान्तं 'वनस्पतिभ्यो, वनदेवताभ्यो, भूतेभ्यो, यक्षेभ्यः, पिशाचेभ्यो, नागेभ्यो, विद्याधरेभ्योऽष्टादशगणेभ्यश्चे' ति पूर्वमुदकं पुष्पंबलिमुदकं च दद्यात् । 'अस्तुतृप्ति'रित्युक्त्वा आचार्यं संपूजयेत् । आचार्यः प्राङ्मुख उदङ्मुखो वा 'इदं विष्णु' रितिहस्ताभ्यां द्रुमंसंगृह्य श्रीभूम्यादीनां तत्तन्मंत्रेण दारुं संगृह्य परशुमादाय विष्णुगायत्रीं, 'सोमं राजानं' च जपन् प्रागादि चतुर्दिशं छित्वा पश्चात्तक्षाणमाहूयाऽभिपूज्य सर्वं छेदयेत् । महादिक्षु पतनंश्रेष्टं विदिक्षुपतनं मध्यमं अन्यासुदिक्षु अधमं यथोचितं छित्वा ऊर्ध्वभाग मुखं पार्श्वादिचाऽङ्कयेत् ।

यजमान आचार्यादिभ्यो दक्षिणां दत्वा तं वृक्षं शकटे समारोप्य नरैर्वाहयित्वा आलयमाविश्य कर्ममण्डपे संस्थाप्य शोषयित्वा प्रतिमा विधानेनाऽत्वरेण कारयेत् । ध्रुवबेरोक्तमानेष्विष्टमानं विनिश्चित्यतन्मानं चतुर्विंशतिशतभागं विभज्य एकांशं देहलब्धांगुलंतच्छूलानामग्रं पादं-विदित्वा तल्लक्षणोपेतं तनुकरणं कृत्वा शूलानाहृत्योर्ध्वकायमधः कायं च समं कुर्यात् । वंशदण्डस्याऽऽया म(मं) द्विषट्यंगुलं स्थानकासनशयनानां मेढ्राऽन्तं नाभ्यन्तं चतुरश्रं नाभेर्हिक्कान्तमष्टाश्रं हिक्काया उष्णी षान्तं वृत्तम् अन्येषां देवानां चतुरश्रं नियुञ्जीत ।

वंशदण्ड मूलविस्तारं भागार्धांगुलम् अग्रभाग मूलादष्टांशोनं वा, आसनस्याऽष्टांगुलमधिकं नीत्वा चतुरंगुल मवगाढप्रवेशं चतुरंगुल-मासनोदयं भवति ।

वक्षोदण्डस्याऽऽयामं चतुस्त्रिंशदंगुलं सप्तांगुलविस्तारं तदर्धं बाहल्यं कटिदण्डायामं षोडशांगुल मष्टाङ्गुलविस्तारं तदर्धबाहल्यं तत्पार्श्वयोर्मध्ये र्निम्नयुतं तन्निम्नेदक्षिणे दक्षिणपार्श्वयोः पार्श्वदण्डौ संयोज्य वक्षो दण्डस्यपार्श्वयोर्मध्ये निम्नं कृत्वा संयोजयेत् ।

वक्षोदण्डस्यमूलेचाऽग्रे च तन्मानेशिखाचतस्रः कलांगुलाऽऽयता स्तत्समविस्तृता स्तदर्धघना एताश्चतुर्भुजे द्विभुजे द्वे शिखे कृत्वा कटिदण्डस्यमाने शिखायामं त्र्यंगुलं, द्व्यंगुलविस्तृतं, तत्समभाहल्य, तेनवंशदण्डेन योजयेत् ।

ऊरुदण्डायामं सप्तविंशत्यंगुलं मूले शिखासंयोजनार्थं युक्त्याकारयेत् ।

जानु भागं, जंघाचोरुसमायता, पादं भागमूलविशालं, चतुरंगुलंत्र्यंगुलं (वा,) जंघामूलंत्र्यंगुलम् अग्रंकलांगुलं तलायामं सप्तदशांगुलं, तस्यमूलं त्रिमात्रमग्रतारं चतुर्मात्रम् अथवा स्थानकस्य पाददण्डयोर्जानुसंधिं नवाचरेत्, एकमेव कारये दिति केचित् ।

बाहुदण्डायामं सप्तविंशत्यंगुलं तन्मूलं वंशदण्डाग्रसमम् अग्रं तदष्टांशोनं युक्त्या वंशदण्डाग्रे संयोज्य ताम्रपट्टेन बंधयेत् ।

अथवा दण्डाग्रे अपरभागे चैकदारुणाकारये दिति केचित् ।

प्रकोष्ठदण्डस्याऽऽयाममेकविंशत्यंगुलं बाहुदण्डमूलं त्र्यंगुलं, तदग्रद्व्यगुल प्रकोष्ठमूल द्व्यर्धांगुल तस्याग्रमध्यर्धांगुल मन्यान्यगानि तत्तदंगेषु यथा न्यायं संयोजयेत् ।

प्रसारितपादयोर्हस्तयोर्जान्वोस्सन्धिं नवाचरेत् । इदंशास्त्रज्ञैः शिल्पिभिः सम्यक् प्रकल्पयेत् । देव्यो श्शूलंचतुरश्रं किंचिद्वक्रं वंशदंडस्या-ऽयामं षष्ट्यङ्गुलं, मूल भागविस्तारं, तदष्टांशोनमग्रं वक्षोदंडायामं-पञ्चविंशत्यंगुलं षडंगुलविस्तारं तदर्धबाहुल्यं, कटिदंडायामं यवार्धोन-विंशत्यंगुलं सप्तांगुलविस्तारं (तदर्धं) तदर्धबाहुल्यम्, ऊरूदण्डस्य तलविशालं तत्तुरीयांशोनं, जंघाकारं तत्त्रिभागैकोनं, तेषामग्रतारमष्टांशोनम् अन्यत्सर्वं समानम् देव्योः पार्श्वदण्डं न योजयेत् । अवक्रमृजुकायस्य, वक्रतनोर्वक्रमेव कारयेत् । अत्राऽनुक्तं शिल्पिशास्त्रोक्तमार्गेण कारयेत् ।

गर्भागारं पूर्ववत्षट्पंचाशतद्विशतभागं कृत्वा तद्विहिते पदे स्थानकादि ध्रुवबेरं कारयेत् । शूलमस्थि, मेदोष्टबन्धं, सिरारज्जुः, मांसंमृत्,

शोणितंघटिशर्करा, त्वक्पटःवर्णं जीव इति ज्ञात्वा एतैस्सप्तभिस्संस्कारैर्युक्तं स्र्वसंपत्करम् एतेष्वेकं विना कारयेच्चेत् - आभिचारिकं भवतीति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे दारुसंग्रहण- विधिर्नाम सप्तदशः पटलः ॥१७॥

## अथाष्टादशः पटलः

अथ शूलस्थापनविधिं वक्ष्ये - अयनंचोत्तरंश्रेष्ठं, दक्षीणे मार्ग- शीर्षमाघौ विवर्ज्य शुक्लपक्षे कृष्णांत्यत्रिभागंमुक्त्वा कर्त्तुरनुकूलर्क्षे- स्थिरराशौस्थापनं कारयेत् । तद्दिनात्पूर्वं नवमे, सप्तमे, पञ्चमे, तृतीये- वाहन्यंकुराऽर्पणंकुर्यात् ।

आलयात्प्रमुखे दक्षिणे वा यागशालं तोरणाद्यैरलंकृत्य तन्मध्ये- शय्यावेदिं तद्भित्तिसमायामविस्तारां तुरीयांशोत्सेधां कृत्वा तांपरितः सभ्यादि पञ्चाग्निकुण्डानि कृत्वा पूर्ववदालयादुत्तरे वास्तुहोमं हुत्वा पर्य- ग्निपञ्चगव्याभ्यां संशोध्य अग्निकुण्डेष्वाघारं हुत्वा शय्यावेद्यां ऐशान्यां द्विहस्तायतविस्तारां भागोन्नतां धान्यवेदिं कृत्वा उत्तराग्रान्दर्भानास्तीर्य वस्त्रोपरिबेरशूलान् संन्यस्य वंशवृक्षः कटीदण्डास्त्रयः पार्श्व दंडौद्वौ बाहुदंडाश्चत्वारः प्रकोष्ठदण्डाश्च तथैव पाददंडौ द्वौमौलिदण्ड एक एते अष्टादशदण्डाः स्थानके च, आसने विंशतिदण्डाः, शयने चतुर्भुज एकोनविंशति दण्डाः द्विभुजे सप्तदशदण्डाः, मौळिदण्डस्सहजश्चेत् एकोनमेतांश्चैवं सं (समाऽऽ) हृत्य असंकरार्थं चिह्नं कृत्वा शुद्धोदकैः पवमानैः (नाद्यैः) प्रक्षाल्य धान्यवेद्यां विष्णुगायत्र्या शूलान्विन्यस्य 'वसोःपवित्र' मिति पञ्चगव्यै स्समभ्युक्ष्य 'शन्नोदेवी' रिति गव्येन पयसा प्रक्षाल्य तैलाभ्यञ्जनं कृत्वा देव्यादीना मेवमेव कृत्वा तत्प्राच्यां दण्ड वेद्यां यथा विधि चतुर्दशकलशान्विन्यस्य तत्तद्रव्यैस्सोपस्नानैश्शूलान् समभ्युक्ष्य देव्यादीनां पृथक् पृथगेवं कारयित्वा शय्यावेद्यां धान्योपरि पञ्चशयनानि, पञ्चवस्त्राणिवाऽऽस्तीर्य शूलान् स्वस्तिसूक्तेनाऽसंकुलानारोप्य तन्मध्ये वंशदण्डं, तत्पार्श्वयोः पार्श्वदण्डौ, तदूर्ध्ववक्षो दण्डं, तदधस्तात् कटिदण्डञ्च संन्यस्य, अथवा वंशदण्डेन एतान् संयोज्य संन्यसे दिति केचित् ।

तद्दक्षिणपार्श्वे दक्षिणांगानि वामपार्श्वे वामांगानि सन्यस्य यद्दिग्द्वारं तद्दिशि वंश दण्डाऽग्रं कृत्वा पुण्याहान्ते प्रकोष्ठदण्डे प्रतिसरंबध्वा 'अस्थिभ्योनम' इत्यभ्यर्च्य 'यद्वैष्णव' मिति शूलान् शाययेत् । देव्यादीनां तत्तन्मन्त्रेण शाययित्वा उत्तराच्छादनं कृत्वा चतुर्दिक्षु चतुर्वेदानध्यापयेत् ।

सभ्याग्निं परिस्तीर्य हौत्रं प्रशंस्याऽऽहवनीयादीनि कृत्वा वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तम्, आत्वाहार्षादीन् श्रीदेवत्यं भूमिदेवत्यं चहुत्वा 'आस्थिभ्यः स्वाहे' त्यष्टोत्तरशतमावर्त्यहुत्वा सर्वदेवत्यं च हुत्वा आहवनीयादिषु पूर्ववद्धोमंहुत्वा सभ्यंविनाऽन्तहोमं जुहुयात् । अथवा सभ्याग्निमेकमेव कारयेदित्येके ।

रात्रिशेषं व्यपोह्य प्रभाते स्नात्वा आलयं प्रविश्य गर्भालये पदविभागं कृत्वा तद्योग्यपदे पीठे रत्नानि विन्यसेत् । यजमान आचार्यादिभ्यो दक्षिणां दद्यात् । अग्निंविसृज्य मुहुर्त्ते समनुप्राप्ते शय्यावेदिमासाद्य आचार्यः स्थापकैस्सह शूलानसंकरमाहृत्य शकुनसूक्तं समुच्चार्य वाद्यघोषपुरस्सरं सर्वालंकारसंयुक्तं आलयं प्रदक्षिणीकृत्याऽभ्यन्तरं प्रविश्य विष्णुसूक्तं विष्णु गायत्रीं च जप्त्वा ब्रह्मदण्डंस्थाप्य देव्यादीनां तत्तन्मंत्रेण तत्तत्स्थाने स्थापयेत् ।

वंशवक्षःकटीपार्श्वोरुदण्डान् संस्थाप्य कटीदण्डाद्वक्षोदण्डादधस्ताच्च द्वयोराधारभित्तिमाश्रित्य पृष्ठतस्तथा योजयेत् । आसने वक्षोदंडादधस्तादेकमाधारं योजयेत् ।

अथवा भित्तिशूलं मौलिदण्डे संयोज्याऽऽसनेचाऽऽसनोपरि बंशदण्डं संस्थापयेत् ।

स्थानके पाददण्डौ शिलोपरि दृढंसंस्थाप्य तयोः कटिदण्डं वंशदण्डं च संस्थाप्य यावत् दृढतरं तावद्योग्यं शूलं कृत्वा युक्त्या समूह्य कारयेत् ।

शयने स्थानकवत् द्वयोराधारं शयनोर्ध्वे संस्थाप्य तस्मिन् स्थापयेत् ।

पश्चाच्छिल्पिनमाहूय पूजयित्वा शिष्टं सर्वं कारयेत् । पश्चात् दृढबन्धनार्थं ताम्रपट्टैः पञ्चषट्समाष्टयवविस्तारैः विस्तारात् षड्भागघनान्वितै स्तावदायतै रतिदृढं बध्वा अष्टबन्धं निदध्यात् ।

## अष्टबन्ध भेदः

चतुर्विंशतिभागं कृत्वा श्रीवेष्टकं चतुरशं, मुकुष्टं पञ्चांशं, गुग्गुलं-

कांशं, गुडमष्टांशं, सज्जरसंत्र्यंशं, धातुचूर्णंत्र्यंशम्, एतैस्सह गव्यंघृतं तैलंच संथोज्य शुद्धपात्रे संगृह्य पाचयेत् ।

आलयाभिमुखे वा आहवनीयाग्निकुण्डं कृत्वा आघारं हुत्वा अग्नेः पश्चिमतो धान्यपीठे वस्त्रोपरि अष्टबन्धं सन्यस्य 'मेदसेनम' इत्यभ्यर्च्य आधिवास्य विष्णुसूक्तं पुरुषसूक्तं, वैष्णवं च हुत्वा 'मेदसे स्वाहे' त्यष्टोत्तरशतं हुत्वा अग्निं विसृज्ज शकुनसूक्तं जपन् आलयं प्रदक्षिणीकृत्य गर्भागारं प्रविश्य 'अतो देवादिना' अष्टबन्धं शूलेष्वालिप्य पश्चाच्छिल्पिना लेपयेत् । यजमान आचार्याय दक्षिणां दद्यात् । शिल्पिनं च पूजयेत् ।

## रज्जुबन्ध

पश्चाद्रज्जुबन्धं कारयेत् । नाळिकेर फलत्वक्तूलसारैर्यवद्वयसम-स्थूलमायतं रज्जुद्वयं समाहृत्य दक्षिणाग्निकुण्डं कृत्वा आघारं हुत्वा पूर्ववद्धान्यपीठे रज्जुं सन्यस्च 'सिराभ्यो नमः' इत्यभ्यर्च्य अधिवास्य पूर्ववद्धोमं हुत्वा 'सिराभ्यःस्वाहे' त्यष्टोत्तरशतमावर्त्यहुत्वा अग्निं-विसृज्य पूर्ववत् आलयं प्रदक्षिणीकृत्याऽभ्यन्तरं प्रविश्य 'अतो देवा' दिना नाभिस्थानमारभ्य सुषुम्नादि चतुर्दशनाडीनां स्थानेषु रज्जुं सन्यस्च पश्चात् शिरावन्मूर्धादि पादपर्यन्तम् उभौपार्श्वौ समावेष्ट्य ताम्रपट्टेन हस्तपादतलौ कृत्वा कार्पास तन्तुना सर्वांगं समावेष्ट्य पुनस्तथा रज्जुमावेष्टयेत् ।

आचार्याय दक्षिणां दद्यात् । शिल्पिनं च संपूज्य पश्चात्संस्कारं कारयेत् ।

## मृत्संस्कारः

नादेयां सस्यक्षेत्रजां ह्रदजां देवायतनसमीपतटाकजां पुण्यतीर्थजाम् अशोष्यजलाशयजां मृदं सुप्रशस्ते दिने गृहीत्वाऽभिमुखे नववस्त्रे कटे वा प्रक्षिप्य संशोष्य शोधयित्वा नवेमृद्भाण्डे गृहीत्वा शुचौदेशे अतिवातरहिते संस्थाप्य गन्धसहितां वालुकांचाऽऽक्षिप्य खदिरककुभत्वक्तोय कषायेना ऽऽलोड्च एकमासं तोये परिवासयेत् ।

अश्वत्थोदुंबरप्लक्षन्यग्रोधत्वक्कषायाम्बुना सेचयित्वाऽर्धमासं वासयित्वा त्रिफलोदकेनाऽलोड्य मृत्तुरीयांश पाषाण चूर्ण युतं तथा-ऽर्धमासं वासयित्वायवसारगोधूममाषचूर्ण संयुक्तं श्रीवेष्टकं गुग्गुलुकुदुकुष्ठ सज्जरसानां षोडशांशं संयोज्याऽऽलोड्य दधिमधुसर्पिभिः अतसीस्नेहेन

सहितं तिलजेनसार्धं बिल्वफलसारं यथाभागं संयोज्याऽर्धमासं वासयेत्। तस्मिन् रजनी कटुक त्रयचूर्णं तद्दशांशं संयोज्य श्लक्ष्णं कृत्वा तदर्धं कपित्थ निर्यास चूर्णं हरिताळ कोष्टरोचनाकृष्णचंदनागरुचूर्णं च यथालाभं सुवर्णरजत चूर्णयुक्तं कदळीफलनाळिकेर सलिलं गोक्षीरं च संयोज्य संमर्द्य नदीपर्वतसस्यक्षेत्र वल्मीकसमुद्रजलगजवृषश्रृंगोद्धेदकुळीरावटजां मृदं च किंचित्समादाय शोधयित्वा चूर्णीकृत्य संयोज्य त्रिरात्रं वासयित्वा सुनक्षत्रे सुमुहूर्त्ते चाऽऽलयाभिमुखे गार्हपत्याग्निकुंण्डं कृत्वा आघारं हुत्वा अग्नेः पश्चिमस्यां (मायां) पूर्ववत् धान्यपीठे नववस्त्रे मृदं संन्यस्य 'मांसेभ्यो नमः' इत्यभ्यर्च्य अधिवास्याऽग्निं परिस्तीर्य महीसूक्तं, भूमि देवत्यं, विष्णुसूक्तं, पुरुषसूक्तं, वैष्णवं, मुन्योर्मंत्रांश्च हुत्वा 'मांसेभ्यःस्वाहे' त्यष्टोत्तरशतं जुहुयात्। आचार्यं पूजयेत्।

देवं ध्यायन् 'नेक्षरादिना' मृदमभिमृश्य मेदिन्यादीन् पारमात्मिकं च जपन् रज्जुबन्धादुपरिष्टादुत्तमांगादि महांगेषु मृदमालिप्य पश्चाच्छि-ल्पिनमाहूय पूजयित्वा हस्तेन विना सर्वांगेषु करण्डिकयाऽऽलिप्य पुनरपि रज्जुं तथाऽऽबध्य शोषयित्वा पश्चान्मृदं संयोज्य तदूर्ध्वे रज्जुं न योजयेत् तदूर्ध्वेरत्नानि सन्यसेत्। हृदये पद्मरागं ग्रीवायां मौक्तिकं बाह्वोर्वैडूर्यं नाभौ ब्रह्ममणिं मेढ्रेसौवर्णं पादयोः पुष्पकं दक्षिणनयने सूर्यकान्तं वामे चंद्रकान्तं दक्षिणे कर्णे वज्रं वामे शंखजं नासिकापुटयोरमृताश्मकम् आस्ये प्रवाळं च पारमात्मिकं च जप्त्वा संन्यसेत्। मासेऽतीते शर्कराकल्कलं संलेपयेत्।

## शर्करालेपनम्

अथ शर्कराग्रहणं वक्ष्ये-पुण्यनक्षत्रे समीपे नदीती रेवाऽन्यस्मि-न्मन्मनोरमे शुद्धेदेशे खनित्वा आहृत्य प्रक्षाल्य संशोध्य चूर्णीकृत्य त्रिफलोदकेन सिंचन् शनैःशनैः शोषयित्वा कपित्थनिर्यास तोयेनाऽऽलोड्य कार्पासतूलं संयुक्तमतिसूक्ष्मं सुश्लक्ष्णं आलोड्य आवसथ्याग्निकुण्डं कृत्वा आघारं हुत्वा पूर्ववद्धान्यपीठे नववस्त्रोपरि शर्करं विन्यस्य 'रुधिरायनमः' इत्यभ्यर्च्य अधिवास्य अग्निंपरिस्तीर्य वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीसूक्तं, शांति होमं, हुत्वा 'रुधिरायस्वाहे' त्यष्टोत्तरशतं जुहुयात्। 'विष्णवे' श्रीयै, हरिण्यै, चिरायुषे, ख्यातीशाय, गरुडाय, चक्राय, शंखाय, भूतेभ्यः सर्वाभ्यो देवताभ्यः स्वाहेतिव्याहृत्यन्तं जुहुयात्। 'एतत्परिषद' मिति अग्निं विसृजेत्।

आचार्यदक्षिणां दद्यात् । शर्कराम् 'अग्निरिन्द्रा' दिनाऽभि मृश्य पुरुषसूक्तेन आलेपयेत् । पश्चाच्छिल्पिनमाहूय संपूज्य तत्कल्कंसर्वांगेषु समालिप्यैवं मासं प्रतिशुष्कं संलक्ष्य अच्छिद्रमभेद्यं तत्कल्केन तन्निर्यासाम्बुना अङ्गोपाङ्गप्रत्यङ्गानि यथा संपूर्णानि तथा कुर्यात् ।

## पटाच्छादनम्

पुनः शुद्धंकार्पास तन्तुनाकृतं सूक्ष्मंवस्त्रं समाधृत्य पूर्ववत्स-भ्याग्निकुण्डं कृत्वा आघारं हुत्वा पूर्ववद्धान्यपीठे नववस्त्रे अम्बरंसन्यस्य 'त्वचेनम' इत्यभ्यर्च्य अधिवास्य अग्निंपरिस्तीर्य विष्णुसूक्तं, पुरुषसूक्तं, सहस्त्राहुतीर्हुत्वा 'त्वचेस्वाहे'ति अष्टोत्तरशतं हुत्वा सर्वदेवत्यं चहुत्वा अग्निं विसृजेत् । आचार्यदक्षिणां दद्यात् । विष्णुगायत्र्या अम्बरंप्रोक्ष्य 'सोमस्य तनुरसी' त्याच्छादयेत् । शिल्पिना सुदृढं निर्विवरं समाच्छाद्य कल्कंप्रलेप्य पश्चाद् भूषणैर्भूषयेत् । बेरे शैले दारवे च शर्करादिनैवयोजयेत् । बाह्येमौक्तिकं मृदमालिप्य तद्बेरोपरिचक्षुः श्रोत्रास्यघ्राणादि मार्गेष्वभेद्यं महांगोपांगेष्वभेद्यं नहीनं नाधिकं यथापूर्वं तथैव कल्केन परिकल्पयेत् । अन्यथा तद्बेरे देवो न सेत् । चक्षुश्छिद्रे यजमानस्यान्धत्वं कर्णच्छिद्रेबधिरत्वम्, आस्यच्छिद्रे-मूकत्वं घ्राणादिमार्गच्छिद्रे प्रमेहकुष्ठादिव्याधयो धान्यादिनाशश्चाचिरा-देवभवेयुः । महाङ्गोपाऽङ्गप्रत्यङ्गभेदैः स्थानभ्रंशो भवेत् । तस्मात् सर्वंपरिहृत्यैव कारयेत् ॥

## वर्णसंस्कारः

अथ वर्णसंस्कारं वक्ष्ये-देवं युगानां क्रमेण श्वेतस्वर्ण श्यामाञ्जनवर्णं सर्वेषुश्यामवर्णमेवकारयेत् । सर्ववर्णान् संगृह्य पृथक् पृथक् पात्रे कपित्थ-निर्यासाम्बुना संपेष्य गृहीत्वा पौण्डरीकाग्निकुण्डं कृत्वा आघारंहुत्वा पूर्ववत् धान्यपीठे नववस्त्रोपरि वर्णान् सन्यस्य 'जीवायनमः' इत्यभ्यर्च्य अधिवास्य अग्निंप[रि]स्तीर्य वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं पारमात्मिकं, पार्षदं, हुत्वा 'जीवायस्वाहे' त्यष्टोत्तरशतं (हुत्वा) जुहोति । 'हिरण्यगर्भ' इति वर्णमभिमृश्य आत्मसूक्तं जप्त्वा अतोदेवादिना हेमपात्रे वर्णं गृहीत्वा तूर्यघोषणं कारयित्वा विष्णुसूक्तं, पुरुषसूक्तं च जप्त्वा तूलिकाग्रे वर्णमादाय 'सहस्रशीर्ष' मिति देव स्य ललाटेसंलेपयेत् । आचार्यं संपूजयेत् । पुण्याहं वाचयित्वा अग्निंपरिस्तीर्य शांतिहोमं हुत्वा अग्निंविसृज्य पश्चात् शिल्पिनं

संपूज्य तेन तत्तदङ्गिनं वर्णं संलेपयेत्। अत्यन्तं दर्शनीयं यथोक्तविधिना संले (प्य) ख्य पश्चादेवमेव संस्कारं कृत्वा सुवर्णसहितं वर्णं संलेपयेत्। तस्माच्छक्तियुतं भवतीति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे शूलस्थापन (वर्ण) विधिर्नामाष्टादशः पटलः ॥१८॥

# अथ एकोनविंशः पटलः

अथ ध्रुवबेरविधिं वक्ष्ये-तत् त्रिविधं स्थानकमासनं शयनं चेति । पुनस्तदेकैकं चतुर्विधंस्यात्। योगं वीरं भोग माभिचारिकमिति। योगार्थं योगमार्गं भोगार्थं भोगं वी (रा) र्यार्थं वीरमार्गं शत्रुजयार्थमाभिचारिकं कारयेत्। ग्रामाद्बाह्ये विविक्ते देशे नदीतीरे तत्संगमे पर्वते वने वनपार्श्वेवा योगस्थानकं, तद्बाह्येवा वीरस्थानकं, वनगिरिजल दुर्गे राष्ट्रान्ते शत्रु दिङ्मुखेचाऽऽभिचारिकं भवति ।

विमानं नलि (न) कंविमलाकृति सर्वतोभद्रं, नन्द्यावर्तं, श्रीप्रतिष्ठितं स्वस्तिभद्रं, पद्माकारं, वृत्तगेहम्, उद्योगपद्मं, योगकान्त, मित्यादिसम-चतुरश्र, मायताश्रं, वृत्तं, वृत्तायतं स्थानकस्य ।

अष्टाऽङ्गं सर्वतोभद्रं, महापद्मं, वृत्तभद्रं (पद्मं) चतुर्मुखदिशा-स्वस्तिकं, महापद्मं, चतुस्फुटं, पर्वताकारं खंडहर्म्यं, मुद्योगपद्मं, समचतुरश्रं समवृत्तंवाऽऽसनस्य।

स्वस्तिकं वृत्तभद्रं वृत्तगेहमवेदिकं प्रेक्षागृहं महाराजच्छंदं श्रीप्र-तिष्ठितं, शनैर्योगं, मातृखंडं, गणिकाविशालमेवमादीन्यायताश्राणि-वर्तुलायतानि वा शयनस्य ।

स्थानके विमाने स्थानक बेरम् आसने चासनं शयने शयनं सर्वत्र-स्थानकमासनं यानकं वा, शयने शयनं कर्त्तव्यम्, अन्ययोः शयनं नैवकल्पयेत्। शयनागारद्वारविस्तारंपादयोरन्तरं तमादोदयाष्टांशोनं द्वारोत्से धम् एवमासनागारे स्थानके वा कारयेदित्येके ।

यानके सर्वविमानं ध्रुवबेरेष्विष्टं मानं विनिश्चित्य सलक्षणं बेरं कृत्वा गर्भागारे कृते पदे दैविके स्थानकं यानकं च किंचिन्मानुषमाश्रित्य दैविके-चासनं किंचिद्दैवमा श्रित्यमानुषांशेशयनं संस्थापयेत्। प्राग्द्वारं सर्व संपत्करं

पश्चिमद्वारं कीर्तिदं दक्षिणद्वारं जयदं उत्तर द्वारं ज्ञानदं ? प्राक्शीर्षकं शांतिकं पश्चिमशीर्षं पौष्टिकं दक्षिणशीर्षं जयदं उत्तरशीर्षमाभिचारिकम् । ग्रामाद्दक्षिणे शयानं उत्तरद्वारं चेत् प्राक्शीर्षं पश्चिमे प्राक् द्वारं चेद्दक्षिणशीर्षम्, उत्तरे दक्षिणद्वारं चेत्पश्चिमशीर्षं प्राच्यां पश्चिम द्वारंचेत् दक्षिणशीर्षमेव कारयेत् । स्थानकासनशयनानि ग्रामप्रेक्षाण्येवकारयेत् ।

## योग स्थानक त्रैविध्यम्

देवेशं श्यामवर्णं चतुर्भुजं, शंखचक्रधरम् अभयदक्षिणहस्तं, वरदकट्यवलंबितवामहस्तं, दक्षिणे चैकजानुनासमासीनंभृगुं, तथामार्कंडेयं, तथैवभूमिपुण्यौ वा, दक्षिणे भित्तिपार्श्वे हेमाभं चतुर्भुज मक्षमाला कमण्डलुधराभयकट्यवलंबितहस्तं, स्थितं, ब्रह्माण, मुत्तराभिमुखम्, उत्तरेभित्तिमूले पार्श्वे श्वेताभं चतुर्भुजं मृगपरशुधरम् अभयं कट्यवलंबितहस्तं शङ्करं दक्षिणाभिमुखं, स्थितमेव कारयेत् । तदुत्तमं योगस्थानकम् । ब्रह्मशङ्कराभ्यां हीनं मध्यमं, पूजकमुनिभ्यां हीनमधमम् ॥

## भोग स्थानक त्रैविध्यम्

देवं चतुर्भुजं श्यामाभं शंखचक्रधर मभयवरद दक्षिणहस्तं कट्यवलंबित सिंह्मकण्ठ (र्ण) वामहस्तं, तथा ब्रह्मेशौ दक्षिणे श्रियंदेवीं रुग्माभां सुस्थिरदक्षिणपादां कुंचितवामपादां धृतकमलदक्षिणहस्तां प्रसारितवामकरां देवंकिंचित्समीक्ष्य स्थितां, वामे हरिणीं श्यामाभां प्रसारितदक्षिणहस्तां धृतोत्पलवामहस्तां संस्थित वामपादां किंचित्कुंचितदक्षिणपादां देवं किंचित्समीक्ष्य स्थितां कारयेत् । देव्यो हस्तपादौ विपरीतौवाकारयेत् । कुड्यकौतुकयोर्मध्ये दक्षिणेभृगुं दक्षिणेनजानुनासीनं वामेनोत्कटिकमासीनं सपद्मवामहस्तं दक्षिणोरुनिहितदक्षिणकरं, वामे पुराणं वामेन जानुनासीनं दक्षिणेनोत्कटिकमासीनं सपद्म दक्षिणहस्तं वामोरुविन्यस्तवामकरं कारयेत् । एवमासयित्वा हस्तौ संपुटौ वा कारयेत् । भित्त्यूर्ध्वभागे मायासं ह्लादिनीभ्यां व्याजिनीभ्यां तुंबुरुनारदाभ्यां किंन्नरमिथुनाभ्यां यक्षविद्याधराभ्यां सनकसनत्कुमाराभ्यां सूर्यचंद्राभ्यां युक्तमुत्तमं भोगस्थानकम्, तुंबुरुनारदाभ्यां यक्षविद्याधराभ्यां हीनं मध्यमम् सनकसनत्कुमाराभ्या, मादित्यचंद्राभ्यां पूजकमुनिभ्यां हीनमधमम् ॥

## वीर स्थानक त्रैविध्यम्

देवं श्यामाभं चतुर्भुजं शंखचक्रधरं कारयेत्। दक्षिणवामयोः ब्रह्मे-शानाभ्यां भृगुपुण्याभ्यां किष्किधसुंदराभ्यां व्याजकाभ्यां सनकसनत्कु-माराभ्यां सूर्यचंद्राभ्यां युक्तमुत्तमम्, वीरस्थानकम्, किष्किन्धसुंदराभ्यां सनकसनत्कुमाराभ्यां हीनंमध्यमम्, आदित्यचंद्राभ्यां पूजकक्षिति (मुनि) भ्यां हीनमधमम्॥

## आभिचारिक स्थानकम्

एवं द्विभुजं चतुर्भुजं वा धूम (म्र) वर्णं श्यामाऽधरं (म्बर) शुष्काङ्गं तमोगुणान्वित, मूर्ध्वनेत्रं, ब्रह्मादि देवैर्विवर्जितं, पैशाच पदस्थम्, आर्द्राद्यनुक्त नक्षत्रे शर्वर्यां चरराशौ स्थापितं विमानं च लक्षणहीनं कारयेत्। एतदाभिचारिकस्थानकं स्यात्॥

## पीठपरिमाणम्

स्थानकस्यपीठोच्चं, बेरोदयं द्वारोदयं वा अष्टभागं षट्भागं वा कृत्वैकांशंभुवंगसमम् अध्यर्धं द्विगुणं वा समवृत्तं पद्माकारं देवपादं परितश्चतुरङ्गुलं षडंगुल मष्टांगुलं वा देहलब्धांगुलेन नीत्वा तदू (द्धऊ)-ध्वं षोडशदलै र्युक्तं कारयेत्। तस्मादेकांगुलहीनं देव्योः पीठं कारयेत्। अथवा कौतुकस्यार्चापीठस्च पश्चिमभागं देवमानुषपैशाच पदांतं पीठोत्सेधमानेन समस्थलं कृत्वा तदूर्ध्वं देवीभ्यां सह देवं यथोक्तदेशे संस्थाप्य तत्स्थले कौतुकादीन् संस्थापयेत्॥

## योगासनस्यात्तमत्वादिकम्

अथ योगस्थानं वक्ष्ये - देवं श्वेताभं चतुर्भुजं पीतवाससं जटामौलिं श्वेतपद्मेसमासीनम् ऊर्ध्वस्थदक्षिणपादं अधस्ताद्वामपादम्, अङ्क-विन्यस्तवामकरं शंखचक्ररहितापरभुजं श्वेतवस्त्रोत्तरीयं सोपवीतं कुण्डलाङ्गदहाराद्याभरणान्वितम् ईषन्निमीलितलोचनं च भित्तिपार्श्वे दक्षिणे ब्रह्माणम् उत्तरे शंकरम् ऊर्ध्वभागे चन्द्रादित्यौ सनकसनत्कुमारौ कौतुकाद्दक्षिणवामयोर्भृगुमार्कंडेयौ तथा महिमार्कंडेयौ वा कारयेत्, एतदुत्तमं योगासनम्॥

चन्द्रादित्याभ्यां सनकसनत्कुमाराभ्यां हीनं मध्यमम्, भृगुमार्कंडेयाभ्यां हीनमधमम् ॥

## भोगाऽऽसनस्योत्तमत्वादिकम्

देवं सिह्मासने समासीनं श्यामाङ्गं चतुर्भुजं शङ्ख चक्रधरम् अभयवरद दक्षिणहस्तं स्वाङ्ककटिविन्यस्तसिह्मकर्णवामहस्तं प्रसारितदक्षिणपादं कुञ्चितवामपादं दक्षिणे श्रियं देवीं वामपादमाकुञ्च्य दक्षिणंप्रसार्य सिह्मासने समासीनां वामपार्श्वे महींदेवीं दक्षिणंपादं आकुंच्य वामं प्रसार्य सिह्मासने समासीनाम् एतयोर्वामदक्षिणकरौ पद्मोत्पलधरौ अन्यौ सिह्मासने निहितौ सिह्मकर्णौ वा तद्विपरीतौवा देवं देव्यो रन्तरभागं तालं यवद्वयं तत्तुरीयांशाधिकं हीनं वा दक्षिणोत्तरयो र्ब्रह्मशङ्करौ तथाऽऽसीनौ भृगु-मार्कंडेयौ च एकजानुक्रमेणाऽऽसीना वन्यत्सर्वंभोगस्थानकवत्, अपर-भित्तिपार्श्वे माया संह्लादिनीभ्यां व्याजिनीभ्यां तुंबुरुनारदाभ्यां किंन्नरमिथु-नाभ्यां यक्षविद्याधराभ्यां सन कसनत्कुमाराभ्यां सूर्यचंद्राभ्याम्, एवं क्रमेण समायुक्त मुत्तमम् ॥

भोगासनं तुंबुरुनारदाभ्यां किन्नरमिथुनाभ्यां यक्षविद्याधराभ्यां हीनं मध्यमम्, सनकसनत्कुमाराभ्यां आदित्यचंद्राभ्यां पूजकमुनिभ्यां हीन मधमम् ॥

## वीरासनस्योत्तमत्वादि

सिह्मासनोपरिष्ठात्पद्मासने वामपादं समाकुंच्य दक्षिणां किंचित्प्रसार्य समासीनं चतुर्भुजं शंखचक्रधर मभयदक्षिणहस्तं सिह्मकर्णवामहस्तं प्रवालाभं श्यामांबरधरं पूजकस्थाने दक्षिणे श्रियं देवीं वामे महींदेवी मेकजानुक्रमेणासीने दक्षिणे ब्रह्माणं मनुं च वामेशंकरं भृगुंच रतिं वाणींच चामरधारिण्यौ च कारयेत् । सनक सनत्कुमाराभ्यां तुंबुरुनारदाभ्यां सहितम् उत्तमं वीरासनम् ।

तुंबुरुनारदाभ्यां सनकसनत्कुमाराभ्यां व्याजिनीभ्यां हीनं मध्यमम्, ब्रह्मशंकराभ्यां सूर्यचंद्राभ्यां पूजकस्थाने देवीभ्यां हीनमधमम् ।

## आभिचारिकासनस्योत्तमत्वादि

देवं वेदिकासने समासीनं चतुर्भुजं द्विभुजं वा नीलाभं श्यामवस्त्र

धरं तमोगुणान्वित मूर्ध्वनेत्रं देव्यादीन्विना लक्षणहीनेविमाने शत्रुदिङ्मुखे कृष्णाष्टम्या मग्न्याद्यनुक्तनक्षत्रे शर्वर्यां चरराशौ गर्भालये पैशाचपदे स्थापयेत्, एतदाभिचारिकासनं भवति ॥

## सिंहासनम्

सिंहासनोत्सेधं द्वारोत्सेधं बेरोत्सेधं वा द्वादशभागं कृत्वा षडंश मुत्तमम्, पञ्चांशंमध्यमम्, चतुरंशमधमम्, द्विपञ्चाशदङ्गुलमुत्तमम्, षट्चत्वारिंशदङ्गुलंमध्यमम्, चत्वारिंशदङ्गुलमधमम् ॥

## पद्माऽऽसनम्

सिंहासनस्य तुरीयांशं पद्मासनस्योत्सेधं षडंशंकृत्वा एकांशं तदाधारं कंपं त्र्यंशम्अधोदलंद्व्यंशम् ऊर्ध्वदल मूर्ध्वाधः शतपत्रैस्संयुक्तं एवं पद्मासनं स्यात् ॥

## पद्मसिंहासनम्

सिंहासनस्योत्सेधं त्रयोविंशतिभागं कृत्वा एकांशं पादुकं दळमेकांशं कंपमेकांशं चतुरंशाजगती एकांशं पद्मं(धृ)ध्रुगेकांशं एकांशंदळंत्र्यंशं-कुमुदम्, अंबुजमेकांशम् एकांशंकंपं चतुरंशंकंठं सिंहैर्युक्तं तदूर्ध्वे चैकांशं कंपं पद्ममेकांशं द्व्यंशा महापट्टिकाचेत्येतत् पद्मसिह्मासनं स्यात् ।

## भद्रासनम्

अथवा भद्रसिंहासनोत्सेधं षोडशभागं कृत्वा एकांशमुपानत्-चतुरंशा जगती त्र्यंशं कुमुदम् एकांशंकंपं चतुरंशंकंठं सिंहैर्युक्तं तदूर्ध्वे-चैकांशंकंपं द्व्यंशामहापट्टिका च एतद्भद्रासनं स्यात् । द्वयोरुभौपा-र्श्वौसिंहौसमुद्वहन्तौ च कारयेत् । आसनस्थस्यदेवस्य जानूपरिष्टात् कोशान्तं मध्यगं जान्वोः पार्श्वयोः बाह्वोश्चमध्यमं सूत्रमृजुंप्रसारयेत् । तत्रानुक्तं सर्वं शिल्पिशास्त्रोक्तविधिना कारयेत् ॥

## योगशय्यातदुत्तमत्वादि

अथ योगशय्याक्रमं वक्ष्ये-देवं द्विभुजम्, अर्धार्धशयानं पीतश्यामं दक्षिणहस्त मुपधाने न्यस्य मौल्यग्रं समुध्दृत्य सम्यक् प्रसार्य वा अन्यं-

समाकुंच्य तत्कूर्परमूर्ध्वंकृत्वा कटिमवलंब्य अथवा तदूरौप्रसार्य वामपादं दक्षिणं प्रसार्य वाममाकुंच्य (वा) शयानं सर्वाभरणभूषितं किंचिदुन्मीलितलोचनं भृगुपुण्याभ्यां भूमिपुण्याभ्यां वाऽर्चितं पादपार्श्वे मधुकैटभ संयुक्तं च नाभ्यंबुजसमासीनं ब्राह्मणं, पञ्चायुधान् गरुडं विष्वक्सेनं सप्तर्षिंश्च अपरभित्यूर्ध्वे प्रांजलीकृत्यस्थितान् दक्षिणभित्तिपार्श्वे ब्रह्माणं वामे शंकरंच समासीनावेव कारयेत् । एतदुत्तमं योगशयनं, सप्तर्षीन् विष्वक्सेनं च विना मध्यमम्, पूजकमुनिभ्यां मधुकैटभाभ्यां हीनमधमम् ॥

## भोगशयनम् तदुत्तमत्वादि

देवं श्यामलांगं दर्शनीयं सुपुष्टांगं चतुर्भुजं द्विभुजंवा अर्धार्धशयनं चापवद्गात्रं हस्तं दक्षिणमुपधाने निधाय मकुटमवलंब्य किंचि त्प्रसार्यवा वामोरौप्रसार्य दक्षिणंपादं प्रसार्य वाममाकुंच्य शयनंकारयेत् । पादयोरन्तरं विंशत्यङ्गुलं पार्ष्ण्यन्तरं भागं जान्वोश्चतुर्दशाङ्गुलंब्रह्मसूत्राद्दक्षिणे मुखं त्र्यङ्गुलं तिर्यग्गतं भवति । शिरः पार्श्वेश्रियं देवीं देवस्यबाहुसंस्पृशां सपद्मदक्षिणहस्तां कटिकन्यस्ताऽन्यहस्तां पादपार्श्वेमहींदेवीं देवस्य वामाङ्घ्रिसंस्पृशां धृतोत्पलदक्षिणहस्तां कटिकन्यस्त वामहस्तां कौतुकाद्दक्षिणे मार्कण्डेयं वामे भृगुं तद्दक्षिणे भित्तिपार्श्वे चासीनं ब्रह्माणं वामे शंकरं च दक्षिणेवक्रतुण्डं वामेविन्ध्यवासिनीं पादपार्श्वे-मधुकैटभावुग्रवेगसमन्वितौ समुद्रतरङ्गाच्छा। जानू अनन्तविषज्वालाभि-र्दह्यमानौ च कारयेत् । नाभिदेशे पद्मेसमासीनंब्रह्माणं तद्दक्षिणे पञ्चायुधान् गरुडम्, उपरिष्टाद्दक्षिणे भास्करं तद्दक्षिणेनिशाकरं तथा बालरूपौ तुंबुरुनारदौ तद्दक्षिणेअश्विनौ अष्टलोकपालान् तथाऽप्सरसश्च कारयेत् । एतदुत्तमंभोगशयनम्, तुंबुरुनारदाभ्याम्, अश्विभ्यां लोकपालैश्च विना मध्यमम्, पूजकमुनिभ्यां अप्सरोभि-श्चविना अधमम् ॥

## वीरशयनं तदुत्तमत्वादि

देवं श्यामाभं चतुर्भुजं शंखचक्रधरं सव्यहस्तं शिरोपधानं कृत्वा वामहस्तं प्रसार्य शयानं पादपार्श्वेश्री भूमिभ्यां पादमर्दिनीभ्यां मधुकैटभाभ्यां संयुक्तं कौतुका द्दक्षिणे मार्कण्डेयं वामे भृगुं तद्दक्षिणेभित्तिपार्श्वेचा (नाभि-पद्मेसमा) सीनंब्रह्माणं पञ्चायुधान् गरुडं चंद्रादित्यौ सप्तर्षीन् द्वादशादित्यान् एकादशरुद्रान् जयाद्यप्सरस स्तुंबुरुनारदौ सनकसनत्कुमारौ ब्रह्मेशौ च

कारयेत् । एत दुत्तमं वीरशयनम्, रुद्रैरादित्यैरप्सरोभिश्चविना मध्यमम्, किंन्नरमिथुनाभ्यां सनकसनत्कुमाराभ्यां पूजकमुनिभ्यां हीनमधमम् ॥

## आभिचारिकम्

शेषं लक्षणहीनं द्विफणं द्विवलयमनुन्नतशिरः पार्श्वं देवं नीलाभंद्विभुजं चतुर्भुजं वा समशयनं महानिद्रासमायुक्तं शुष्कवक्त्रंशुष्काङ्गं श्यामवस्त्रधरं सर्वदेवैर्विहीनं कारयेत् । एतदुक्तममाभिचारिक शयनम्, एकफणम्, एकवलयं मध्यमम्, सर्पदेहंविना समस्थलशयनमधमम् ॥

## अनन्तशयनलक्षणम्

अनन्तस्योत्सेधं बेरायामं द्वारोत्सेधं वा त्रिधा कृत्वा एकांशंमध्यमम्, तदष्टांशाधिकमुत्तमम्, तदष्टांशोनमधमम्, षट्त्रिंशदंगुलमुत्तमम्, त्रिंशदङ्गुलं मध्यमम्, चतुर्विंशत्यङ्गुलमधमम् शिलालये, शिलाभिः मृण्मये इष्टकाभिः कुर्यात् । तस्योत्सेधमष्टधा कृत्वा द्विभागंशिरोभागोच्चं तन्मध्यानतं त्र्यंङ्गुल मेवं योगशयनस्यकारयेत् । उत्सेधंषड्भागं कृत्वा द्विभागंशिरोभागोच्चं तन्मध्यानतं पञ्चांगुल मेवंभोगशयनस्य कारयेत् । उत्सेधं सप्तधाकृत्वा द्विभागं शिरोभागोच्चं तन्मध्यानतं चतुरङ्गुल मेवं वीरशयनस्यकारयेत् । त्रिपंचसप्तवलयै स्तल्पितंकृतं (तल्पीकृतं) स्यात् । फणान् सप्त पञ्च नव च हेमाभान् समाहितान् अधस्ता च्छ्वेतवर्णं मकुडोपरिसंछाद्य स्थितान् व्यालसिंहमुखान् भृंगमध्योशिखामणिं च कुर्यात् । तेषामुत्सेधं शयनोत्सेध मनंतस्यव्यास देवमुभयोः पार्श्वयोः पादे च यथोचितंस्यात् एवं शयनं-परिकल्पयेत् ॥

## ब्रह्मादीनां स्थानप्रमाण वर्णादि निर्णयः

नाभिसूत्राद्दक्षिणे चोपरिष्टाध्दस्तमात्रे भित्तिमाश्रित्य नाभ्यंबुजंस्यात्, तद्विस्तारमष्टादशाङ्गुलं तद्दशांशोनमूर्ध्वदल विशालमधोदलनतं चतुरङ्गुलं ऊर्ध्वदळनतं त्रिमात्रं कर्णिकायुतम्, ऊर्ध्वाधः शतपत्रैर्युक्तं नाळमध्य-र्धाङ्गुलपरिणाहं नालस्य दक्षिणे तद्दक्षिणे च बालाऽबाल पर्णयुतं बालपर्णस्य विशालं तत्पद्मोर्ध्वदळविशालसमम्, इतरपरपर्णविशाल मधोदळ विस्तृतसमं तयो र्नाळं एकांगुल परिणाहं कुर्यात् । तत्पद्मकर्णिकामध्ये ब्रह्माणं चतुर्मुखं जटामकुटधरं हिरण्यवर्णं पुष्पांबरधरं सर्वाभरण भूषित

मुत्तरीयोपवीताभ्यांयुक्तं ब्राह्मासने समासीनम्, अक्षमालाकमण्डलुधरं दक्षिणमालोड्यकरं वामंकटि विन्यस्तं चतुर्हस्ताभ्यां प्राञ्जलीकृत्यवा समासीनं अथवा स्वांकेवामाऽवामकरौ प्रसृतौ कारयेत् ॥

ध्रुवबेरायामस्य दशांशैकांशं तालं तस्यऽऽदित्यैकांशमंगुलं तेनब्रह्मादिदेवान् कारयेत् । ब्रह्माणं त्रितालेन, गरुडं पञ्चायुधान् षण्मात्राधिक द्वितालेन, द्विभुजंकरं(ड) टिकामकुटादिभूषणयुतं (द्रु) धृतवेगेन उद्देश्यकर वामं दक्षिणकरतलप्रहरणं गरुडं, सुवर्णाभं, चक्रंपुंरूपं रक्ताभं, शंखं पुंडरीकरूपं (भूताकारं) वृत्ताकारं श्वेताभं, शार्ङ्गं नपुंसक पीताभं, गदां रक्ताभां स्त्री रूपां, खड्गं श्वेताभं पुंरूपं, तत्तन्मूर्धसु तत्तच्छिह्नानिच द्विषट्तालेनच मधुकैटभौ चंद्रादित्या वतिश्वेताऽतिरक्तौ, त्रितालेन सनकसनत्कुमारौ बालरूपौ वकुळफलाभौ, द्वितालेन तुंबुरुनारदौ, त्रितालेन पीतरक्ताभौ, किन्नरमिथुनौ पीताभौ, द्व्यर्धतालेन षट्तालेन विघ्नं रक्ताभं तथाश्यामां दुर्गाम्, ऋषीन् त्र्यर्धतालेन, तथाऽप्सरसश्च त्रयस्त्रिंशद्देवान्, इंद्रादिलोकपालान्, चतुस्तालेन कारयेत् । देवस्य बाहुमानं स्तनान्तं वा देव्योर्मानं, पूजकयोर्ब्रह्मेशयोश्च देवस्यांऽशोनम् एवं कारयत् । अत्रानुक्तं सर्वं शिल्पिशास्त्रोक्तविधिना कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे स्थानकादि ध्रुवबेरविधानंनाम एकोनविंशःपटलः ॥१९॥

# अथ विंशः पटलः

अथ देवस्य देव्यादीनांच वर्णवाहनकेत्वादीन्वक्ष्ये । वर्णवाहनकेतु-नामनक्षत्रपत्नीबीजाऽक्षरादीनि ज्ञात्वाऽर्चयेत् । अन्यथा चेदसुरापूजांगृ-ह्णीयुः ।

## देवस्यवर्णनिर्णयः

देवः कृतयुगेश्वेतवर्णः त्रेतायांरु (क्मा) ग्माभः, द्वापरे रक्ताभः, कलौश्यामवर्णः, सर्वेषुश्यामवर्णो वा, सर्वेषां वर्णानां श्यामं मुख्यम् ॥

## प्रथमावरणदेवाः

तस्मात् श्यामवर्णः पीतांबरधरः किरीटकेयूरहार प्रलंबयज्ञोपवीती श्रीवत्सांक श्चतुर्भुजः शंखचक्रधरोऽभयकट्यवलंबितहस्तो गरूडध्य-

जवाहनो अकारबीजः पंचशङ्खरवो दक्षिणवामयोः श्रीभूमिसहितो विष्णुः (तं) 'विष्णुं महाविष्णुं सदाविष्णुं व्यापिनमिति चतुर्मूर्तिमंत्रैरर्चयेत् । अथवा पंचमूर्तिमंत्रैरर्चयेदिति केचित् ।

तत्प्राच्यां पुरुषः प्राङ्मुखः श्वेताभः पीतवासा श्चतुर्भुजश्शंख चक्रधर स्सर्वाभरणभूषितः श्रीमेदिनीभ्यां युक्तः पुरुषः पुरुषं पुरुषात्मकं परमपुरुषं धर्ममय' मिति ।

आग्नेय्यां कपिलः प्राङ्मुखः श्वेताभः अष्टहस्तः दक्षिणे चैकहस्ते नाभयप्रदोऽन्यैश्चक्राऽसिहलधरः वामे चैकहस्तेन कटिमवलंब आन्यैः शंखचापदण्डधरः रक्तवासा मकुटादि सर्बाभरणभूषितः गायत्री सवित्री संयुक्तः कपिलः 'कपिलं मुनिवरं शुद्धं वेदरूपिण' मिति ॥

दक्षिणे दक्षिणाभिमुखोंऽजनाभः रक्तांबरधर श्चतुर्भुजः शंखचक्रधर स्सर्वाभरणभूषितो धृतिपौष्णिभ्यांसहितः सत्यः 'सत्यंसत्यात्मकं ज्ञान-मयंसत्वतेज' मिति ॥

नैर्ऋत्यां पश्चिमाभिमुखः तप्तचामीकराभ श्चतुःभुजः श्चतुःशृंगः द्विशीर्षः सप्तहस्तः शंखचक्राज्य स्थालीस्रुक्स्रुवजुहूपभृध्दरंस्त्रिपादोरक्तवस्त्रधरः सर्वाभरणभूषितो दक्षिणवामयोः स्वाहास्वधाभ्यांयुक्तोयज्ञो 'यज्ञं सर्वदेवमयं पुण्यं क्रतु' मिति ॥

पश्चिमे पश्चिमाभिमुख श्चतुर्भुजः सर्वाभरणभूषितः कनकाभः श्यामांबरधरः पवित्रीक्षोणीभ्यां सहितः अच्युतः 'अच्युतं अपरिमितमैश्वर्यं श्रीपति मिति ॥

वायव्ये पश्चिमाभिमुखः स्फटिकाभः श्यामांबरधरः शंखचक्रधरो ऽभयवरदहस्तः श्रीवत्सांक स्सर्वाभरणभूषितःकमलेलाभ्यां युक्तो नारायणः 'नारायणं जगन्नाथं देवदेवं त्रयीमय' मिति ॥

उत्तरस्या मुत्तराभिमुखः प्रवालाभो नवसप्तपञ्चफणान्वितानन्तोत्संग आसीनः पुष्पांबरधरः सर्वाभरण भूषितः चतुर्भुजः शंखचक्रधरः प्रमोदायिनी महीयुक्तोऽनिरुध्दः 'अनिरुध्दंमहांतं वैराग्यंसर्वदेव (तेजो) मय' मिति ॥

ऐशान्यां प्राङ्मुख स्तरुणादित्यसंकाश श्चतुर्भुजः शंखचक्रधरः श्रीवत्सवक्षाः सर्वाभरणसंयुक्तः श्वेतवस्त्रोत्तरीयोपवीतः दक्षिणवामयोरिन्दि-राधरणीभ्यां युक्तः युण्यः 'पुण्यं पुण्यात्मकं पुण्यमूर्तिं पुण्यदायिन' मिति ॥

## द्वितीयावरणदेवाः

द्वितीय्यावरणे प्राच्यां वराहः प्राङ्मुखः श्यामाभ श्चतुर्भुजः शंखचक्र धरः सर्वाभरण संयुक्तः रक्तांबरधरः वराहाननः श्रीभूमिभ्यांसहितः 'वराहो वराहं वरदं भूमिसंधारणं बज्रदंष्ट्र' मिति ।

आग्नेय्यां प्राङ्मुखः इंदीवराभो हेमांबरधरः चतुर्भुजः शंखचक्रधरः सर्वाभरणभूषितः कमलाऽवनीभ्यां सहित स्सुभद्रः 'सुभद्रं सुमुखं सुखप्रदं सुखदर्शन' मिति ।

दक्षिणे दक्षिणाभिमुखो नारसिंहः श्वेताभः रक्तवस्त्रधरः चतुर्भुज शंखचक्रधरः अभयकट्यवलंबित करः सिंहाननः श्रीभूमिसहितः नारसिंहः 'नारसिंहं तपोनाथं महाविष्णुं महाबल' मिति ।

नैऋत्यां पश्चिमाभिमुखो हेमाभः श्यामांबरधरः चतुर्भुजः शंखचक्र धरः किरीटहाराद्याभरणान्वितः पद्मास्थिराभ्यायुतः ईशितात्मा 'ईशं वरदं-सर्वेश्वरं ईशितात्मान' मिति ।

पश्चिमे पश्चिमाभिमुखो वामनो ब्रह्मचारी वकुलफलाभो द्विभुजः छत्रधरः दण्डधर स्समेखलः कौपीनवासाः सोपवीतः कृष्णाजिनधरः पवित्रपाणिः वामनो 'वामनं वरदं काश्यपमदितिप्रिय' मिति ।

वायव्ये पश्चिमाभिमुखो नीलाभः पीतांबरधरोलक्ष्मीधरणीभ्यां युक्तःसर्वोद्वहः 'सर्वेशं सर्वाधारं सर्वज्ञं सर्वोद्वह' मिति ।

उत्तरेचोत्तराभिमुख स्त्रिविक्रमः श्यामाभः चतुर्भुजः शंखचक्रधरः पीतांबरधरो हारादिभूषित स्सुस्थितवामपादो ललाटान्तोद्धत दक्षिणपाद उद्धृतपादप्रसारितदक्षिणहस्तः कट्यवलंबितवामहस्तः त्रिविक्रम 'त्रिविक्रमं त्रिलोकेशं सर्वाधारं वैकुंठ' मिति ।

ऐशान्यां प्राङ्मुखो रक्ताभः श्यामांबरधरः कनकाश्यामाभ्यां सहितः सर्वविद्येश्वरः 'सर्वविद्येश्वरं पुण्यं शुध्दं ज्ञान' मिति ।

पुरुषादीनामनुक्तं सर्वं विष्णोरिवेति विज्ञायते ॥

## तृतीयावरणदेवाः

तृतीयावरणे प्राच्यां श्यामाभः अभ्यंतरमुखो जपांबरधरो ज्येष्ठाजो द्विभुजो धृतकुलिशदक्षिणहस्तः कट्यवलंबितवामहस्तः किरीटाद्या-

भरणान्वितो मेघनादरवो वेणुध्वजो गजवाहनः शचीपतिः जका (राद्यक्ष) रबीजः 'इन्द्रं शचीपतिं पुरुहूतं पुरन्दर' मिति ॥

आग्नेय्यां वह्निजातः किंशुकपुष्पसदृशः शक्तिपाणिः कुण्डलाङ्गद हारवान् शुकपिञ्छाऽम्बरधरः कपिध्वजवाहनः स्वाहापति रिकारबीज स्सर्वदेवमुख आसीनोऽग्निः 'अग्निं जातवेदसं पावकं हुताशन' मिति ।

दक्षिणे श्यामाभो रक्तवस्त्रधरो गदी व्यालध्वजो महिषवाहनो भरिणीजः फकारबीजः शुकांगीशो घंटानादरवो यमो 'यमं धर्मराजं प्रेतेशं मध्यस्थ' मिति ॥

नैर्ऋत्यां नीलाभो रक्तांबरधरः शूली भौतिकारव्येभवाहनः कृक-लासध्वजो मूलजः सम्मोहिनीपतिः पकारबीजः पणवरवो निर्ऋतिः 'आरंभाधिपतिं नीलं निर्ऋतिं सर्वरक्षोऽधिपति' मिति ॥

वारुण्यां नीलवर्णो रक्तवस्त्रधरः पाशीसिंहध्वजो वारुणजः सुप्रतीकेभवाहनः अञ्जनापतिः वकारवीजः दर्दुररवो वारुणो 'वरुणंप्रचेतसं रक्तांबरधरं यादसांपति' मिति ॥

वायव्ये कनकाभ स्सितांबरधरो गजवाहनः वायुजो वेणुध्वजः कुमुद्वतीपतिः दण्डभृत् यकारबीजः शंखरवो वायुः 'जवनं भूतात्मकं-वायुमुदान' मिति ॥

उत्तरे सितवर्णः श्यामांबरधरो दण्डी पुष्पकवाहनः कृकलासध्वजः ककारबीजो यवनलापति र्धनिष्ठाजो मृदंगरवः कुबेरः 'कुबेरं धन्यं पौलस्त्यं यक्षराज' मिति ॥

ऐशान्यां पाटल्याभ स्सितांबरधरो वृषध्वजवाहनः जटामौलिश्चतु-र्भुजः त्रिनेत्रः शूलपाणिः शकारबीजः आर्द्राजः पार्वतीशो डमरध्वनि रीशानः 'ईशानमीश्वरं देवभव' मिति ॥

इंद्रादयोवाष्टावभ्यंतरमुखा एतेष्वनिरुध्दं त्रिविक्रमं वामनं, च विना ध्रुवेस्थिते स्थितान् आसीनेत्वासीनान् शयने, यानके च तत्तत्कौतुकवत् ध्यायन् अर्चयेत् ॥

## श्रीभूचतुर्नाम

देवस्यदक्षिणे रुग्माभा क्षौमांबरधरा पद्महस्ता कक्ष्याबद्धघनस्तनी ललाटोपरि पुष्पचूडान्विता मकुट हारादि सर्वाभरणभूषिता श्रीवत्सादिबीजा

फल्गुनोत्तरजा ध्वनिरवाश्रीः 'श्रियं धृतिं पवित्रीं प्रमोदायिन' मिति ॥

वामेश्यामाभा रक्तांबरधरा रक्तोत्पलधरा मकुटादिसर्वाभरणसंयुक्ता वैशाखेरेवतीजाता लक्ष्मीपूर्वाक्षराधिपा शंखरवाभूमिः 'हरिणीं पौष्णीं क्षौणीमही'हो मिति ॥

## पुरुषादि देवीनां चतुर्नामोहः

पुरुषादीनां देवीनां श्रीभूम्योरिवेति विज्ञायते ॥

## कर्मार्चास्थानेप्रथमावरणदेवाः

कर्मार्चास्थाने पीठे प्राच्यां प्राङ्मुख स्सुभद्रः पूर्ववत् ॥

आग्नेय्यां प्राङ्मुख स्सुवर्णः पीतांबरधरः सकला विश्वाभ्यांयुक्त स्सर्वः 'सर्वंविश्वं सर्वाधारं सर्वेश्वर' मिति ।

दक्षिणे दक्षिणाभिमुखो हयात्मकः श्वेताभः पीतवासा हयाननः इलाविश्वाभ्यांसहितो हयात्मको 'हयात्मकं देवेशं सर्वानंदं सनातन' मिति ॥

नैर्ऋत्यां पश्चिमाभिमुख स्सितवर्ण श्श्यामांबरधरः शुद्धाविमलाभ्यांयुक्त स्सुखावहः 'सुखावहं सुरेशं सुमुखं सुरप्रिय' मिति ।

पश्चिमे पश्चिमाभिमुखो रामदेवः कनकाभो नीलांबरधरः ब्राह्मीविजयाभ्यांयुक्तो 'रामदेवं महाबलं महाभद्रं परशुपाणि' मिति ॥

वायव्ये पश्चिमाभिमुखः किंशुकपुष्पाभः सितांबरधरः सुभगासुमुखीभ्यांयुक्त स्संवहः 'स्संवहं सर्वतेजोमयम् आनन्दंसर्वरूपिण' मिति ॥

उत्तरे च उत्तराभिमुखः पुण्यः पूर्ववत् ।

ऐशान्यां प्राङ्मुखोऽग्निवर्ण स्सितांबरधरः सुमताजननीभ्यांयुक्त स्सुवहः 'सुवहं सुकृतं विज्ञानं वेदमय' मिति ।

सुभद्रादीनामनुक्तं सर्वं विष्णोरिवेति विज्ञायते ॥

## द्वितीयावरणदेवाः - मित्रादीनां लक्षणं च

द्वितीयावरणे गजवाहनः श्वेताभः स्त्रुवध्वजो मित्रेशो मित्रः, रुरुवाहनोऽग्निवर्णो जुहूध्वजः सतीशोऽत्रिः, गजवाहनः कनकाभस्सवारि कलशध्वजः शुभेश्वरः, शिवः, वायुवाहनः प्रवालाभो वेदध्वजः शुद्धेशो

विश्वः, सर्वेरक्तांबरधरा भेरीरवा रोहिणीजा तन्नामाद्यक्षरबीजाश्च एतान्-पीठान्ते प्रागादि बहिर्मुखान् अर्चयेत् ।

हेमाभ स्सनातनः, कुन्दाभः सनन्दनः, गुञ्जाभः सनत्कुमारः, स्फटिकाभस्सनकञ्चश्च, सर्वे श्यामांबरधराः पद्मवाहनाः कूर्चध्वजाः ब्रह्मचारिणः नामाद्यक्षरबीजाः पुष्यजा शङ्खनादरवाश्च, एतानाग्नेयादि कोणेषु बहिर्मुखानर्चयेत् ॥

## मित्रादीनां चतुर्नाम

मित्रंलोकहितंविश्वात्मानंकपि (वि) वरम्, अत्रिंत्रिधागतिंतृतीयात्मकं वेदमूर्तिम्, शिवं मुनिवरं शुद्धं सुयोक्तारम्, विश्वं भूतनायकंजगद्वीक्षणं सर्वमातृकम्, सनातनं मुनींद्रं ब्रह्मसंभवं निष्ठानकम्, सनन्दनं गुरुं सर्वपूज्यं मंत्रज्ञम्, सनत्कुमारं ज्योतिरीशं निरुद्वेगमक्रोधम्, सनकं नियंतारं धर्मज्ञं धर्मचोदितमिति ॥

## तृतीयावरणदेवाः

तृतीयावरणे इन्द्रादीन् दक्षिणे श्रियं वामे हरिणीं च, पूर्ववदर्चयेत् ॥

## ब्रह्मादिलक्षणम्

दक्षिणेभित्तिपार्श्वे रुक्माभो हंसवाहनः कमंडलुध्वजोऽभिजिज्जात स्सावित्रीपतिः उकारबीजो वेदरवो ब्रह्मा 'ब्रह्माणं प्रजापतिं पितामहं हिरण्यगर्भ' मिति ॥

सुवर्णाभो ब्रह्मचारी रक्तांबरधरः पद्मवाहनः कूर्चध्वजः शंखरवः मकारबीजः मार्कंडेयः 'मार्कंडेयं पुण्यं पुरातनममित' मिति ॥

वामे भित्तिपार्श्वे श्वेताभो व्याघ्रचर्मांबरधरः परशुमृगधरः चतुर्भुजो वृषध्वजवाहनो डमरु(क) ध्वनिः मकारबीजः आर्द्राज उमापति गङ्गाधरो 'गङ्गाधरं वृषवाहनम् अष्टमूर्तिमुमापति' मिति ॥

अग्निवर्णः शुक्लांबरधरः पद्मवाहनः कमण्डलु ध्वजो रोहिणीजः शङ्खरवो नामाद्यक्षरबीजः ख्यातीशः पद्मापिता 'पद्मापितरं धातृनाथं ख्यातीशं भृगु' मिति ॥

## धात्रादीनां लक्षणम्

दक्षिणे गंधर्वस्थाने वेणुवर्णो रथकेतु स्संधिनीश उदङ्मुखो धाता, वामे गधर्वस्थाने शुकपत्राभो गजवाहन स्सर्पध्वजो ऊर्ध्वेशो दक्षिणामुखो विधाता, द्वारदक्षिणशिरा ऊर्ध्वमुखो नीलवर्णो वृषभवाहनोऽग्निकेतुः प्रीतीशो भुवंग भृतिः पूजकादिभिरर्चनाकालादन्यत्राऽनलंध्यः उपरिस्थाने पूजयेत् । तदुपरि शुक्लाभ स्तुरंगवाहनः श्वेतकेतुः भरणीश उदारः अधोमुखः पतङ्गः द्वारदक्षिणभागे सुवर्णाभो गजवाहनो वृषध्वजो बलेशः पतिरः, वामे सुवर्णाभो रथवाहनः शङ्खध्वजो धरणीशोऽवाक्शिरा वरुणः एतेनामाद्य-क्षरबीजा श्शंखरवा आश्वयुज्यां हस्तजश्थ्य ॥

## धात्रादिनां चतुर्नाम

'धातारं डंभिनं सनिलं गंधवं, विधातारं कीनाशं मूरुंडंन्यर्णं, भृतिं भुवंगम् उत्संगं पीठं, पतंगम् उत्करम् अपदानं कपर्दिनं, पतिरं बल्विनं मध्यगं वंखरं, वरुणं तेजिनं दंसिनं तरस्विन' मिति षडेतान् कवाटं यत्राऽस्ति तत्रार्चयेत् ॥

## आलयबाह्ये न्यक्षादि देवाः

आलयस्य बहिःपार्श्वे प्राग्द्वारमध्ये प्राङ्मुखो दूर्वांकुरवर्णो हेमां-बरधरः प्रज्ञा (पूजा) मीशो दण्डपाणिः श्येनध्वजवाहनो रोहिणीजो न्यक्षाद्यक्षरबीजो 'न्यक्षं दधीत्यकं पीवरमार्यक' मिति ।

दक्षिणे दक्षिणामुखो रक्तवर्णस्सितांबरधरः उत्साधिनीपति र्दण्डधरः पिंडिपालध्वजोहयवाहनः मखोद्भवः स्रुक्ध्वनिः विश्वाद्यक्षरबीजो विवस्वान् 'विवस्वंतं भरतं विश्वकर्माणं मरीचिमंत' मिति ॥

पश्चिमे पश्चिमाभिमुखः शरभांडनिभंः पुष्पांबरधरः कपोतवाहनः धूमकेतु र्ज्वालायुधो विशाखाजो मेघरवो नामाद्यक्षरबीजो मित्रो 'मित्रंमित्वरं राजिष्वंतं रमणक' मिति ॥

उत्तरे च उत्तराभिमुखो हेमाभः पुष्पांबरधरो मृगवाहनो महिषध्वजो मूलाजो दण्डपाणि र्वाणीपतिः वेदरवः क्षत्ताऽऽद्यक्षरबीजः क्षत्ता 'क्षत्तारं महीधरम् उर्वरोहं शेवधि' मिति ॥

## प्रथम द्वारदेवते

प्रथमद्वारदक्षिणे श्वेतवर्णः शुक्लांबरधरः स्रुक्ध्वजो गजवाहनो रोहिणीज स्संध्यानाथ श्शंखरवो यंत्रिकायुधः मकाराद्यक्षरबीजो मणिको 'मणिकं महाबलं विमलं द्वारपालक' मिति ॥

वामे तस्यपत्नी कनकाभा सितांबरधरा पुष्पहस्ता सौम्यजाश्शुकस्वर रवा सकारबीजा संध्या 'संध्यां प्रभावतीं ज्योतिरूपां दृढव्रता' मिति ॥

## मुखमडप द्वारदेवते

मुखमंडपद्वारदक्षिणे-स्फटिकाभो हेमांबरधरो रुरुवाहनः कुशध्वजो विधिजो दिव्येशो नामाद्यक्षरबीजो दण्डधर श्चतुर्भुजो वेदरवो विखना 'विखनसं तपोयुक्तं सिद्धिदं सर्वदर्शन' मिति ॥

वामे रुरुवाहनः कूर्चध्वजः ताराद्यक्षरबीज स्संधिनीशो वेदरवो दण्डधरो द्विभुजः पुष्यसंभव स्तापस 'स्तापसं सिद्धिराजं सर्वदोषविवर्जितं सहस्राश्वमेधिन' मिति ॥

## प्रथमावरण द्वारदेवते

प्रथमावरण द्वारदक्षिणे अग्निवर्णः शुक्लां (कां) बरधरः कूर्मवाहनः शरध्वजः संमोदिनीपतिः (ध्रुवा) द्यक्षरबीजः प्रोष्टपाज्जातो दण्डपाणि स्सिंहरवः किष्किन्धः 'किष्किन्धं बहुमर्दिनं बहुसेनं दृढव्रत' मिति ।

वामे श्वेताभो रक्तांबरधरः कूर्मवाहनः शरध्वजो विशोकापति र्वेणुदण्डायुध स्तीर्थाद्यक्षरबीजो आर्द्राजो मेघरवः तीर्थः 'तीर्थम् उद्वाहकं सर्वयोग्यम् उदावह' मिति ॥

## द्वितीयावरण द्वारदेवते

द्वितीयावरण द्वारदक्षिणे च - उत्तराभिमुखः प्रवालाभः एकदन्तः कर्णादूर्ध्वंगजाकारो वामनः कुशध्वजो वेणुकंकतवाहनः शंखरवः चतुर्भुजः कदळीफलहस्तः आर्द्रापतिः श्रविष्ठाजो वक्रतुण्डः 'वक्रतुंडम् एकदंष्ट्रं विकटं विनायक' मिति ॥

उत्तरे शंखवर्णो नीलांबरधरः किरीटी सिंहासने समासीनः द्विभुजो जवनीपतिः सार्पजो हस्तताळरवः शेषाद्यक्षरबीजः सागरध्वजवाहनो नवभिः

सप्तभिः पंचभिर्वा पृष्ठोद्गतैः फणै स्समाछादित मौळिः नागराजः 'नागराजं सहस्रशीर्षमनन्तं शेष' मिति ॥

## तृतीयावरण द्वारदेवते

तृतीयावरणे द्वारदक्षिणे शंखाभो नीलांबरधरो भूताकारः शुद्धापतिः पद्मध्वजवाहनो हस्ताभ्यां शंखंदधानो वारुणः शंखादिबीजः शंखरवः शंखनिधिः 'शंखनिधिंवरं धनदं मौक्तिकोद्भव' मिति ॥

वामे रक्ताभो जपांबरधरो विशुद्धेशो हस्ताभ्यां पद्मंदधानः पद्मध्वजवाहनः प्रोष्टपाज्जातः सिंहनादरवः पद्माद्यक्षरबीजः पद्मनिधिः 'पद्मनिधिं वरं रक्ताभं भूतनायक' मिति ।

## चतुर्थावरण द्वारदेवते

चतुर्थावरणे द्वारदक्षिणे-रक्ताभः श्वेतांबरधरो नागचूळिकमस्तकः उद्देश्यकरो भामिनीश स्तुरगवाहनोऽहि ध्वजो भेरीरव स्तुकारबीजो हस्तज स्तुहिणः 'तुहिणं दैत्यराजं विष्णुभक्तं गदाधर' मिति ॥

वामे श्यामाभो रक्तांबरधरो नागचूळिकमस्तकः उद्देश्यकर स्सुधा-पतिः व्याघ्रवाहन स्सर्पध्वजो झल्लरीरवो हस्तजो बल्यादिबीजो बलिन्दो 'दैतेयं महावीर्यं बलिन्दं शूलपाणि' मिति ॥

## पञ्चमावरण द्वारदेवते

पञ्चमावरणे द्वारदक्षिणे-रक्ताभो नीलांबरधरः शिरसिखड्गधरो वायु वाहन अनलध्वजो घोररवः स्वातीजो बलेशः खकारबीजो नन्दको 'नन्द कं खड्गं पापहरं दैत्यनाशन' मिति ॥

वामे पञ्चवर्णैर्युक्तं श्वेतांबरधरं नपुंसकं शिरसि चापधरं मेघवाहनं शरध्वजं महानादरव विशाखाजं शकारबीजं शार्ङ्गः 'शार्ङ्ग धनुर्वरं शत्रुहंतारं वरायुध' मिति ॥

## षष्ठावरण द्वारदेवते

षष्ठावरणे द्वारदक्षिणे श्वेताभो नीलवासा श्शिरसिशंखभृत्दण्डायुधो नन्देशो रोहिणीजो वियद्गतिध्वजो हंसवाहनः कंठशब्दरवो नामाद्यक्षरबीजः शंखचूली 'शंखचूलिनं वृक्षदण्डं श्वेताभं घोररूपिण' मिति ।

वामे रक्ताभः श्वेतांबरधरः शिरसिचक्रधरः पाशदण्डभृन्मेघनादरवो धूमकेतुस्तुष्टीशः प्रवृत्तवाहनश्चकारबीजश्चक्रचूली 'चक्रचूलिनं महानादं उग्रतापं भयानक' मिति ॥

## सप्तमावरण द्वारदेवते

सप्तमावरणे द्वारदक्षिणे-हेमाभो रक्तवस्त्रधरः चतुर्भुजः उद्देश्यदंड धर दक्षिणहस्तः अपसव्यकट्यवलम्बित वामहस्तः उग्रवेगसमन्वितो दंष्ट्राभ्यां युक्तः किंचिद्वारंसमीक्ष्यस्थितः प्रियापतिः सिंहवाहनो मेघरवो धूमकेतुः मूलोद्भवो नामाद्यक्षरबीजः चण्डः 'चण्डम् उग्रं भयानकं द्वार पालक' मिति ।

वामे श्यामाभः श्वेतांबरधर स्सुमुखीपतिरन्यत्सर्वं चंडवत्प्रचण्डः 'प्रचण्डंभीमंघोररूपं द्वाराधिप' मिति ॥

## विष्वक्सेनस्वरूपं स्थलनिर्णयः

उदक्प्राकारपार्श्वे, विमानपार्श्वे वा, कुबेरैशान्ययोर्मध्ये दक्षिणाभि मुखः सिंहासनेसमासीनोऽग्निवर्णः पीतवासाः श्रीवत्सं च, ब्रह्मसूत्रं च विना हरिवत्भूषणैर्युक्तो द्विभुजः पुष्पपाणिः शक्तिदण्डभृद्वा, जयापतिः शृंगकेतुः पुष्परथवाहनः पूर्वाषाढोद्भवः पुष्परवो विद्यादिबीजो विष्वक्सेनो 'विष्व क्सेनं शान्तंहरं अमित' मिति ॥

## श्रीभूतस्थानादि

प्रथमावरणस्य चातुर्भागात्त्रिभागे सोपानमध्ये वा श्वेताभो रक्तांबर-धरः बहिर्मुखः ब्रह्मचारी दण्डायुधः सिंहध्वजवाहनः फाल्गुने भरणी (रोहिणी)जातः कुंभशब्दरवो भूताद्यक्षरबीजो श्रीभूतः 'श्रीभूतंश्वेतवर्णं-वैष्णवं मुखपालिन' मिति ॥

## गरुडस्थानादि

दितीयावरणे हाटकाभः शुकपिञ्छाम्बरधरः झल्लरीमेखलायुक्तः किंकिणीजालयुत स्सर्वाभरणभूषित उपर्युपरिछन्नभिर्बंधूकनिभाभिस्तिसृभि श्चूडाभिर्युक्तः श्यामः त्रिशीर्ष सुमुखभुजगेनकृतछन्नवीरः किरीटवान् पञ्चवर्ण मिश्रितः भुजगाभ्यांयुक्तः छन्दोमयः पक्षद्वययुतो गुञ्जाभनेत्रो हृदये अंजलि संयुक्तोऽभयदोवा द्विभुजः स्वात्युद्भव श्चूडध्वजो विशोकेशो वायुवाहनः

तुण्डायुधः पक्षघातरवो गणाद्यक्षरवीजो गरुडो 'गरुडं पक्षिराजं सुवर्णं खगाधिप' मिति ॥

## चक्रस्थानादि

तत्पूर्वे चक्राङ्गारवर्णो रक्ताम्बरधरः शिरसिचक्रभृत् पुष्टिकेशोधूम-केतुः प्रवृत्तवाहनः तज्जनितरवः चकारबीजोऽनलस्सुदर्शनः 'सुदर्शनं चक्रं सहस्रविकच मनपायिन' मिति ॥

## शंखस्थानादि

तत्पूर्वे पाञ्चजन्यो दुग्धाभो रक्तवस्त्रधरो भूताकृतिः शिरसि शंख भृत् वियद्गतिध्वजो वियद्गात्रायुधो हंसवाहनः कंठशब्दरवो वारुणीपतिः शकारबीजो नलजः पांचजन्यं 'पाञ्चजन्यं शंखम् अंबुजं विष्णुप्रिय' मिति ॥

## ध्वजस्थानादि

तत्पूर्वे हाटकानः शुक्लाम्बरधरः ऊर्ध्वकेतुः शंखकेतुः वायुवाहनः सिंहारवो स्वातीजातो जकारबीजो जयप्रियापति र्द्विभुजः पद्मधरः आसने दक्षिणं पादं प्रसार्य वाममाकुंच्याऽऽसीन स्सर्पयुक्तो हृदयेंऽजलिसंयुक्तो जयो 'जयम् अत्युच्छ्रितं धन्यं ध्वज' मिति ॥

## यूथाधिपस्थानादि

तत्पूर्वे यूथाधिपः पीठे बहिर्मुखः श्वेताभो रक्तवस्त्रधरो भूताकारो द्विभुजो दण्डधरो भूतकेतुर्महाचातक वाहनः रविजेशो गतिशब्दरवः श्रवि-ष्ठाजो भूताद्यक्षरबीजो महाभूतो 'यूथाधिपतिं नित्य मुग्रं महाभूत' मिति ॥

## अक्षहन्तृस्थानादि

तत्पूर्वे पीठे पाकार्जुनो रुक्माभः पद्मनेत्रः कृष्णकुंचितमूर्धजः भूता कारः कृष्णवस्त्रधरः कुण्डोदरो द्विभुजो दण्डहस्तो स्वातीजात स्सिंहनादरव स्सिंहध्वजवाहनो भूताद्यक्षरबीजः स्सुमुखीपति र्विष्णुभूतः पाकः 'अर्जुनं हस्तम् अक्षहन्तारं विष्णुभूत' मिति ॥

## चक्रादीनां स्थाने मतान्तरम्

एते अनपायिनः एतेषु श्रीभूतगरुडौ प्रासादपार्श्वे चक्रशंखध्वजयू-

थाधिपपाकोर्जुनान् बलिपीठपार्श्वे च संयोज्यार्चयेदिति केचित् ॥

## आवरणबलिदेवाः

प्रथमावरणे, द्वितीयेवा, पूर्ववदिंद्रादीनर्चयेत् । प्रगादि द्वारदक्षिणपार्श्वे तत्तद्दिगीशानर्चयेत् ॥

## द्वितीयाबरणे नवग्रहाणां चतुर्नामादिकम्

द्वितीयावरणे प्राग्द्वारादुत्तरे पश्चिमाभिमुखो रक्तवर्णः शुक्लांबरधरो द्विभुजः पद्महस्त स्ससाश्ववाहनो हयध्वजो रेणुकासुवर्चलापतिः खकार-बीजोऽब्धिघोषणरव स्सहस्रकिरणो मण्डलावृतमौलिः श्रावणेमासि हस्तजः आदित्यः 'आदित्यं भास्करं सूर्यं मार्त्ताडं विवस्वंत' मिति ॥

तद्दिगीशस्यदक्षिणे पश्चिमाभिमुखः श्वेताभो रक्तांबरधरो द्विभुज इक्षुचापभृत् मंडलावृतमौलिः हिरण्मयोऽष्टाश्ववाहनः कुलीरध्वजोहंसरवो रोहिणीशः सकारबीज स्सौम्यजश्चंद्रो 'वसिष्टं सोमंयज्ञांगं दुमतिं चंद्र' मिति ।

दक्षिणे च उत्तराभिमुखो बंधूकवर्णो नीलांबरधरः शक्तिपाणिः शर-भध्वजः शुकजुष्टापतिः अश्वनीजातः अश्ववाहनः शंखरवो नामाद्यक्षरबीजः अङ्गारक 'अंगारकं वक्रं रक्तं धरासुत' मिति ।

तस्यपश्चिमे च उत्तराभिमुखः श्यामवर्णो रक्तांबरधरो द्विभुजो रथवाहनः सिंहध्वज शंखरवो नामाद्यक्षरबीज स्सुशीलापतिः श्रविष्ठाजातो बुधो 'बुधं श्यामं सौम्यं श्रविष्ठाज' मिति ॥

## गुरोः

पश्चिमे दिगीशस्यदक्षिणे प्राङ्मुखः पीताभः श्यामांबरधरो दर्भहस्तः पूरितमकुटः कृष्णाजिनधरः कुशध्वजो हंसवाहनः तिष्यज स्तारापतिः नामा द्यक्षरबीजः बृहस्पतिः 'पीतवर्णं गुरुं तैष्यं बृहस्पति' मिति ॥

## शुक्रस्य

तस्योत्तरे प्राङ्मुखो रजतवर्णो वल्कलांबरधरोऽजिनजटाधरो मेघ-वाहनः स्त्रुवध्वजो रोहिणीजो नामाद्यक्षरबीज स्सुमदापतिः शंखरवः शुक्रः 'शुक्रं भार्गवं काव्यं परिसर्पिण' मिति ।

## मंदस्य

उत्तरे दिगीशस्यपश्चिमे दक्षिणामुखः अञ्जनाभः द्विभुजः कुश-चीरांबरधरो रेवतीजःकुमुदापतिः वराहध्वज वाहनः शंखरवो नामाद्य-क्षरबीजो मन्दः 'सूर्यपुत्रं मंदं रैवत्यं शनैश्वर' मिति ।

## राहोः

तत्प्राच्यां दक्षिणामुखः श्यामाभो जपाम्बरधरो द्विभुजो नागचूलिक-मस्तकः पाशायुधो मण्डलावृतमौलि स्सर्पध्वजवाहनो आश्लेषाजो जरा-पतिः नामाद्यक्षरबीजः राहुः 'राहुं दैतेयमुरगेशं ग्राहक' मिति ॥

## केतोः

प्राच्यां पश्चिमाभिमुखो धूमवर्णः श्वेतांबरधरो नारीशः अन्यत्सर्वं राहोरिव केतुः 'केतुं कृष्णं रौद्रं प्रकाशिन' मिति । याद्दिग्द्वारं तद्दिग्द्वारपार्श्वे अर्चयेत् ॥

## तृतीयावरणे गङ्गादीनां चतुर्नामादि

तृतीयावरणे प्राग्द्वारदक्षिणे पश्चिमाभिमुखा द्विभुजापीतांबरधरा श्वेताभा कृष्णकुंचितमूर्धजा हृदये अञ्जलिसंयुक्ता रेवतीजा गकारबीजा कूर्मध्वजवाहना शंखरवा गङ्गा 'नळिनीं जाह्नवीं गङ्गां लोकपावनी' मिति ॥

## यमुनायाः

दक्षिणे चोत्तरामुखा श्यामवर्णा रक्तवस्त्रधरा पीनस्थनी कृष्णकुञ्चित-मूर्धजा द्विभुजा पुष्पहस्ता परपुष्टरवा मत्स्यवाहनकेतुका मूलजा यमाद्यक्षर-बीजा यमुना 'यमुनां स्फटिकां नदीवरां पावनी' मिति ॥

## नर्मदायाः

पश्चिमे रक्ताभा प्राङ्मुखा श्वेतवस्त्रधरा सुखासीना द्विभुजा पुष्प मालाधरा कूर्मध्वजवाहना जलजकुक्कुटरवा अश्विनीजाता नद्याद्यक्षरबीजा नर्मदा 'नर्मदां नदीवरां विद्युद्रूपां विशाला' मिति ॥

## सिन्धोः

उत्तरे दक्षिणामुखा कृष्णश्वेताभा पुष्पवस्त्रधरा पद्महस्ता द्विभुजा

उद्धद्धकेशी पौष्णजा जलघोषरवा मकरध्वजवाहना सिताद्यक्षरबीजा सिन्धुः 'सिन्धुं नदीवरां मृद्धङ्गी साधना' मिति ॥

## दुर्गायाः

प्राग्द्वारादुत्तरे श्यामवर्णा सिताम्बरधरा अष्टभुजा चतुर्भुजा वा शंख-चक्रधरा सर्वाभिरणसंयुक्ता कक्ष्याबद्धघनस्तनी कृत्तिकोद्भवा घण्टारवा नामाद्यक्षरबीजा सिंहध्वजवाहना दुर्गा 'दुर्गां कात्यायनीं वैष्णवीं विन्ध्य-वासिनी' मिति ॥

## सरस्वत्याः

आग्नेय्यां रक्तवर्णा श्वेतवस्त्रधरा चतुर्भुजा अक्षमाला कमंडुलुज्ञान-मुद्रापुस्तकयुता हंसवाहना नामाद्यक्षरबीजा अश्विनीजाता प्रणवरवा सिद्धिः 'सिद्धिं विश्वां भृगुपत्नीं सरस्वती' मिति ॥

## श्रियः

नैर्ऋत्यां श्रियं पूर्ववत् ॥

## ज्येष्ठायाः

वायव्यां रक्ताभा पुष्पांबरधरा पीनस्तनी पुष्पनिधिभाजनधरा दक्षिणे पीतगदाधरा, वृष(भ)युतावा रक्तनीलपरीतांगी मौञ्जलिकाञ्चियुता ज्येष्ठा-नक्षत्रजाता खरयुक्ता श्यामांबरधरा रथवाहना काकध्वनियुताकाकध्वजा नामाद्यक्षरबीजा ज्येष्ठा 'भूर्ज्येष्ठायिनीं भुवर्ज्येष्ठायिनीं सुवर्ज्येष्ठायिनीं कलिरा-जायनीं कलिपत्नी' मिति ॥

## धात्र्याः

ऐशान्यां रक्ताभा श्यामाम्बरधरा उग्रनयना महारौद्री दंष्ट्राभ्या-मलंकृता बालमौल्युत्तरासंगा त्रिशूला षड्भुजा भ्रूभङ्गविकटा कपाल-पाशहस्ता रक्तकुंचितमूर्धजा अट्टहाससहिता अवग्रपीठसमासीना डम-रुकध्वनियुता नामाद्यक्षरबीजा पिशाचध्वजवाहना आर्द्रानक्षत्रजाता धात्री 'धात्रीं महोदरीं रौद्रीं महाकाली' मिति ॥

## सुरायाः

अन्तराले प्राच्यां पश्चिमाभिमुखा रक्तवर्णा जपांबरधरा पुष्पहस्ता

ललाटोपरिपुष्पचूडा कृष्णकुंचितमूर्धजा वीणावेणुरवा स्वात्युद्भवा कपोतध्वजवाहना सुराद्यक्षरबीजा सुरा 'सुरां सुमुखीं विद्युद्रूपां सुभगा' मिति ॥

## सुन्दर्याः

तद्दक्षिणे पश्चिमाभिमुखा कनकाभा सितांबरधरा पुष्पहस्ता द्विभुजा कृष्णकुंचितमूर्धजा वीणावेणुरवा स्वात्युद्भवा हंसध्वजवाहना नामाद्यक्षरबीजा सुन्दरी 'सुन्दरीं विशालां पद्माक्षीं पद्मवर्णिनी' मिति ॥

## स्वाहायाः

दक्षिणे च उत्तराभिमुखा रुग्माभा रक्तवस्त्रधरा पुष्पहस्ता द्विभुजा कृष्णकुंचितमूर्धजा हंसरवा विशाखाजाता नामाद्यक्षरबीजा स्वाहा 'स्वाहां शुभाङ्गीं मृद्वङ्गीं साधना' मिति ॥

## स्वधायाः

तत्पश्चिमे च उत्तराभिमुखा सितश्यामा कृष्णाम्बरधरा पुष्पहस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा शुकध्वजवाहना नामाद्यक्षरबीजा अग्निरवा याम्यजा स्वधा 'स्वधां समृद्धिं कुलवर्धिनीं सन्नति' मिति ॥

## संह्लादिन्याः

पश्चिमे प्राङ्मुखा कनकाभा सिताम्बरधरा पुष्पहस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा वीणावेणुरवा हंसध्वजवाहना मूलोद्भवा नामाद्यक्षरबीजा संह्लादिनी 'संह्लादिनीं वरारोहां मायाङ्गी मुदवर्धिनी' मिति ॥

## राकायाः

उत्तरे दक्षिणाभिमुखा हेममिश्रसिताभा रक्ताम्बरधरा पुष्पहस्ता द्विभुजा कृष्णकुञ्चितमूर्धजा वीणावेणुरवा हंसध्वजवाहना मूलोद्भवा नामाद्यक्षरबीजा अभिजिज्जाता राका 'राकां मख्यां रत्नाङ्गीं वरानना' मिति ॥

## सिनीवाल्याः

तत्पूर्वे दक्षिणाभिमुखा सितश्यामा शमीपुष्पनिभाम्बरधरा पुष्पहस्ता द्विभूजा कृष्णकुञ्चितमूर्धजा घनस्तनी प्रथश्रोणी हंसध्वजवाहना शकस्वररवा

अभिजिज्ञता पुण्याद्यक्षरबीजा सिनीवाली 'सिनीवालीं हितदां गभस्तिनीं पुण्यदा' मिति ॥

## हवीरक्षकस्य

पचनालये च उत्तराभिमुखः कृष्णवर्णः शुक्लाम्बरधरो विकटकभ्रू श्शूलपाणिः कुशेशयाक्षो नामाद्यक्षर बीज स्सुरगणेशः शङ्खरवोऽश्ववाहनः सिंहध्वजो रोहिणीजो हवीरक्षको 'हवीरक्षकम् आग्नेयं पचनंशैलूष' मिति ॥

## पुष्परक्षकस्य

षुष्पसंचयस्थाने पश्चिमाभिमुखः कनकवर्णः श्यामाम्बरधरो गज-वाहनः पुष्पध्वजो रेवतीज श्शङ्खरवः शुद्धाङ्गेशो नामाद्यक्षरबीजः पुष्परक्षकः 'पुष्परक्षकं हरितम् अधिवासं फुल्ल' मिति ॥

## पुरुषस्य

स्नानोदकसञ्चयस्थाने पुरुषं पूर्ववत् ॥

## प्लोताधिपस्य

प्लोतवस्त्रोत्तरीयादि संचयस्थाने हेमाभः शुकपिंछांबरधरः चतुर्भुजः कलशाक्षमालापाणिः जटाधरो हंस वाहनो रूपाद्यक्षरबीज स्सावित्रीपतिः अभिजिज्ञातः कमण्डलुध्वजो हुङ्काररवः त्वष्टा 'त्वष्टारं रूपजातं निधिजं प्लोताधिप' मिति ॥

## शयनस्थानेगदायाः

शयनस्थाने पश्चिमाभिमुखा हेमाभा रक्ताम्बरधरा पद्महस्ता द्विभुजा शिरसिगदाधरा सिंहध्वजवाहना घोररवा श्रविष्ठाजा गकारबीजा गदा 'गदां कौमोदकीं पुण्यां प्रबला' मिति ॥

## चामुण्डस्य

हविर्द्रव्यादि सञ्चयस्थाने पश्चिमाभिमुखो मेघवर्णः श्वेताम्बरधरो विकटदंडपाणिः भूतपावनः शूलध्वजो नामाद्यक्षरबीजः कुंभशब्दरवः सर्वेशः आर्द्राजातः चामुंडः 'सर्वेश्वरं जगन्नाथं चामुण्डं सर्वत श्वर' मिति ॥

## बलिरक्षकस्य

होमस्थाने पश्चिमाभिमुखः श्यामवर्णः पीतांबरधरो द्विभुजोदण्डायुधो रथवाहनः सिंहध्वजो नामाद्यक्षरबीजः शंखरवः श्रविष्ठाजः सुमनसापतिः बलिरक्षको 'बलिरक्षकं दण्डं सर्पजं सम' मिति ॥

## चतुर्थावरणादेवेषु गविष्ठस्य

चतुर्थावरणे प्राग्द्वारोत्तरे खड्गसंकाशः पीतवासाः दण्डपाणिः खगध्वजो रथवाहनः सत्यलोचनापतिः श्रवणजो नामाद्यक्षरबीजो नागा(द)रवो गविष्ठो 'गविष्ठं त्रैष्टुभं गुह्यमाकाश' मिति ॥

## हरिण्याः

द्वारदक्षिणे पूर्ववत् हरिणीम् ॥

## तोयस्य

पश्चिमे प्राङ्मुख उत्पलाभः शुकपिंछांबरधरः पाशभृत् गजवाहन स्सिंहध्वजः पकारबीजो वारणजो दर्दुरशब्दः कनकाधिपति स्तोयः 'पवित्रममृतं तोयंगौबर' मिति ॥

## अग्नेः

दक्षिणे च उत्तराभिमुखः पिङ्गलाभो नीलवासाः शक्तिभृत् गजवाहनः कपिध्वजः संख्यापति श्शंखरवो(ना)(र) माद्यक्षरबीजः अनलजोग्निः 'वीतिहोत्रंभुरण्यं शुद्धमग्नि' मिति ॥

## वायोः

उत्तरे दक्षिणाभिमुखः श्यामवर्णः पीतवासाः असिपाणिः गजवाहनो वेणुध्वजो यकारबीज श्चलिकापतिः स्वातीजः शङ्खरवो वायुः 'असुं समीरणं वायुपृषदश्व' मिति ॥

## ऋग्वेदस्य

आग्नेय्यां पश्चिमाभिमुखः स्फटिकाभो रक्ताम्बरधरो द्विभुजः पुष्प-हस्तः षड्ऋतुध्वजवाहनो विद्येशो ऋताद्यक्षरबीजो याम्यज ऋग्वेदः 'ऋचं-मधुं सोमं क्रतु' मिति ॥

## यजुर्वेदस्य

नैऋत्यां प्राङ्मुखः पीतवर्णः श्वेताम्बरधरः कुलिशहस्तो द्विभुजः कांस्यतालरवो अग्निकेतुः बुद्धीशः स्वरवाहनः इडाद्यक्षरबीजः पुनर्वसूजातो यजुर्वेदो 'यजुर्वेदं दधि मिश्रम् इष्टि' मिति ॥

## सामवेदस्य

वायव्यां प्राङ्मुखो रक्ताभः पीतवासाः द्विभुजः सप्तस्वरवाहनध्वजो मूलोद्भवो मतीशो गानरवः सामाद्यक्षरबीजः सामवेदः 'साम घृतं वज्रं यज्ञ' मिति ॥

## अथर्ववेदस्य

ऐशान्यां पश्चिमाभिमुखः अञ्जनाभः श्वेतवस्त्रधरो द्विभुजः कूर्चहस्तः स्त्रुवध्वजो हंसवाहनो हंसरवः कलेशः प्रोष्ठपाज्जातो अथर्वाद्यक्षरबीजः अथर्ववेदः 'अथर्वणं पवित्रं क्षीरं पुण्य' मिति ॥

## शिवस्य

अन्तराळे प्राच्यामुत्तरे शिवं पूर्ववत् ॥

## विष्णोः

तद्दक्षिणे पश्चिमाभिमुख स्सुवर्णः शुकपिञ्छाम्बरः श्रीपतिः खगध्वजवाहन श्चतुर्भुजः शंखचक्रधरः पाञ्चजन्यरवः श्रवणोद्भवः अजाद्यक्षरबीजो विष्णुः 'विष्णुं पुरुषं व्यापिनं रत्नं विश्व' मिति ॥

## काश्यपस्य

दक्षिणे चोत्तराभिमुखः कृष्णवर्णः पुष्पवस्त्रधरो वेणुदण्डधरो द्विभुजः शङ्खरव स्त्रिपदावाहनः कमण्डलु ध्वजो विश्वाद्यक्षरबीजो हस्तजः काश्यपः 'काश्यपं विश्वमूर्तिम् अक्षतं तक्षक' मिति ॥

तत्पश्चिमे चोत्तराभिमुखः पलाशपुष्पाभः षड्भुजः षण्मुखः सर्वाभरणभूषितो बालमौलियुतो देवयानीपति र्नामाद्यक्षरबीजः शंखरवो मयूरध्वजवाहनो गुहो 'जगद्भुवं विश्वभुवं रुद्रभुवं ब्रह्मभुवं भुवद्भुव' मिति ॥

## पङ्क्तीशस्य

पश्चिमे दक्षिणभागे प्राङ्मुखः श्यामवर्णः श्वेतांबरधरो द्विभुजः खङ्गकेटकसंयुक्तः किरीटी भूतध्वजवाहनो नंदितापतिः उत्तरोद्भवो वराद्यक्षरबीजो वंशरवः पङ्क्तीशः'पङ्क्तीशं मित्रं वरदं भूतनायक' मिति ॥

## पवित्रस्य

उत्तरे प्राङ्मुखः अञ्जनाभः श्वेताम्बरधरो नपुंसको वृषभवाहनो गलकाध्वजः उग्ररवः ऊर्म्यायुधः सौम्यजः पराद्यक्षरबीजः पवित्रः 'पवित्रं मंत्रंजप्यं शुद्ध' मिति ॥

## पावनस्य

उत्तरे दक्षिणाभिमुखः पिङ्गाभः श्यामाम्बरधरः अन्यत्सर्वपवित्रवत्, पावनः 'सर्वतीर्थजलं पुण्यं पावनं पुण्यपूजित' मिति ॥

## तक्षकस्य

तत्पूर्वे दक्षिणाभिमुखः श्यामवर्णः हेमाम्बरधरः पञ्चसप्तफणायुक्तो जरापतिः हस्ततालरवः आश्लेषाजोऽजगरध्वजवाहनः तटाद्यक्षरबीज स्तक्षकः 'तक्षकं सर्पराजं क्षितिजं धराधर' मिति ॥

## पञ्चमावरणे कुह्वाः

पञ्चमावरणे पूर्वद्वारोत्तरे पश्चिमाभिमुखा श्यामाभा पुष्पवस्त्रधरा पद्महस्ता द्विभुजा कृष्णकुंचितमूर्धजा शुकस्वररवा खगध्वजवाहना नामाद्यक्षरबीजा कुहूः 'मेदिनीं कुहूं सुदंष्ट्रां क्षमा' मिति ॥

## अनुमत्याः

तद्दक्षिणे पश्चिमाभिमुखा सितश्यामा जपाम्बरधरा पुष्पहस्ता द्विभुजा खड्गध्वजवाहना शुकस्वररवा तताद्यक्षरबीजा अभिजिज्जाता अनुमतिः 'अनुमतिं स्वरूपां तन्वङ्गीं सुभगा' मिति ॥

## सप्तमातॄणाम्

तद्दक्षिणेच उत्तराभिमुखा ब्रह्माणी चतुर्मुखी रुक्मवर्णा रक्तवस्त्रधरा कलशाक्षमालायुता; सरित्प्रिया श्वेतवर्णा कृष्णांबरधरा त्रिणेत्रा शूलपाणिः;

वैशाखिनी रक्तवर्णा श्वेताम्बरधरा षण्मुखी शक्तिपाणिः; वैष्णवी श्यामलाङ्गी पीताम्बरधरा शङ्खचक्रधरा; वाराही कृष्णश्यामनिभा रक्तवस्त्रधरा शस्त्रपाणिः; इन्द्राणी श्यामाभा रक्ताम्बरधरा वज्रपाणिः; काळी श्यामाभा रक्ताम्बरधरा सुदंष्ट्रा शूलपाशकपालिनी च, एना एकप्रासादे समासीना नामाद्यक्षरबीजाः पिशाचध्वजवाहनाः आर्द्रोद्भवा गणध्वनियुताः सप्तमातरः, 'ब्रह्माणीं पिङ्गळां गौरीं सर्वतोमुखीं; सरित्प्रियां विश्वरूपां उग्रांगणेश्वरीं; वैशाखिनीं शिखण्डिनीं गायत्रीं षण्मुखीं; विश्वगर्भां विषोर्मिणीं कृष्णां रोहिणीं; वाराहीं वरदाम् उर्वीं वज्रदंष्ट्रां, जयन्तीं कौशिकीं इन्द्राणीं घनाघनां; काळीं नाळिकादंष्ट्रां विषहां वेदधारिणी' मिति ॥

## जयादीनामष्टानाम्

पश्चिमे प्राङ्मुखा अतिरक्ता शुकपत्रनिभांबरा जया, हाटकाभाशुकपत्रनिभाम्बरा विजया, हरिताङ्गी रक्तवस्त्रधरा विंदा, कनकाभा श्वेतवस्त्रधरा पुष्टिका, धातकी पुष्पसंकाशा झषपत्रनिभाम्बरा नंदका, कुमुदाभा सस्यश्या मनिभाम्बरा कुमुद्वती, उत्पलनिभा नीलांबरधरा उत्पलका, अशोकपत्रनिभा शुकपत्रनिभाम्बरा विशोका च, एताः पद्महस्ताः द्विभुजाः कृष्णकुञ्चितमूर्धजाः वीणा वेणुरवाः शुकध्वजवाहनाः नामाद्यक्षरबीजा धनिष्ठाजा जयाद्याः, 'जयां सुखप्रदां समृद्धिनीं भद्रां, विजयां विशोकां पुण्यां कामानन्दां, विंदांलाभां अप्रमत्तां अजेयां; पुष्टिकां अमोघवतीं पुण्यां प्रमत्तां, नंदकां मधुजननीं सुमुक्तां सुभगां, कुमुद्वतीं सुवहां सुसंभरां निर्वृतिं, उत्पलकां सुगंधिनीं सर्वामोदां सर्वात्मिकां, विशोकां धनराशिं कामानन्दां अक्षताममिता' मिति ॥

## सप्तरोहिणीनाम्

उत्तरे दक्षिणामुखा स्सर्वा मरकतप्रभाः पुष्पांबरधराः पुष्पहस्ताः द्विभुजाः कृष्णकुञ्चितमूर्धजाः मयूरध्वजवाहनाः मृदङ्गशब्दरवाः रोहिणी जाता नामाद्यक्षरबीजा स्सप्तरोहिण्यः 'कुण्ठिनीं नन्दिनीं धरित्रीं रजतप्रियां, ग्रन्थिनीं वेगिनीं प्रजयां प्रबर्हिणीं, कृच्छ्रिणीं शाखिनीं वाहिनीं योक्त्रिणीं कुण्डिनीं जारिणीं छर्दिनीं प्रवाहिनीं विकारिणीं दामिनीं बैसिनीं विद्युतां, दद्रुणीम् इन्दुकरां सौमनसीं प्रविद्युताम्, इन्द्रियविकारिणीं अर्वंतीं गङ्गावाणीं सृजन्ती' मिति ॥

## वत्सरस्य

आग्नेय्यां पद्मपत्रनिभाः पुष्पांबरधराः द्विभुजाः दण्डहस्ताः शशध्वजवाहनाःशङ्खरवाःस्वातीजाता (नित्या) नित्यादि बीजा स्रुगणानामीश्वरा वत्सरान्वसुसुतान्निधीन् धर्मसूनुका निति ॥

## प्राणादीनाम्

नैऋत्यां कनकाभा स्सिताम्बरधराः द्विभुजाः असिधराः प्लवङ्गवाहनाःशङ्खध्वजाः हंसरवाः स्वात्युद्भवा यकारबीजादायिनीश्वराः प्राणादयः 'प्राणमपानमुदानं व्यानं समान' मिति ॥

## मरुताम्

वायव्यां धूमाभाः सिताम्बरधराः द्विभुजाः असिधराः प्लवङ्कवाहनाः शङ्खध्वजाः हंसरवाः उद्दधिनीशाः यकारबीजाः मरुतो 'मरुतोलोकधरान् समसप्तगणान् मरुद्वतीसुता' निति ॥

## शतरुद्रणाम्

ऐशान्यां पश्चिमाभिमुखाः श्वेताभाः व्याघ्रचर्माम्बराः नीलग्रीवा स्त्रिनेत्राः पिङ्गनेत्राः शकारबीजा अन्यत्सर्वं रुद्रवत् 'शतरुद्रान् औषधीशान् त्र्यंबकान् कपालपाणी' निति ॥

## एकादश रुद्राणाम्

तद्दक्षिणे अन्तराले पश्चिमाभिमुखाः श्वेतवर्णा व्याघ्रचर्मंबरधरा नीलग्रीवा स्त्रिणेत्राश्चा अन्यत्सर्वं रुद्रवत्, एकादश रुद्राः 'अजैकपादम् अहिर्बुध्नि पिनाकिनं पराजितं मृगव्याधं शर्वं निर्ऋतिम् ईश्वरं कपालिनं भवं स्थाणु' मिति ॥

## द्वादशादित्यानाम्

तद्दक्षिणे पश्चिमाभिमुखा भास्करवत् द्वादशादित्याः, 'धातारम् अर्यम्णम् अंशुं मित्रं वरुणं भगम् इन्द्रं विवस्वन्तं पूषणं पर्जन्यं त्वष्टारं विष्णु' मिति ॥

## गन्धर्वाणाम्

दक्षिणे च उत्तराभिमुखाः पद्मकिंजल्कसन्निभाः पुष्पवस्त्रधरादंष्ट्रामुखा द्विभुजाः पाशहस्ताः सिह्मनादरवाः गजवाहनकेतुका रम्याद्यक्षरबीजा रक्ता स्सक्ता स्सौम्यजाता गन्धर्वाः 'गंधर्वान् रम्यान् सुरजान् सोमजा' निति ॥

## मुनीनाम्

तत्पाश्चिमे च उत्तराभिमुखाः कनकाभा जटामकुटधराः कुशांबरधराः कुश कृष्णाजिनधराः अनूराधाजा जलघोषरवाः तपोधिपाः तपाद्यक्षरबीजा मुनयो 'मुनीन् तपोधिपान् कृशान् पापविनाशना' निति ॥

## अप्सरसाम्

तत्पाश्चिमे प्राङ्मुखा हेमाभाः पुष्पाम्बरधराः पद्महस्ताः द्विभुजाः कृष्णकुञ्चितमूर्धजाः शुकस्वररवाः हंसध्वजवा नाः अमृताद्यक्षरबीजाह उत्तरजाः अप्सरसः 'अप्सरसः अमृतजाः भोगवहाः स्वरजा' इति ॥

## आश्विनोः

तदुत्तरे प्राङ्मुखौ गोक्षीराभा वशोकपुष्पवस्त्रौ द्विभुजौ मयूरवाहनौ काकपक्षध्वजौ हंसरवौ सुन्दरीशौ अश्वाद्यक्षरबीजौ अश्विनौ 'अश्विनौ य मजौ युग्मौ त्वाष्ट्रीपुत्रा' विति ॥

## वसूनाम्

उत्तरे दक्षिणाभिमुखाः पद्माभाः पुष्पवस्त्रधराः पद्महस्ताः द्विभुजा श्शशध्वजवाहनाः स्वात्युद्भवाः वसुप्रियाणामीशाः वकारबीजाः शङ्खरवाः वसवो 'धरं ध्रुवं सोमम् अपोनलं अनिलं प्रत्यूषं प्रभास' मिति ॥

## विद्याधराणाम्

तत्पूर्वे दक्षिणाभिमुखाः श्यामाभा रक्तवस्त्रधरा दंष्ट्रामुखा रक्तकेशा गदाधरा द्विभुजा डमरुकधरा महिषध्वजवाहना मेघरवा विद्याधरीणामीशा मंत्रादिबीजा विद्याधरा 'विद्याधरान् मंत्रजलान् पुष्पजान् भोगजा' निति ॥

## षष्ठावरणे तुम्बुरोः

षष्ठावरणे पूर्वद्वारोत्तरे रक्ताभः श्वेतांबरधरो जटाधरो द्विभुजो वीणाहस्तो गानरवः संगीतापतिः वायुवाहनः स्त्रवध्वजः अभिजिज्ज्ञतो नामाद्यरबीज स्तुंबुरुः 'तुंबुरुं मुनिवरं स्वरेशं वेदरूपिण' मिति ॥

## नारदस्य

दक्षिणे पश्चिमाभिमुखः श्वेताभो रक्तांबरधरो द्विभुजो वीणाहस्तः ताळरवः स्वरेशो वायुवाहनः कूर्श्चध्वजोऽभिजिज्जातो नामाद्यक्षरबीजो नारदो 'नारदंमुनिवरं गानरूपं ब्रह्मसंभव' मिति ॥

## ऋतूनाम्

दक्षिणे च उत्तराभिमुखाः अब्जाभाः श्वेतवस्त्रधराः पुष्पहस्ताः द्विभुजाः पुष्परथवाहनाः विद्युत्ध्वजाः मेघरवाः श्वेतकृष्णापतयः मूलोद्भवाः गकारबीजाः षड्डतवः 'ऋतून् भराशीन् गन्धर्वान् तीर्था' निति ॥

## प्रजापतेः

पश्चिमे प्राङ्मुखः श्वेताभः एकवस्त्रः एषविशेषः अन्यत्सर्वं विरिञ्चिवत् प्रजापतिः 'प्रजापतिं स्त्रष्टारं वेदमयं ब्रह्मरूपिण' मिति ॥

## मुद्गलस्य

उत्तरे दक्षिणाभिमुखः श्वेताभो रक्तांबरधरो जटाधरः कूर्मवाहनः कुशाध्वजो वेदरवः सुरगणेशा नामाद्यक्षरबीजः श्रवणजो मुद्गलो 'मुद्गलं मुनिवरं शुद्धं सर्वज्ञ' मिति ॥

## हलेशस्य

आग्नेय्यां श्वेताभो नीलांबरधरो द्विभुजो हलधरः पद्मवाहनः पद्मकेतुः नामाद्यक्षरबीजो यामापतिर्मैत्रजो हंसरवो हलेशो 'हलेशं महाबलं मायांगं वरदायिन' मिति ॥

## जाम्बवस्य

नैऋत्यां श्यामाभो रक्तांबरधरो बालमौळिसमायुक्तः छन्नवीरसमायुक्तो

बालापति र्मृगध्वजवाहनो जकारबीजो रेवतीजो मृदंगरवो जांबवो 'जांबवं बालरूपं दर्शनीयंसुंदर' मिति ॥

## असुरस्य

ऐशान्यां श्यामाभो रक्तांबरधरो द्विभुजः शूलधरो रक्तकेशो दंष्ट्रामुखो नीलापतिः खरध्वजवाहनो घोरमूलः अमृताद्यक्षरबीजोऽसुरः 'असुरं दैतेयं घोररूपं भयानक' मिति ॥

## अन्तराके किन्नरमिथुनस्य

अन्तराळे प्राच्यां पश्चिमाभिमुखं पक्षिपादं पुंस्त्रीरूपोर्ध्वकायं पक्षयुतं वीणातालहस्तं नामाद्यक्षरबीजं वायुवाहनं नाळध्वजं स्वररवहस्तजं किन्नर मिथुनं 'किन्नरमिथुनं तीर्थं संगीत पक्षिरूपिण' मिति ॥

## प्रह्लादस्य

तद्दक्षिणे पश्चिमाभिमुखो रक्ताभ स्सितांबरधरो जटाधरः पुष्पहस्तो द्विभुजः प्राणेशोऽश्वध्वजवाहनो रोहिणीजः शंखरवः प्रणावाद्यक्षरबीजः प्रह्लादः 'प्रह्लादं प्रजननं विष्णुभक्तं गदाधर' मिति ॥

## मदनस्य

तद्दक्षिणे च उत्तराभिमुखः श्यामाभो रुग्मांबरधरो द्विभुजः इक्षुचाप पुष्पशरो रतिपतिः मकरध्वजवाहनः पुनर्वसुजातः स्वररवो मकारबीजो मदनो 'मदनंकामं सुंदरंदिव्यरूप' मिति ॥

## विपायाः

तत्पश्चिमे च उत्तरामुखा पाटलिपुष्पनिभा रक्तवस्त्रधरा पुष्पहस्ता द्विभुजा कृष्णकुंचितमूर्धजा ललाटोपरि पुष्पचूडासमन्विता हंसध्वजवाहना शुकस्वररवा विद्यादिबीजा विपा 'विपां विद्युद्रूपां विशालांगीं मेधा' मिति ॥

## व्याजिन्याः

पश्चिमे प्राङ्मुखा हेमाभा श्यामांबरधरा द्विभुजा पुष्पहस्ता कृष्णकुंचितमूर्धजा वीणावेणुरवा शुकध्वजवाहना चित्राजाता नामाद्य-क्षरबीजा व्याजिनी 'व्याजिनीं सुभगां सुन्दरीं विशुद्धा' मिति ॥

### कामिन्याः

तदुत्तरे रक्ताभा श्वेतांबरधरा च अन्यत्सर्वं व्याजिनीवत् कामिनी 'कामिनीं कान्तां शुभांगीं विमला' मिति ॥

### चन्द्राभाः

उत्तरे दक्षिणामुखा श्वेताभा कृष्णांबरधरा पुष्पहस्ता द्विभुजा ललाटोपरिपुष्पचूडासमन्विता खगध्वजवाहना हंसरवा हस्तजा नामाद्यक्षरबीजा चंद्राभा 'चंद्राभां तन्वंगीं श्वेतरूपां दृढव्रता' मिति ॥

### सुन्दरस्य

तत्पूर्वे दक्षिणाभिमुखः श्यामाभो रक्तांबरधरो द्विभुजः पद्महस्तः सर्वाभरणभूषितो गजवाहनः खगध्वजः सुनन्दापति नामाद्यक्षरबीजः शतभिषग्जात स्सुंन्दरः 'सुन्दरं सुरप्रियं शुभानन्दं सौम्य' मिति ॥

### सप्तमावरण

पूर्वोक्तान्तारालें स्वधासंह्लादिनोर्मध्ये मायामयूरध्वजवाहिनी मयूरस्वररवा सौम्यजाता नामाद्यक्षरबीजा "मायां मातङ्गीं वराहीं वरानना" मित्यथवा संह्लादिनीवन्नामान्यनुक्तं सर्वं संह्लादिनीवन्मायासंह्लादिन्योरभेद इति वदन्ति ।

### ब्रह्मादिपददेवतानां स्थानम्

सप्तमावरणे पूर्वद्वारे ब्रह्माणं, तद्दक्षिणेऽर्यम्णं पश्चिमाभिमुखौ दक्षिणे दण्डधरमुत्तराभिमुखं, पश्चिमे पाशभृतंप्राङ्मुखम्; उत्तरे धनदं दक्षिणाभि-मुखम्; आग्नेय्यां सवितारं; सावित्रंनैऋत्याम्; इद्रं इंद्राजं वायव्यां; रुद्रंरुद्राजं ऐशान्याम्, आप आपवत्सं च अर्चयेत् ॥

अन्तराले प्राच्यामुत्तरपार्श्वेचईशं पर्जन्यं जयन्तं माहेन्द्रं नागं भूतं यक्षं च; तद्दक्षिणे पार्श्वे च आदित्यं सत्यकं भृश मन्तरिक्ष दुर्गां घोटमुखीं धत्रीं वपुषं च; दक्षिणे पूर्वभागे अग्निं वितथं गृहक्षतं राक्षसं जयं कृष्णं च; तत्पश्चिमभागे यमं गन्धर्वं भृङ्गराजं सुरुण्डं शिवं प्राणं च; पश्चिमे दक्षिणभागे निर्ऋतिं दौवारिकं पुष्पदन्तं कविं चक्रं पुरुहूतं च; तदुत्तरभागे

सरित्पतिमसुरं शोषणं रोगं विद्यां यशसं भद्रां च; उत्तरपश्चिमभागे जवनं नागं मुख्यं भल्लाटं वेदभृतं तापसं संधुषं च; तत्पूर्वभागे सोमम् अर्गलम् अदितिं सूरिदेवं विद्याम् अमितं पांचभौतिकम् एतान् देवान् एकमूर्त्या अर्चयेत् ॥

प्राकारबाह्ये महत्पीठं कृत्वा अत्रानुक्तदेवान् सर्वान् 'देवा' निति समर्च येत् । एषां उक्तानिवर्णवाहनादीनि ज्ञात्वा अर्चयेत् । अनुक्तास्सर्वेप्याकाशवर्णाः श्वेतांबरधराः पुष्पहस्ताः द्विभुजाः खगध्व-जवाहनाः शंखरवाः तत्तन्नाम्ना (मानः) प्रियायुक्ता नामाद्यक्षरबीजा अभिजिज्ज्ञाताश्च एवंज्ञात्वाऽर्चयेत् । एवमेवंप्रकारेण परिवारैर्युक्तं उत्तमोत्तमं सर्वसंपत्करं चक्षुर्मनसोः प्रीतिकरं देवप्रियकरं च, भवेत् । तस्मात्सर्वप्रयत्नेन एतैः प्रकारैः परिवारैर्युक्त मालयार्चन माचरेत् ॥

सर्वप्राकाराणामभावे प्रथमावरणे तत्तत्प्राकाराश्रित देवानर्चयेत् । परिवाराणामभावेपि द्वितीयावरणादिष्वावरणे तत्तत्सूत्रे तत्तदावरणस्थान् देवानं संयोज्याऽर्चयेदिति केचित् । अथवा विभवानुसारेण नवविधपरि-वारोक्तमार्गेणपरिवारार्चन माचरेदित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते महाशास्त्रे विमानार्चनाकल्पे देवदेव्यादीना मप्यालयांतर्गतानां वर्णवाहन केतुध्वजरवर्क्ष प्रियाऽयुधा-दिवर्णनं नाम विंशः पटलः ॥२०॥

# अथैकविंशः पटलः

अथ प्रादुर्भावाऽऽविर्भावानां वर्णवाहनादि व्याख्यास्यामः- मत्स्य कूर्म वराह नारसिंह्म वामन रामरामराम कृष्ण कल्किन इति दशप्रादुर्भावान् प्रथमावरणे, द्वितीये वा, पृथक् पृथक् भित्ति पार्श्वे, प्रसादाभिमुखं चित्रं चित्रार्धं, माभासं वा, संकल्प्याऽभिमुखे तत्तत्कौतुकं च संन्यस्याऽर्चयेत् ॥

## मत्स्यस्य चतुर्नामादि

पूर्वद्वारोत्तरे मत्स्यरूपं श्वेताभं रक्तास्यं रक्तनेत्रं कृष्णपक्षयुतं संकल्प्य अभिमुखे कौतुकं चतुर्भुजं संन्यस्य 'मत्स्य प्रळयसंहारं स्त्रष्टारं वेदमय' मिति ॥

तद्दक्षिणे कूर्मरूपं श्वेताभं पञ्चवर्णयुतं संकल्प्याऽभिमुखे कौतुकं चतुर्भुजं सन्यस्य 'कूर्मरूपं सुधाकारं महाशक्तिं महाबल' मिति ॥ मत्स्यकूर्मयोर्वाहन केत्वादीन् आदिमूर्त्तेरिव समाचरेत् ॥

## वराहस्य

दक्षिणे वराहं पूर्ववत्संकल्पयाभिमुखे कौतुकं चतुर्भुजं विष्णुरूपं समर्चयेत् ॥

## नृसिंहस्य

पश्चिमे नृसिंहः प्राङ्मुखः सिंहासनोपरि द्वौपादौ व्यत्यस्य उत्कुटिकमासीनो बद्धयोगपट्टिक श्चतुर्भुजः शङ्खचक्रधरो जानूपरि प्रसारितहस्तः भवेदेषविशेषः अन्यत्सर्वं पूर्ववत् कौतुकं तद्रूपं, चतुर्भुजं विष्णुरूपंवा, संकल्प्याऽर्चयेत् ॥

## वामनस्य

उत्तरे वामनं पूर्ववत् संकल्प्य कौतुकं चतुर्भुजमेव कृत्वार्चयेत् ॥

## परशुरामस्य

आग्नेयां परशुरामः पश्चिमाभिमुखः उत्तराभिमुखो वा रक्ताभः श्वेतांबरधरो दक्षिणकरेण परशुधरः उद्देश्यवामकरो जटामकुटयुतः सोपवीतः कमलेशः, अन्यत्सर्व मादिमूर्तिरिव 'राममृषिसुतं विष्णुं परशुपाणि' मिति ॥

## तद्देव्याः कमलायाः

तद्दक्षिणे कमलांसीतावत्कारयेत् ॥

## राघवस्य

नैर्ऋत्यां राघव उत्तराभिमुखः, प्राङ्मुखो वा, श्यामाभो रक्तांबरधरो मकुटादि सर्वाभरणयुक्तः श्रीवत्सवक्षाः द्विभुजो दक्षिणकरेण शरधरो वामकरेण धनुरालंब्य त्रिभङ्ग्यास्थितो माघमासे पुनर्वसुजातः सीतानाथोऽन्यत्सर्वं आदिमूर्त्तेरिव 'रामं दाशरथिं वीरं काकुत्स्थ' मिति ॥

## सीतायाः

तद्दक्षिणे सीता हेमाभा शुक्लांबरधरा धृतपद्मवामहस्ता प्रसारित दक्षिणकरा सुस्थितदक्षिणपादा आकुञ्चितपादा उद्बद्धकुन्तळा करंडकाम-कुटियुतावा नामाद्यक्षरबीजा अन्यत्सर्वं श्रीवत्, 'सीतामयोनिजां लक्ष्मीं वैदेही' मिति ॥

## सौमित्रेः

वामे सौमित्रिः कनकाभः श्यामांबरधरो द्विभुजो रामवत् त्रिभङ्गस्थित श्चापधर उद्बद्धकुंतळो वैशाखे रेहिणीजातो लक्षाद्यक्षरबीजोऽन्यत्सर्वं रामवत्, 'रामानुजं सौमित्रिं लक्ष्मणं लक्ष्मीवर्धन' मिति ॥

## भरतस्य

दक्षिणभागे भरतः श्यामाभो रक्तांबरधर उद्बद्धकुंतलः शरचापौ, खड्गखेटकौवा, दधानो द्विभुजः त्रिभङ्गस्थ श्चैत्रे स्वात्युद्भवोऽमलेशो भगाद्यक्षरबीजो श्रीवत्स कौस्तुभौ विना अन्यत्सर्वं रामवत् 'भरतं कैकेयं रामानुजं धर्मचारिण' मिति ॥

## शत्रुघ्नस्य

वामे शत्रुघ्नो हेमाभो रक्तांबरधरः उद्बद्धकुंतळो ज्येष्ठमासे धनिष्ठा जातो नामाद्यक्षरबीजो निर्मलेशः अन्यत्सर्वं लक्ष्मणवत्, 'रामप्रियं शत्रुघ्नं विजयं भरतानुज' मिति ॥

दक्षिणे पुरतोऽञ्जनाभः श्वेतवस्त्रधरः कपिरूपः सर्वाभरणभूषितः द्विभुजः दक्षिणहस्तेनाऽऽस्यंपिधाय वामहस्तेन वस्त्रंपिधाय अवनत-गात्रस्थितो वार्ताविज्ञापनपरो मृगवाहनो दण्डध्वजो महानादरवः श्रवणे मासि श्रवणजातः कल्पाद्यक्षरबीजो हनुमान् 'कपिराजं हनुमन्तं शब्दराशिं महामति' मिति ॥

## शरस्य

दक्षिणे शरं नपुंसकं श्यामाभं श्वेतांबरधरं त्रिणे(ने) त्रं रौद्रं समुद्र-

घोषरवं वायुवाहनं पक्षध्वजं शिरसिशरं माघमासे वारुणेजातं शराद्य-क्षरबीजं शरं 'शरं महारवं अमोघं तीक्ष्णधार' मिति ॥

## शार्ङ्गस्य

वामे शार्ङ्गं पूर्ववत् ॥

## सुग्रीवस्य

दक्षिणे सुग्रीवः श्वेताभो रक्तांबरधरो रक्तवसनो द्विभुजः प्रांजलिः पादावनतयुक्तो मृगध्वजवाहनो वैशाखे आश्लेषाजो मेघनादरवः सुराद्यक्षर-बीजः तारेशः 'सुग्रीवं सुन्दरं महाबल मर्कसूनु' मिति ॥

## विभीषणस्य

वामे कृष्णवर्णो रक्तांबरधरो रक्तकेश स्सुदंष्ट्रो द्विभुजः शूलधरो हृदये अञ्जलिसंयुक्तो मूलजो मेघध्वजवाहनो मेघनादरवो विशुद्धेशो विद्यद्य क्षरबीजो विभीषणो 'विभीषणं राक्षसाधिपं सुमनस्कंरामप्रिय' मिति ॥

## अङ्गदस्य

अभिमुखे श्वेताभोरक्तांबरधरो रक्तवदनो द्विभुजः प्रांजलिः पादा-वनतस्थितः सिंहध्वजवाहनः सिंहरवो वौशाखे रोहिणीजोऽङ्गदः 'अङ्गदं वालिपुत्रं रामप्रियं देवभक्त' मित्यर्चयेत् ॥

## बलभद्रस्य

वायव्ये बलभद्ररामः श्वेताभः नीलवस्त्रधरो द्विभुजोदक्षिणहस्ते-नाऽवलम्बितमुसलो वामेनहलधरः त्रिभंगस्थित उद्बद्धकुंतलः अन्यत्सर्वम् आदिमूर्त्तेरिव 'रामं यदुवरं, विष्णुं, हलायुध' मिति ॥

## कृष्णस्य

ऐशान्यां कृष्णः पश्चिमाभिमुखो, दक्षिणाभिमुखो वा, श्यामाभो रक्तांबरधर स्सर्वाभरणभूषितः सौन्दर्ययुक्तः कुन्तलयुक्तः बर्हिबन्धयुतः त्रिनतो द्विभुजो दक्षिणहस्तेन क्रीडायष्टिधरो वामकूर्प्परेण सत्यभामा-ङ्गरूढंवाऽऽलंब्य सुस्थितः क्रीडारससमाविष्टो रुक्मिणीसत्यभामयोरीशः

श्रावणे मासि रोहिणीजातोऽन्यत्सर्वम् आदिमूर्त्तेरिव 'कृष्णं, पुण्यनारायणं, वटपत्रशायिनं, त्रिदशाधिप' मिति ॥

## रुक्मिण्याः

दक्षिणेरुग्माभा शुल्कांम्बरधरा धम्मिल्लकुन्तला, उद्बद्धकुन्त लावा, नामाद्यक्षरबीजा अन्यत्सर्वंश्रीरिव रुक्मिणी 'रुक्मिणीं, सुन्दरीं, प्रकृतिं (पवित्रीं) कृष्णवल्लभा' मिति ॥

## सत्यभामायाः

वामे सत्यभामा धम्मिल्लकुन्तला उद्बद्धकुन्तला वा, नामाद्यक्षरबीजा अन्यत्सर्वं महीवत् सत्यभामा 'सत्यभामां, सतीं, सन्नतीं, क्षमा' मिति ॥

## गोपीनाथस्य

दक्षिणे रक्ताभः श्वेतांबरधरो वंशहस्तो माघमासि वारुणे जातो हयध्वजवाहनो हंसरवो गोपीनाथो गवाद्यक्षरबीजो गोपालो 'गोपालं, सर्वनाथं, कृष्णं, सर्वाध्यक्ष' मिति ॥

## श्रीदाम्नः

वामे श्रीदामा श्यामाभः श्वेतांबरधरः द्विभुजः अंजलिसंयुक्तः प्रोष्टपदेपूर्वाषाढाजो नामाद्यक्षरबीजः अश्वध्वजवाहनो वेणुरवो गोपीनाथः 'श्रीदामानं, पुण्यरूपं, पुण्यात्मकं, देवसख' मिति ॥

## सुन्दरस्य

प्रमुखे गरुडांश स्सुन्दरो विहगाद्यक्षरबीजोऽन्यत्सर्वं गरुडवत् 'सुन्दरं, विहंगं, पतङ्गं, तार्क्ष्य' मिति समर्चयेत् ॥

## कल्किनः

पश्चिमे चोत्तरभागे कर्की हयाननः अन्यत्सर्वमादिमूर्त्तेरिव समाचरेत् ॥

## कौतुकस्य

अभिमुखे कौतुकं चतुर्भुजं संस्थाप्यार्चयेत् ॥

### प्रादुर्भावानां अनुकल्पम्

प्रादुर्भावानां प्राकाराभ्यन्तरे विस्तीर्णे मनोरमेदेशे विमानं, मण्डपं, कूटं वा, कृत्वा ध्रुवबेरं चित्रं, चित्रार्धं, चित्राभासं वा, तदभिमुखे कौतुकं संस्थाप्य अभावे पीठं वा संकल्प्य अर्चयेत्। अथवा प्रासादपार्श्वेऽळीन्द्रं कृत्वा प्रासादभित्त्याश्रितान् बहिर्मुखान् संस्थाप्याऽर्चयेत् । अशक्तश्चे त्प्रकारपार्श्वे अभिमुखे दक्षिणोत्तरयोः प्राकाराभ्यंतरे मुखमण्डपे अंतराले वा दक्षिणे दाशरथिं वामे कृष्णं सकलं कौतुकमेव कृत्वा संस्थांप्याऽर्चयेदि तिके चित् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे प्रादुर्भा वविधिर्नाम एकविंशः पटलः ॥२१॥

## अथ द्वाविंशः पटलः

### कौतुकद्रव्याणि

अथकौतुकादीनांलक्षणं वक्ष्ये - दारुशिलाताम्ररजत हेमरत्नानि कौतुकद्रव्याणि ॥

### तेषु गुणाधिक्यम्

दारवाच्छतगुणंशैलं, शैलात्ताम्रं सहस्रगुणं, ताम्राद्रजतमयुतगुणं, रजताद्धेममर्बुदगुणं, रुग्मजं सर्वसाधनं, रत्नजमनन्तफलंभवति ॥

### फलविशेषकामनया द्रव्यविशेषः

पुत्रार्थीदारवं, आयुष्कामःशैलं, समृद्धिकामस्ताम्रजं, श्री कामोराजतं, ऐहिकामुष्मिककामस्सौवर्णं, सद्यःसायुज्यकामोरत्नजं कारयेत् ॥

### रत्नजस्य रूपमात्रम्

रत्नजं रूपमात्रमेव ॥

### उत्सवबलिबेरयोर्द्रव्य निषेधः

शिलयादारुणाचोत्सवं बलिबेरं च नकारयेत् ॥

## कौतुकोत्सवयोः स्थिति विशेषः

ध्रुवेस्थिते स्थितम् आसीने चासीनं, स्थितं वा, शयने कौतुकमासीनं स्थितं वा, ध्रुवे स्थितेप्यासीनं कौतुकमौत्सवं चेति केचित्। यानके यानकं, स्नापनं सर्वत्र स्थितमेव कुर्यात् ॥

## कौतुकस्य रूपविशेषः

प्रादुर्भावानां कौतुकं तत्तद्रूपं, विष्णुं चतुर्भुजं वा, मत्स्य कूर्म वराह वामनानां तत्तद्रूपं नैव कुर्यात् ॥

## देवदेवीप्रभा पीठानां द्रव्यैक्यम्

येन द्रव्येण देवो निर्मितस्तेन द्रव्येण देव्यौ, प्रभां, पीठं च कारयेत्। अन्यथा महत्तरो दोषो भवेत् ॥

## कौतुकोत्सवयोर्देवीयोगे फलविशेषः

ध्रुवे देवीवियुक्तेपि कौतुकं देवीयुक्तं सर्वसमृद्धिद कौतुकेदेवीवियुक्तेप्यौत्सवं देवीसहितमुत्तममित्यन्ये वदन्ति ॥

ध्रुवबेरस्योत्सेधं त्रिधाकृत्वा एकांशमुत्तमम्, द्विभागं त्रिधाकृत्वा एकांशं मध्यमम्, तद्द्विभागं त्रिधाकृत्वा एकांशमधमम्, ध्रुवबेरंदशांशं कृत्वा एकांशंतालं, तत्तालं द्वादशभागंकृत्वा एकांशमङ्गुलं तदङ्गुलेनैकादशाऽङ्गुलं समारभ्य त्र्यङ्गुलाधिक षष्ट्यङ्गुलान्तं द्व्यङ्गुलवृध्या सप्तविंशतितुङ्गानि कौतुकादीनि, तद्विमाननिर्देशहस्ताङ्गुलेन सप्ताङ्गुलं समारभ्य त्रयोविंशत्यङ्गुलान्तं तद्व्यङ्गुलवृद्या नवधा भवति, एतेष्विष्टमानं विनिश्चित्य एकद्वित्रिचतुर्यवहीनाधिक्यं समंतान्नयेत् तन्नदोषायभवति । तस्मात् कौतुकस्नपनोत्सव बलिबेराणि तत्तद्यो(गे) ग्येनैव कारयेत् ॥

## आयव्ययनक्षत्रयोनिवारांशानयनम्

पश्चादायव्यय नक्षत्रयोनिवारांऽशकैष्षड्भिः शुभाशुभं परीक्षेत। तदुस्सेधं त्रिगुणीकृत्य वसुभिर्हरेत्, तच्छेषमायम्, उत्सेधं चतुर्गुणीकृत्य पञ्चभिर्हरेत्, तच्छेषंव्ययम्, उत्सेधे वसुभिर्गुणिते सप्तविंशतिभाजिते शिष्टं च नक्षत्रम्, तुरगाद्यं यजमानानुकूलर्क्षमाहरेत्, उत्सेधं त्रिगुणीकृत्य वसुभिर्हरेत्, ध्वज धूम सिंहश्श्ववृष गर्दभगजवायसा एतेष्टयोनयः

पूर्वःशुभोऽपरोऽशुभः उत्सेधे नवगुणिते मुनिभिर्हृते शिष्टंवारम्, उत्सेधे चतुर्भिर्गुणिते नवभिर्हृते शिष्टमंशकम्, तस्करभुक्तिशक्तिवित्ताऽवनी-पालक्लीब निर्भीतिदरिद्रप्रेष्या नवांऽशकाः ॥

एषां शुभांशकंचेत् शुभावहंभवति । एतैस्सर्वैः शुभंचेत् शुभावहं भवति । तस्माच्छुभाधिकमशुभहीनं बेरमाहरेत् ॥

## आयादीनां फलम्

बेरस्योद्देशमानेनहीने तद्ग्रामयजमानयो राशुविनाशाय भवति, निर्देशमाने विहीने राजराष्ट्रविनाशायभवति, बेरमायविहीनं व्ययाधिकं यजमानस्याऽर्थहानिं, राज्ञः शत्रुवृद्धिं च, कुर्यात् । आयाधिकं व्ययक्षीणंसर्व-संपत्करं भवति । नक्षत्रं यजमान नक्षत्रादि बेर नक्षत्रान्तं बेर नक्षत्रादियजमान नक्षत्रान्तं वा गणयेत् तृतीय पञ्चमसप्तमानि हित्वा अन्यानिशुभानि भवन्ति । ध्वजः कीर्तिं दीप्तिं वृद्धिं, धूमोऽर्थनाशं, सिंहः शत्रुजयं, श्वाव्याधिं, वृषोऽर्थलाभं, गर्दभोबन्धुवियोगं, गजस्सर्वसिद्धिं, वायसोऽपत्यहानिं कुर्यात् । वारेषु आदित्यांगारक शनैश्चरान् हित्वा अन्ये शुभा भवन्ति । अशुभाश्च योगबलयुक्ताश्चे न्मुख्या भवन्ति । अंशकेषु तस्करं षण्डं दरिद्रं प्रेष्यं च त्यक्त्वान्येशुभावहा भवन्ति ॥

## मानाधिकन्यूने फलम्

षण्मानसहितं मुख्यं, मानहीनंधनधान्यनाशनं, मानाधिकं रोगवर्धनं, प्रमाणाधिकं हीनं चदृष्टाऽदृष्टफल विनाशनम्, उन्मानविहीनम् अधिकं वा पुत्र विनाशनं, परिमाणविहीनम्, अधिकं वा भार्याविनाशनं, लंबमानविहीन मधिकं वा, ग्रामविनाशनम्, उपमानविहीनम् अधिकं वा नृपनाशनं स्यात् ॥

## तेजआदीनांहीने फलम्

तेजो हीनं चक्षुः प्रीतिहानिं, कृशाऽङ्गस्थूलाऽङ्गः, तिर्यग्गतम्, ऊर्ध्वाननं, कुञ्चितंच राजग्रामविनाशनंस्यात् । किरीटाद्याभरणेषु लक्षणहीनेषु धनधान्यविनाशः, अम्बरे विरुद्धे लक्षणहीने च दारिद्र्यं; शङ्खचक्राद्यायुधेषु लक्षणहीनेषु चोरशत्रुवृद्धिः; पीठे लक्षणहीने स्थान नाशो, धनक्षयश्च; प्रभामण्डले लक्षणहीने कीर्तिदीप्तिविनाशश्च भवति ॥

## ध्रुवबेरपीठम्

ध्रुवबेरस्य पीठोत्सेधं द्वारोत्सेधस्याऽष्टांशैकांशं, षड्भागैकांशं वा, भुवंगोत्सेधसमम्, अध्यर्धं, द्विगुणं वा, समवृत्तं, पद्माकारं, चतुरश्रं, त्रिमेखलं वा कारयेत्। अथवा कौतुकपीठात्पश्चिमभागं पीठोत्सेधमानेन समस्थलं कृत्वा देवीभ्यां सह देवं संस्थापयेत् ॥

## कौतुकादीनां पीठलक्षणम्

कौतुकादीनां पीठं तत्तद्रव्येण बेरायामस्य त्रिचतुः पञ्चषट्सत्पाऽष्टनवभागैकभागं तस्योर्ध्वपद्मोच्चं, तृतीय भागैकभागं (भिन्नमभिन्नं) वा तस्यार्धंशोनमूर्ध्वदलोत्सेधं, तस्यविस्तारम्, अधः पद्मविस्तारात् पञ्चभागोनं, तत्पीठोत्तुङ्गाध्यर्धं, पादोनद्विगुणं, द्विगुणं वा, पीठविस्तारं; जगत्यांबाह्यतत्तद्दशोनम्, ऊर्ध्वपट्टिकायां तदष्टादशोनम्, अधःपद्माग्रदलाग्रविस्तारम् अथवा बेरोदयंषडंशं कृत्वा तद्विभागं, पञ्चभागद्विभागंवा, पीठविस्तारंकारयेत् । पीठोत्सेधंद्वादशभागं कृत्वा एकांशं पादुकं सार्धत्र्यंशाजगती द्व्यर्धांशंकुमुदम्, अर्धंशंकपं द्व्यर्धांशंकपंद्व्यर्धांशंकंठं अर्धांशंकपं सार्धांशामहापट्टिका चैवं पीठं कारयेत् ॥

उपपीठोत्सेधं द्वादशभागं कृत्वा एकांशंपादुकं, द्व्यंशंपद्मं, एकांशंकंपं, त्र्यंशंकंठं, एकांशंकंपं, द्व्यंर्धांशां महापट्टिकां कृत्वा संयोजयेत् ॥ आसनपीठोत्तुंगं बेरोत्तुंगं त्रिधाकृत्वा एकांशं, तदष्टांशाधिकं, तदष्टांशोनं वा, विस्तारं, द्विगुणंदैर्घ्यं त्रिगुणं वा, अन्यत्सर्वं पूर्ववत्। एवमासनपीठं कल्पयेत्। पार्श्वयोरुभयोः शंकूसुषिरं वा कारयेत् ।

## प्रभामण्डललक्षणम्

प्रभामंडलमेकं द्वित्रिचतुष्पञ्चयष्टिकं, प्रत्येकं, देहलब्धाङ्गुलेन चतुस्त्रिद्व्येकांगुलविस्तारं, तत्प्रभाविस्तारं, चतुरष्टद्वादशषोडशांगुलं, रश्मिमालासहितं कारयेत् । रश्मींस्त्रिनतान् सर्वत्रसमां दक्षिणेदक्षिणावर्त्तान्-वामेवामावर्त्तांश्चयुक्त्या तक्ष्णातु कारयेत्। मौलिशिखामणेरूर्ध्वं चतुरंगुलं पार्श्वयो श्शंखचक्र योरन्तरंभागं हित्वा शंकोस्सुषिरयोर्वा प्रभामंडलं संयोजयेत् ॥

## मधुच्छिष्ट क्रिया संस्कारः

अथ बेरार्थंमधूच्छिष्टक्रियांवक्ष्ये-शुक्लपक्षे कर्त्तुरनुकूलर्क्षे कारयेत् तद्दिनात्पूर्वमङ्कुरानर्पयित्वा आलयाभिमुखे यजमानगृहे वा प्रपां कृत्वा अलंकृत्य तन्मध्ये गोचर्म मात्रमुपलिप्य पञ्चवर्णैरलङ्कृत्य तस्मि न्नौपासनाग्निकुण्डं कृत्वा आघारं हुत्वा वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीभूमिदेवत्यं, पाञ्चभौतिकं, वैघ्नंस्विष्टाकारंच हुत्वा; पश्चाच्छिल्पिनमाहूय अङ्कणेगोमयेनोपलिप्य तन्मध्ये त्रिपदीं चुल्लीं वा, सन्यस्य अग्निंनिधाय शुद्धे पात्रे मधूच्छिष्टं प्रक्षिप्य चुल्यामारोप्य प्राङ्मुखेनशिल्पिना समेनाग्निनापाचयित्वा नववस्त्रेणोत्पूय तत्सिक्थमादाय प्रोक्ष्याचार्यः प्राङ्मुखो भूत्वा 'इदं विष्णु' रिति मन्त्रेणाऽभिमृश्य उत्तमाङ्गं कृत्वा देव्यादीनां तत्तन्मन्त्रेणाऽभिमर्शनादि कारयेत् ।

पुण्याहं वाचयित्वा यजमान आचार्यादिभ्यो दक्षिणां दद्यात् । पश्चाच्छिल्पिनमाहूय संपूज्य तेनसिक्थेन बिम्बं सलक्षणं कृत्वा तद्ब-हिर्मृत्तिकांशनैरालिप्य संशोष्य तद्बहिरयः पट्टैर्बन्धयित्वा पुनःशुभेदिने पूर्वव (द्धोमंहु) द्धुत्वा तद्बिम्बगर्भंप्रताप्य मधूच्छिष्टं संस्राव्य पुनस्तद्बिम्बगर्भं प्रताप्य संतप्तलोहेनशिल्पिभिस्तज्ज्ञैर्बिम्बगर्भमत्वरेण पूरयेत् । प्रभाते स्नात्वा आचार्यो यजमानश्च शिल्पिना शनैश्शनैः मृद्भेदंकारयित्वा विम्बशुद्धिं च कारयेत् । तत्बिम्ब स्रावित मपूर्णं खण्डितं स्फुटितं यदि भवेत् तद्बेरं लोहवत् स्मृत्वा पूर्ववद्धोमं हुत्वा बिम्बमाहरेत् ॥

## अङ्गुलसंज्ञा

अथ विमानबेरादि मानविभागार्थमंगुलानां संज्ञां वक्ष्ये - मानांगुलं, मात्रांगुलं देहलब्धांगुल मिति त्रिविधं भवति । दिने आदित्यरश्मौ जालकान्तः प्रविष्टे तद्गोचरा अत्यंतक्षुण्णा लवाअणवःप्रोक्ताः, त एव परमाणवः, परमाणुभिरष्टाभिरधरेणुः, अधरेण्वष्टगुणितं रोमाग्रं, रोमाग्राऽष्टगुणिता-लिख्या, लिख्याऽष्टगुणितं यूकं, यूकाऽष्टगुणितं यवं, यवाष्टगुणितंमानाऽगुलम् मानांगुलमुत्तमं, तदष्टांऽशोनं मध्यमं, तत्तुरीयांशमधमम् । मध्यमपुरुषस्य-दक्षिणहस्तस्यमध्यमांगुलेर्मध्यमपर्वणोविस्तारायामं वा मात्रांगुलं, बेरोत्सेधं तत्तालवशेनविभज्यैकांऽशं देहलब्धांऽगुलं, तदष्टांऽशं यवमिति ।

एकांगुलादीनासंज्ञा - मात्रातत्वमूर्त्तीदुविष्ण्वंबरमोक्षोक्ता इत्ये-

कांगुलस्य, कालगोलकाऽश्विनीयुग्मब्राह्मण विहगाक्षिपक्षा इति द्व्यंगुलस्य, अग्निरुद्राऽक्षिगुणगणकालशूलरामवर्गमध्या इति त्र्यंगुलस्य, भागवेदप्रतिष्ठा जातिकराऽब्जजाऽऽननयुगतुर्यतुरीयांभसी' त्रिचतुरंगुलस्य, विषयेन्द्रियभूतेषु सुप्रतिष्ठापृथिव्या इति पञ्चांऽगुलस्य, कर्मांगरससमयगायत्रीकृत्तिकाकुमारान नकौशिकर्तवः षडंगुलस्य, पातालमुनिधातुलोकोष्णिग्रोहिणीद्वीपगांभोनिधय इति सप्तांऽगुलस्य, लोकपालनागोरगवस्वनुष्टुब् गणा इत्यष्टांऽगुलस्य, बृहतीगृहरंध्राऽऽनंदसूत्राणि इति नवांऽगुलस्य, दिक्प्रादुर्भावनाडीपङ्क्तय इति दशांऽगुलस्य, रुद्रत्रिष्टुबित्येकादशांऽगुलस्य, वितस्तिर्मुखंतालंयमंराशि र्जगतीचेतिद्वादशांऽगुलस्य, अतिजगतीतित्रयोदशांऽगुलस्य, मनुः शक्करीच- चतुर्दशांऽगुलस्य, अतिशक्वरीतिथिश्चेतिपञ्चदशांऽगुलस्य, क्रियाऽष्टीन्दु- कलाति षोडशांऽगुलस्य, अत्यष्टिः सप्तदशांऽगुलस्य, स्मृतिः धृति श्चेतिअष्टादशांऽगुलस्य, अतिधृतिरेकोनविंशतेः, कृतिर्विंशतेः, प्रकृतिरेक- विंशतेः, आकृतिर्द्वाविंशतेः विकृति स्त्रयोविंशतेः, संकृतिश्चतुर्विंशतेः, अभिकृतिःपञ्चविंशतेः, उत्कृतिः षड्विंशतेः, नक्षत्रंसप्तविंशते रित्येवंसंज्ञा- भवन्ति ॥

## षण्मानानि, तेषां संज्ञा च

मानं प्रमाणं उन्मानं परिमाणं उपमानं लंबमानमिति षण्मानानि। आयाम आयतं दीर्घमानमित्येकार्थवाचकाः, विस्तरं विस्तारं तारं विस्तृति विसृतिः विस्तृतंततिः विसृतंव्यासं विसारं विपुलं ततंविष्कंभंविशालमिति प्रमाणस्य, बहुलं नीव्रंघनमिति वा उच्छ्रयंतुंगं उन्नतमुदयम्, उच्छ्राय मुत्सेधम् ऊर्ध्वमित्युन्मानस्य, निष्क्रमंनिष्कृतिर्निर्गमं निर्गतिरुद्गममिति च, मार्गं प्रवेशंनतं परिणाहंनाहं वृतिरावृतमिति परिमाणस्य, नीव्रंविवरंअन्तर- मित्युपमानस्य, सूत्रलंबनान्मितं यत्तल्लंबमानम्। इत्येतैः षड्भिर्मानैर्युक्तं बेरं कारयेत् ॥

## देवानां तालविभागः

अथ देवानां तालविभागं वक्ष्ये - देवेशस्योत्तमं दश तालं, तथाब्रह्मणः शङ्करस्य च, श्रीभूम्यो रुमासरस्वत्योश्च मध्यमं दशतालम्, इन्द्रादि लोकपालाना, मादित्यचंद्रयोश्च द्वादशादित्यानाम् एकादशरुद्राणां वसूनाम् अश्विन्यो र्भृगुमार्कंडेययोः वीशसैषिकयोश्च दुर्गागुह सप्तर्षीणामपि

अधमं दशतालम्, यक्षेशनवग्रहाद्यन्य देवानां नवार्धतालम्; दैत्यरक्ष उरगेशसिद्धगन्धर्वचारणभवनानामुत्तमं नवतालम् ।

## देवकल्पमनुजानां त्र्यंगुलं नवतालम्

निशाचराणामसुराणांच नवतालं मर्त्यानामष्टतालं, बेतालानां-सप्ततालं, प्रेतानां षट्ताल, कुब्जानां पञ्चतालं, वासनानां चतुस्तालं, भूतानां-किन्नराणां च त्रितालं, कूश्माण्डण्डानां द्वितालं, कबंधानामेकतालम् एतेषां प्रत्येकमुत्तममध्य माऽधमभेदाः भवन्ति ॥

## देवतालेषु उत्तमत्वादिभेदः

स चतुर्विंशतिशतांगुलमुत्तमं दशतालम्, स विंशतिशतांगुलंमध्यमं दशतालम्, षोडशधिकशताऽङ्गुल मधमं दशतालम् ॥

## प्रादेशिन्यादीनां लक्षणम्

अङ्गुष्ठप्रदेशिनीभ्यांमितं प्रादेशम्, अंगुष्ठमध्यमाभ्यांमितं तालम्, अंगुष्ठाऽनामिकाभ्यांमितं वितस्तिः, अंगुष्ठकनिष्ठिकाभ्यां मितं गोकर्णम्, मानाऽङ्गुलेन चतुर्विंश त्यङ्गुलंकिष्कुः, पञ्चविंशत्यंगुलं प्राजापत्यम्, षड्विंशत्यंगुलं धनुर्ग्रहम्, सप्तविंशत्यंगुलंधनुर्मुष्टिः, इत्येतच्चतुर्गुणो दण्डः, तेन दण्डेनग्रामादीनां विन्यासं कारयेत् ॥

## प्रलम्बफलकलक्षणम्

अथ प्रलंबफलकांवक्ष्ये - बेरस्यलंबमानं पूर्वमेव परीक्षयेत् । अष्टषष्ट्यंगुलाऽऽयतां चतुर्विंशत्यंगुलविस्तारां द्व्यंगुलघनां लघ्वीं श्लक्ष्णां फलकां गृहीत्वा परितस्त्र्यङ्गुलं नीत्वा मानसूत्रं विन्यस्य प्राक्पश्चिम-भागस्थानि सूत्राणि प्रसारयेत् । मध्ये सूत्रंविन्यस्य मध्यसूत्रादेकांगुलं पुटपर्यन्तसूत्रं तदेवदृगन्तरंस्यात् । तस्मात् त्र्यर्धांगुलं नेत्रपर्यन्तं तस्माद् व्यर्धांगुलंमुखपर्यन्तं तस्माद्व्यंगुलं कर्णपर्यन्तं तस्मात्त्र्यंगुलंकक्षपर्यन्तं तस्माद्दशांऽगुलं बाहुपर्यन्तम्; एवंत्रयोदशासूत्राणिविन्यस्य परभुजस्य-मणिबन्धाऽवसानं मानसूत्रद्वयमेव तत्तारंनीत्वाऽभ्यन्तरं भवेत्, पुरतोमध्य-सूत्रयोगं (मध्यसूत्रं) तस्माद्व्यंगुलं पुटसूत्रं, तस्माद्वियवाधिकंद्व्यंगुलं नेत्र सूत्रं, तदेव वक्त्रबाह्यं, तस्मात् त्र्यंगुलमंतर्भुजावधि, तदेव कक्षपर्यन्तं

तद्द्वयेवा चतुरंगुलं बाहुपर्यन्तं तदेवपार्श्वयोर्मध्यमे पार्श्वमध्यसूत्रं स्यात् । तस्मात् द्व्यंगुलंकर्णावर्तं तस्मात् त्र्यंगुलंशिरः पृष्ठावसानंतदेवपरभुजावधिभवति । इत्येवं दक्षिणोत्तरगतानि सूत्राणि षट्चविन्यस्य तत्तत्सूत्रसंगेसुषिरं कृत्वातन्तुनायवमात्राणि सूत्राणि सुषिरेसंयोज्य अग्रे प्रोतकुण्डलं लोहमयं मृण्मयं वा संबध्य सूत्राणि लम्बयेत् ।

मध्यसूत्रं शिखामणे रूर्ध्वं संस्पर्शमेव कृत्वालम्बयेत् । स्थानकस्य मध्यसूत्रं मौलिशिखामणेर्मध्ये मूर्ध्वोभ्रूसंगस्य नासाग्रस्य च मध्ये कण्ठस्यहृदयस्य कुक्षेर्नाभेर्योनेः पादयोश्च मध्येप्रलम्बं तत्तत्सूत्रसंस्पर्शं नासाग्रंकुक्षिमध्यं च सूत्रात् मौल्यग्रपर्यन्तं षडंगुलं, हनुमध्यं यवाधिकचतुरंगुलं, हिक्कान्तंचतुरंगुलं, हृन्मध्यं द्व्यर्धांगुलं, नाभिः षड्यवा, योनिमूलमेकांगुलम्, ऊरुमध्यंद्व्यंगुलं, जान्वन्तरंत्र्यंगुलं, जंघान्तरं षडंगुलं, नळीकान्तरमष्टांगुलं, सूत्रात्पश्चार्धसार्धाष्टांगुलम्, अंगुष्ठाग्रंसूत्रात्पुरतोद्व्यर्धंगुलम्, एवं मध्यसूत्रवशात् मानयेत् ।

बाहुपर्यन्तमेवपार्श्वसूत्रं स्यात् चूडामणौमूर्ध्निकर्ण पाल्यन्तरे कूर्परयोः पार्श्वेजानुजंघां गुल्फानां मध्ये प्रलम्बयेत्, मौलिमूर्धकृकाटिककुद्वंश स्फिक्पार्ष्णीनां मध्ये पृष्ठमध्य सूत्रं प्रलम्बयेत्, गण्डपार्श्वे वक्त्रबाह्येकर्णौ चूचुकाग्रमध्ये श्रोणि पार्श्वे चोरुजंघयोर्मध्ये वक्त्रबाह्यसूत्रं प्रलम्बयेदेतानि षट्च पीठावलम्बानि अन्यानि तत्तदंगसंस्पर्शान्येवावलम्बयेत् । आसनस्योर्ध्वकायस्योक्तं पूर्ववन्मध्य सूत्रादीनि षट्सूत्राण्यासनोपरिलम्बयेत् । मध्यसूत्रं जानोरुपरिष्ठात्केशान्तं तन्मध्यगं जानोः पार्श्वाभ्यां बाहुभ्याश्च मध्यगंसूत्रं प्रलम्बयेत् । सूत्राद्वामजान्वन्तरमूर्ध्वकायार्धसमं दक्षिणजान्वन्तरं तदेव चतुरंगुलंत्र्यंगुलंयवोनं वा अन्यत्सर्वं पूर्ववत्कारयेत् ।

## उपमानम्

अथोपमानं वक्ष्ये-परभुजस्य मणिबन्धान्तरमष्टांगुल मुष्णीषाशंखचक्रान्तरंमुखं मध्योदरात् कूर्परान्तं षडर्धांगुलमभयहस्तस्य मध्यांगुलाच्चूचुकान्तं त्रयोदशांगुलं स्वागतस्य मध्यान्नाभ्यन्तरं दशांगुलमुदरमध्याच्छ्रोण्यन्तरे नवांगुलं वामहस्तस्य मध्यमांगुलाग्रान्मेढ्रान्तरं षडंगुलमूरुमूलान्तरमेकांगुल मूरुमध्यान्तरं द्व्यंगुलं जान्वन्तरं चतुरंगुलं जंघयोर्मध्यं पञ्चांगुल नलकान्तरं षडंगुलंकक्षयोरन्तरंपञ्चांगुलं पार्ष्ण्यन्तरं

चतुरंगुलं तलमध्यान्तरंषडंगुलमंगुष्ठान्तरमष्टांगुलं; शयनस्य तिर्यग्गत ब्रह्मसूत्रस्य दक्षिणतोमुखंत्र्यंगुलं पादांगुष्ठयोर्मध्यमं विंशत्यंगुलं पाष्र्ण्यन्तरंभागं जान्वन्तरं चतुर्दशांगुलंस्यत् एवमुपमानं लक्षयेत्। अत्रानुक्तं सर्वं शिल्पशास्त्रोक्तमार्गेणैव कारयेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे कौतुकादि लक्षणं नाम द्वाविंशः पटलः ॥२२॥

## अथ त्रयोविंशः पटलः

अथ देवशस्योत्तमदशतालवशान्मानं वक्ष्येः -

त्रियवाधिकैकांगुलमुष्णीषं केशांतं त्र्यंगुलं दृक्सूत्रं त्रियवाधिकं चतुरंगुलं तत्समं पुटांतं तस्समंहन्वंतं गळमर्धांगुलं हिक्कायवोनं(न) चतुरं गुलं हिक्कायाहृदयांतं, हृद, यान्नाभ्यंतं, नाभेर्मेढ्रांतं, तत्त्रियवाधि-कत्रयोदशांगुलं; मेढ्रादूर्वायामं त्रियवोनसप्तविंशत्यंगुलं जानु त्रियवाधिक चतुरंगुलं जंघाचोरुसमायामा पादंसत्रियवचतुरंगुलं पादायामंसप्तदशांगुलं हिक्कासूत्रादधस्ताद्बाहुस्सप्तविंशत्यंगुलः कूर्परंद्व्यंगुलं प्रकोष्टमेकविंशत्यं गुलं सप्तदशांगुलं(वा) (नलंसप्तांगुलं) मध्यमांगुलायामं षडर्धांगुलं;, तर्जनी यवाधिकपञ्चांगुला अनामिकातद्यवाधिका अंगुष्टं द्वियवाधिकभागं कनिष्ठांगुलं तद्यवाधिकं स्यात् ।

अथ प्रमाणंवक्ष्ये - उष्णीषात्पूर्वकेशांतं नवांगुलं पार्श्वयोस्तत्समं पृष्ठकेशांतं द्वादशांगुलं मुखस्यविस्तारं चतुर्दशांगुलं द्विचत्वारिंशदंगुलंनाहं शिरसः पृष्ठतः कर्णयोरंतरं त्रयोदशांगुलं पूर्ववत् पृष्ठतः षड्विंशत्यंगुलं शेषं कर्णयोःस्थानं भ्रुवोर्मध्यमेकांगुलं केशान्ताद्भ्रुवोर्मध्यंत्र्यंगुलं अष्टांगुलार्धं तिर्यगुपक्षेपमध्यम् अष्टार्धांगुलंग्रीवाग्रविस्तारं नवार्धांगुलंग्रीवामूलविस्तारं बाह्वोः पर्यन्तं चतुश्चत्वारिंशदंगुलं वक्षोविशालं चतुर्विंशत्यंगुलं हृदय विस्तारंविंशत्यंगुलं स्तनयोरन्तरंचतुर्दशांगुलं मध्योदरं षोडशांगुलं श्रोणीविस्तारं अष्टादशांगुलं कटिविशालं विंशत्यंगुलं ऊरुमूलविशालं त्रियवाधिकत्रयोदशांगुलं ऊरुमध्य विस्तारमेकादशांगुलं जानुनवार्धांगुलं जंघामूलमष्टांगुलं जंघामध्यविस्तारंसप्तांगुलं नलकाविस्तारंसार्धचतुरंगुलं अक्षगुल्फान्तरंपञ्चांगुलं प्रपदविस्तारंसार्धपञ्चांगुलं सार्धवेदांगुलोत्सेधं-

पार्ष्णिविस्तारं सार्धत्रिमात्रंपादांगुलविस्तारं अंगुष्ठायामंचतुरंगुलं तर्जनी तत् यवाधिका तद्यवोनं मध्यमांगुलं त्रिमात्रार्धानामिका कनिष्ठायामंत्रिमात्रं कनिष्ठाद्यंगुष्ठांतं क्रमात्सप्ताष्टाअष्टार्धनवषोडशभिर्यवैरंगुलानांविस्तारं शेषं विवरम् ।

बाहुमूलविस्तारं दशांगुलं बाहुमध्यं नवांगुलं कोर्परंसार्धसप्तांगुलं प्रकोष्ठमध्यंसप्तांगुलं मणिबन्धं चतुरंगुलं सार्धतलंसार्धषण्मात्रं(तल) मध्यं सप्तांगुलं अग्रं षण्मात्रं रुद्राष्टनवसप्तषड्चयवविपुलान्यंगुष्ठादिकनिष्ठांतांगुल्यग्राणि तद्यवार्धहीनंसप्तवेदेषु तुर्याग्नियवमंगुष्ठादिनखानांविशालं द्वियवाधिकायामंद्विपर्वांगुष्ठं अन्यानि त्रिपर्वाणि अंगुष्ठमूलपर्वार्धाधिकांगुलंद्व्यर्धांगुलं अग्रपर्व तर्जनीमूलपर्व चतुर्दशयवं मध्यम पर्व त्रयोदशयवम् अग्रपर्वद्वादश यवं मध्याङ्गुलीमूलपर्वाष्टादशयवं मध्यमपर्वषोडशयवं अग्रपर्वसार्धपञ्चशयवं अनामिकमूलपर्व सार्धचतुर्दश यवं मध्यमपर्व सार्धत्रयोदशयवम् अग्रपर्वद्वादशयवं कनिष्ठांगुलिमूलपर्व द्वादशयवं मध्यमपूर्वैकादशयवम् अग्रपर्व दशयवं अंगुळीनामग्रे द्वियवाधिकं नखाग्रं पार्ष्णिहस्ता घन वेदांगुलं तलमध्यघनं द्व्यर्धांगुलं अग्रमंगुलीवत् क्षीणं शुकोदरघनं द्व्यर्धांगुलं मणिबंधात्तदायामं सद्वियवंभागं शुकोदरविशालं द्वियवोनंत्र्यंगुलं पार्ष्णिहस्त विस्तारंद्वियवोनचतुरंगुलं तस्यग्रे तर्जन्यादि कनिष्ठांताना मंगुळीनांमूलतलं मांसलं द्रव्यर्धमात्रेणशेषतलंनिम्नमंगुष्ठतर्जनीमूलयोस्सार्धत्र्यंगुल मंगुलीनामधोमूलसंधिरंगुलमेकाग्रोच्चनीचार्धांगुलम् ।

कनिष्ठिकादेशमूलादेकदशा त्तर्जनीमूलपार्श्वगा आयुरेखा मध्यांगुलयोः द्व्यंगुलं तस्यषड्यवाधस्ताद्विद्या रेखा तलमूलादाकराग्रं ब्रह्मरेखा दक्षिणादक्षिणेकरतले चक्रशंखसमारेखा भवेत् ।

उपक्षेपनिम्नंद्वियवांतरावर्त्तं द्व्यंगुलम् उपक्षेपविशालमर्धांगुलं त्रियवोन्नतं हस्तिमस्तकवद्विस्तीर्ण मस्तकंसोन्नतमंगुलम ।

भ्रूतलं (भ्रूः) पञ्चचतुर्यवासार्धपञ्चांगुलायामासार्धाष्टयवविस्तारमात्रा आनताच अर्धमात्रांतर्याचक्रपुच्छा चापवत् भ्रूलता स्निग्धरोमसंचिता ।

द्व्यंगुलं नेत्रतारं भ्रुवस्तलादर्धाधिकांगुलायामम् एवमक्षिमण्डल मूर्ध्वाधोवर्मछन्नम् ऊर्ध्ववर्मद्वादशयवम् अधोवर्मचतुर्यवम् एतयोर्योगं नयनसूत्रमूर्ध्वविर्मविस्तारं द्वियवम् अक्षिमोचनविस्तारमेकांगुलम् ऊर्ध्ववर्मणासंस्पृशेत् ।

षड्यवं कृष्णमण्डलं तस्योभयोः पार्श्वयोस्तदर्धाधिकायतौ-शुक्लभागौ कनीनिकाविस्तारायामं यवं नेत्रांतरक्तंयवार्धं ज्योतिर्यवप्रमाणं दृष्टिर्यूकमात्रा ऊर्ध्ववर्मततं यवार्धकं द्वियवमधोर्वर्मनतं वर्मणोघनमर्धंयवं नवतिः पक्ष्मरोमाणि शेषं पक्ष्म नासिकापुटमध्यमूलांतं क्रमादष्टादश दशषड्यवविस्तृतम् ।

नासिकाग्रमंगुळिविस्तारं गोजीमूलाग्रं द्व्यंगुलोच्छ्रयं पुष्करं अष्टयवोत्सेधं तन्मूलविस्तारंद्वियवं मध्यविस्तारंद्व्यर्धयवम् अग्र-विशालंत्रियवं पुटरन्ध्रोतोंगुलं तिर्यग्यवपञ्चकं पुटस्यबहळं यवमात्रायता ततान्वितं द्विनिष्पावबीजसदृशं तिलपुष्पसमाकारं नासिकापुटसूत्रान्नासाग्रं द्वियवार्धंलंबितं सार्धचतुर्यवंगोजीपुटं द्वियवंविस्तारं त्रिवर्गाचोत्तर पाली सार्धयवविस्तृतात्रियवार्धतता ।

सार्धयववेदांगुलायतमुत्तरोष्ठम् आस्यतारंतदेवं चत्वारःपुरोदंता-स्त्रियवायामविस्तृता स्तावंतोधरदंताः द्वियवार्धानतायताश्चतुर्यवायता-दंष्ट्रासदंशमुकुळोपमा ऊर्ध्वाधोदंष्ट्रे अर्धयवाधिके पुरोदंतात् यवार्धो-नायतास्तत्सम विस्ताराः पञ्चोपदंष्ट्राः द्विपार्श्वगा द्वात्रिंशद्दंतसंख्या अधरोत्तरयोर्दंतायामसमौ अंतस्तदधौदन्तरोपणौ ।

जिह्वाषडंगुलयामा तदर्धविस्ताराघृतजिह्वा अंगुलं बाहुकण्ठ (कर्ण) रंध्रं कलांगुलं षडंगुलायतं तालुविस्तारं त्र्यंगुलमास्यं नवयवांतरं द्विगुणायतं षड्यवं तस्या (स्यायतार्धोत्सेधं) मुत्सेधं सार्धद्वियवं पालिकारक्तभागंततं शेषमायामद्विगुणम् ।

ओष्ठादधस्ताच्चुबुकं सार्धाष्टयवं हनुस्तत्समं तस्माद्धनुचक्रंसद्वियवं तदुन्नतंरुद्राक्षियवं चुबुकनिम्नम् ।

हनोर्गळ गळालीकं तदङ्गुळार्धं गळरेखाद्व्यर्धकलायामा चापसन्निभा कर्णबंधाद्धनोर्मध्य दशार्धांगुलं तस्माच्चतुष्कलंसृक्कम् ॥

नेत्रादधस्तादपांगमंगुलम् अपांगात्कर्णमूलंषडंगुलं कर्णकलाततंनेत्र-सूत्रसमं कर्णप्रोतं तत्कर्णतुंगततं कर्णनाळमूलंकलासार्धयवं कर्णवर्त्ती-सार्धयवतता पाली चतुर्यवा कर्णपिप्पलीचतुर्यवविस्तारा द्विगुणायतायवार्ध द्व्यंगुलायामा षड्यवांगुळविशालाकर्णवर्त्तीपिंचुषि चूलिकायतवर्तुलातुरीय-यवार्धविस्तारापिंचुषीकर्णचूलिकाकर्णवर्त्युन्नतंचूर्पंतावदद्यर्धयवमर्धांगुलं-

कर्णचूलीपिंचुषीकोन्नतीर्यवांतरंपिप्पलीफाल्योः बालिबालेंदुसन्निभायव-निष्पाव बीजसदृशा पिप्पलीषड्यवायता चतुर्यवविशालास्त्रोतो धोनेत्रामिं-चुष्यधः कर्णनालमात्रार्धघनयुक्तौनालौपूर्वापरौ विवरंषड्यवं तयोर्नाहं-मात्रंस्यात् ॥

कर्णमूलादधोबिंदुः (वपुः) कार्यं कृकाटीसार्धांगुलानता तस्याव-यवंभागं तद्ग्रीवायामं तत्रार्धांगुलं तारं दशांगुलं स्कंधयोः समे कर्ण-बंधादधस्कंधसंधि सार्धषडंगुलं, समांगुलं, स्कंधौशोभान्वितौ ॥

हिक्कासूत्रात् स्कंधसंध्युचंचतुरंगुलं तन्मध्ये द्व्यर्धांगुलं जतृ बाहुशिरस्संधिरंसांतंस्कंधमूलतोनवांगुलं द्वियवं तस्मात् द्वियवंषडंगुलं-बाहुशिरो 'जतृसमाहित' कौर्परांसं 'बाह्वंसं' पंचागुलायतंत्र्यंगुलायतो-मुत्क्षेपसमोद्दंडितेभुजंसमासन्नं(स) मापयेत् एवंनीत्वाद्विभुजं नयेत् ॥

कंठादधस्तात् ककुत् भागायता अष्टगोलकंककुदः कटिसंध्यंतं वंशं 'विंशति' र्नागाधिकं तत्समं ककुदोधस्तात् षड्भागेककुतद्वारेकक्षाधरांतरं-तस्माद्बाहुपर्यंतंद्वियवंनवांगुलं स्कंधं स्कंधेऽधस्तात् अंसपीठं सार्धेद्रियांगुलं तस्माद्वियवा अंसफलका स्तनसूत्रसमा तत्रांतरयोर्दशांगुलककुदोधरां-त्रिमात्रतारंसमांगुलं ॥

तद्वक्षसोंसंमांसलं तयोस्संभिन्नं वंशतारं कलानतं वंशदंडपार्श्वे-चांऽसफलकायाअधोनवांगुलं बृहत्योस्स्तनांतरं, वंशात्सुप्रतिष्ठाकला तयोर्बृहति स्तनयोर्मध्यं सम दशांगुलंघनं बृहत्याकटिसंध्यंतरंतन्मध्यं समांगुलायतं तद्घनंस्यात् चतुर्भागंतदर्धांगुलाधिकं कटुसार्धमुखं सार्धांगुलं खंडिकांतं खंडस्य पुरस्थात्पायुः भागांगुलं सार्धं धृतिमात्रं कटी (बंध) विशालंजघनस्यबहिः पृष्ठवंशपार्श्वेद्वयोः ककुदेन्तरंषडर्धांगुलविशालं निम्नौककुंदरस्यांतंद्व्यंगुलं बिंदुखंडिकं, बिंदुखंडिकयोस्तिय क्कटी वेदार्धमात्रका खंडंद्व्यंगुलांतरं सार्धतुरीयांगुलंस्फिक् ॥

पिण्डलंबितंनवांगुलं सुवृत्तं, कंदः, कं(ठ)बुसमोवृत्तो द्विरेखावृ-तस्तनार्धका सद्वादशयवं मुखं कक्षाद्धि क्कांतंतावत् स्तनं कक्षादष्टांगुलं नवांगुलनम्रमुरो ह्यवाधिकं हृदयात् स्तनपीठतुंगमर्धांगुलं कक्षात्-कक्षाधरावलंबमंत्युक्तयवकोलकं स्तनपीठस्योन्नतंकक्षस्यांगुलं तत्पुर स्तान्मुखं विप्रांगुलं (बं) यवंवृत्तम् स्तनं यवोन्नतं स्तना द्दक्षंद्वियवतारं तदधस्तात्द्व्यंगुलं स्तनं ॥

हिक्काद्वियवनिम्ना जत्रुरेखाद्व्यंगुला नाभिर्दक्षिणावर्त्ताषड्यव-निम्नायतोंद्रियांगुला नाभेःश्रोणीपार्श्वेत्रिकलांगुला द्व्यर्धांगुला कटी श्रोण्याशेषंमेढ्रपीठं सार्धपंचांगुलायतं, लिंग(गायाम) तारं द्विमात्रंमुष्कलंबं तुरीयार्धांगुलं तत्समविस्तारंवृषाननसदृशंमेढ्रं ॥

ऊरुबंधं रुद्राक्षांगुलं प्रतिष्ठांगुलंद्वियवं जानुमंडलंविष्कंभं घनं द्व्यर्धमात्रं पार्श्वबंधं तुरीयांगुलं पृष्ठाज्ञानु त्रिमात्रार्धयवतारान्वितं कोलकं कोलकं मध्यभागेशेषं पार्श्वयोरपि, जान्वंता (न्तरा) यिप्रस्त्यंतं तालं मत्स्यवदुन्नतं; पृष्ठजंघाश्रितं मत्स्य (पार्ष्णिद्व्यंगुल विस्तारा) वद्व्यर्धकला विस्तारं नळकापृष्ठपार्श्वद्वयांतरं तद्बहिर्गतेऽक्षगुल्फयोस्तुंगमनुपङ्तियवौ-र्विपुलं क्रमेणाष्टादशादिति जगतियवं प्रतिष्ठार्धांगुलं पर्ष्णितारं तत्तुंगंक(श) रांगुलं सार्धप्रपदतुंगमंगुष्ठं द्व्यंगुलघनं शेषाणिविस्तार समं तुंगान्यष्टयव-विस्तारंदैर्घ्यम् ॥

अंगुष्ठनखमुखेद्विपार्श्वेद्वयोस्तुरीययवं नीत्वानखं नयेत्; चतु (स्तली) रर्धचतुस्सार्धान्निभिर्यवैः क्रमान्नखानांविस्तारं तर्जन्यादिकनिष्ठांतं त्रियवं तदर्धोन नखायतास्तस्यांगुष्ठयोरंतरंचतुर्यवंपर्वद्वयं अंगुष्ठान्यानि त्रिपर्वाणि स्वतारसदृशमग्रपर्वांतं यवाधिकमंगुष्ठपर्वमूलाग्रं ज्येष्ठां (शेषां) गुलीनांद्विय-वाधिक्यमेकैकं सर्वांगुलीमूलानां मूलतलं मांसलं पार्ष्णिभागे तलं पंचां-गुलायामं शेषंवर्त्तुलं कारयेत् । पादौद्वौ चक्रशंखरेखासमन्वितौ सर्वं-सुव्यक्तंसुसं पूर्णबेरं सलक्षणं चक्षुर्नंदनमूर्ध्वकायमथोकायंसममेव कृत्वा, सर्वत्र विष्कंभात् त्रिगुणंवृत्तंतत्परिमाणंस्यात् सर्वेष्वंगेष्वेकयवादि षड्य-वांतंहीनाधिक्यं न दोषायभवति । तस्माद्यथोचितं युक्त्याकारयेत् ॥

अथ देव्योः मानम्-मध्यमंदशतालंसविंशतिशतांगुलं त्रिनतंद्विभुजं समभागंनतमानं चतुरंगुलं श्रीदेव्या दक्षिणपादं स्थितंवामपादं कुंचितं दक्षिणहस्तंप्रसारितं तदूरुमूलालंबितं वामं पद्मधरंहेमाभाम् ॥

महीदेव्यावामपादंस्थितं दक्षिणपादंकुंचितं दक्षिणहस्तं उत्पलधरं वामंप्रसारितंतदूरुमूलालंबितं श्यामाभां किरीटाद्याभरणान्विताम् ॥

मूर्ध्निकेशांतंभागं तस्मान्नेत्रंषड्यवंभागं नेत्रात्पुटांतं चतुरंगुलं पुटाद्धन्वंतं षड्यवंत्रिमात्रं हनोःकंठंद्विकलं कंठाध्दृदयांतं हृदयान्नाभ्यन्तं-नाभेर्योनिमूलांतं त्रयोदशांगुलं, तस्मादूर्वायतं षड्विंशत्यंगुलं जानु-

द्विकोलकंजंघाचोरुसमा पादंभागं तालायामं चतुर्भागुष्ठायतं चतुरंगुलं तर्जनीतत्समा शेषांगुल्यः क्रमादर्धांगुलोनायताः ॥

अंगुष्ठादि विशालंषोडशाष्ट (सार्धसप्त) सप्तषड्यवं नखायामं स्वतारार्धंपादाग्रतलविस्तास्यडंगुलं प्रपदस्य विस्तारं उन्नतंपंचांगुलं पार्ष्णिद्विकोलकमक्षिगुल्भांतरं पंचांगुलं नलकाविपुलंभागं जंघामध्यं-त्रिकोलकं सप्तांगुलंजानुविस्तारम् ऊरुमूलंद्वादशांगुलं गजहस्तसमवृत्तमूरुमूलं नलकांघ्रिकटीतारंद्विमुखं पीठंसप्तांगुलविस्तारं चतुरंगुलायत मूरु, अश्वत्थदलबाह्यवद्विपुलंमांसलंगुह्यं श्रोणीतारंतारा (कला) दृश श्रोणीनेत्रायामविस्तारंसप्तांगुलं नाभ्यधः ॥

नाभिः षड्यवविस्तारं गंभीरोदरकुक्षिमध्यं चक्रां, (रुद्रां) गुलीविशालं (स्तनादधो) हृदयंत्रयोदशांगुलतारं स्तनतारंनवांगुलं चूचुकंत्र्यंगुलविस्तारंस्तनाच्च चतुरर्धांगुलं (अर्धांगुलं) स्तनमध्यं कक्षयोरंतरमष्टादशांगुलम् ॥

छंदोंगुलंबाहुदीर्घं कोर्परंद्व्यंगुलायतं प्रकोष्ठकं तारं धृक्कलांगुलं तलंसप्तांगुलायाम मध्यमांगुलंत्रिकलंपंचांगुलीनामेकातर्जनीअनामिकासमा अंगुष्ठकनिष्ठकेतारा(द्विकला) यतेनवसप्ताष्टसप्तर्त्तुयवविस्तारं क्रमादंगुष्ठाद्यंगुलीनांषडंशैकांशंचतुरंशैकांशंस्वाग्रांगुलतारं नखदीर्घंयवाधिकषडग्निवेद्-भूतऋतुसप्तांगुलविस्तारं क्रमान्मणिबंधतलप्रकोष्ठमध्यकोर्परदोर्मध्यभुजमूलं च कर्णविस्तारं सप्तांगुलं मुखंद्वादशांगुलं कुक्कुटाण्डसमाकारं केशांतात् भ्रूद्विमात्रार्धं ततोक्षिद्वियवं त्र्यंगुलं; पुटादास्यं यवांगुलं तदर्धांगुलायतमधरं यवांगुलंशेषं हनुः ॥

कर्णाद्धनुस्त्रिमात्रार्धतुंगं शेषंपूर्ववत् । कटकांगुलस्य चोत्तुंगंस्तनाक्षिसमं तन्मणिबंधान्नभेरंतरं सार्धत्रयोदशांगुलं तत्पार्श्वेमध्यंबाह्वन्तरंसप्तांगुलं तथाप्रसारित हस्तस्य पार्श्वबाह्वन्तरं रसांगुलं मणिवंधादूरुमूलांतरंवेदां गुलं तदर्धंकराग्रादूरुमध्यांतरंनीत्वा मूर्ध्निपार्श्वेवामनेत्रसिते वामपुटेधरे हनौ सव्यस्तने सव्यपार्श्वे नाभेर्मध्ये वामोरुदक्षिणे वामांघ्रिपार्ष्णिपार्श्वे च सूत्रंप्रलंबयेत् एवं श्रीदेव्याः ॥

महीदेव्याःतद्विपरीतमार्गेण सूत्रंप्रलंबयेत् अंगुष्ठांतरंसार्धत्रयोदशांगुलं त्रिभागैकभागंपार्ष्ण्यंतरं शेषं युक्त्या कारयेत् ॥

## पूजकादीनां तालम्

पूजकमुन्योवीशशौषिकयोरिंद्रादिलोकपालानामन्येषां परिवाराणांत्रयस्त्रिंशद्देवानां चाधमं दशतालं षोडशाधिकशतांगुलम् ॥

मूर्ध्नोमात्रात्रयंकेशांतं तस्मात् दृक्सूत्रंद्वियवं भागंपुटान्तंसयवंभागं तत्समंहनोरंतरं गलमर्धांगुलं कंठंभागंकंठा हृदयं हृदयात्नाभ्यंतं नाभेर्मेढ्रांतं सार्धांगुलंमुखम् ऊर्वायामंपंचभागं (पंचविंशत्यंगुलम्) जानुजंघाचोरुसमा चरणंभागम्; ऊरुसमोबाहुः कोर्परंद्व्यंगुलं प्रकोष्ठंसार्धधुति सार्धषट्कलांगुलंतलांगुलं सार्धपंचांगुलंत्र्यंगुलंवक्त्रतारं कंठः सार्धचतुष्कलंवक्षः - कुक्षिश्रोणीकटिविस्तारं मध्यमदशतालस्योक्ततारर्धांगुलहीनं ऊरुजानुजंघा तलविपुलं भुजमूलं कंठततं दोर्मध्यदिविशालंद्वियवोनांगुलयवार्धोनविशालं शेषंप्रत्यंगोपांगविस्तारंमध्यमदश तालोक्तमानेन कारयेत् ॥

सीतारुक्मिणीसत्यभामानांनवार्धतालं मुखं सद्वियवंतालं मुखायामात् त्रिगुणंकायं ऊरुद्विमुखं जानुभागं जंघाचोरुसमा पादंकंठशिरोयुगं मुखायामसमं कंठबाह्यतारंयुगद्वयंदशांगुलं मुखं तिर्यक्कंठसद्वियवं शेषांगविपुलमुत्तमनवतालविस्तारा द्वियवाधिकंदोर्दीर्घं सार्धसंकृतिःकोर्परा द्व्यंगुलंसार्धधृत्यंगुलं प्रकोष्टतलंषडंगुलायामं मध्यमांगुलिष्षडंगुला केशांतादृक् दृशोनासायवंभागं हनुर्युगं शेषमुत्तम नवतालोक्तवत् कारयेत ।

नवतालं त्रिविधं मूर्धामात्रं त्रिमात्रं केशांतं केशांतात् दृक् ततो युगं पुटं पुटाद्धन्वंतं भागं गळमर्धांगुलंगळात्सार्धं त्रिमात्रं हिक्का हिक्काया हृदयान्तं हृदयान्नाभ्यन्तंनाभेर्मेढ्रान्तंमुखत्रयं ऊरुद्विमुखं जानुभागं जंघाचोरूसमा पादंतुरीयांगुलम् ।

तलायामं चतुर्भागं बाहुदीर्घमश्विमुखं द्व्यंगुलं कोर्परंसार्धमुखं प्रकोष्ठंतलं षडंगुलं मध्यमांगुलिः तथैवाष्टत्रिंशद्यवा अनामिकातर्जनी तत्समभागायते अंगुष्ठकनिष्ठे दशबंध्वनुष्टुबुष्णिक्षड्यवविस्तारं क्रमाद्यंगुष्ठाद्यंगुलीनां तलम् ।

पञ्चांगुलं मणिबंधंत्रिमात्रं प्रकोष्टंपञ्चांगुलं कोर्परं तारं षडंगुलम् अष्टांगुलंबाहुतारं तिर्यक्शिरोदशांगुलं केशांतादभ्रूस्त्रिमात्रिका ततोक्षि तत्समन्नास्यं आस्यंततम गुलम् अधरं हनुशेषं धृङ्मध्यं दशकलं दृशः कर्णांतं सुप्रतिष्ठांगुलं कर्णायामं भागं नाळालंबंभागं तदेवपुटविस्तारं नालस्य

कलातिर्यक् त्र्यर्धांगुलमर्धांगुलं तुंग मधरम् । षड्यवोन्नतं हनोर्गलं गलात्कंठमंगुलं द्व्यंगुलं नवतालं कर्णतारं द्विभागं बाह्वोस्सीमायवत्रयंवक्षो दशाष्टकोलविस्तारं श्रोणीभागं चतुर्भागंकटीचाष्टादशांगुलं पंचांगुलं-लिंगदैर्ध्यं विपुलंद्व्यंगुलं मुष्कालंबंभागं ऊरुविशालं यमं जानु द्विभागं जंघाषण्मात्रा नळकावेदांगुलं प्रपदंपंचांगुलं तलाग्रततंत्रिकोलं कलाग्रतारं अंगुष्ठंद्विगुणायामं सयवंभागं प्रदेशिन्यायामंतार मध्यर्धांगुलं मध्यमादिक निष्ठांतानामेकैकमर्धांगुलहीनमायामं सप्तषट्पंचयव विपुलं यथा क्रमेण कार येत् ।

मध्यमं नवतालं - सत्र्यंगुलं नवतालमूर्धन्यंगुलहीनं नाभेरर्धंगुलं ऊरोरेकांगुलं सकूथि अंगुलं मध्यमनवतालविस्तारादीनि कारयेत् ।

कनिष्ठंनवतालं हिक्कायानाभ्यंतत्रिककृत्(त्र) द्वयम् ऊरुदीर्घंजंघायाम-मेकांगुलहीनं कृत्वान्यत्सर्वं मध्यमनव तालवत् वाह्वादीनांविशालंद्वियवहीनं-कक्षांतरकुक्षिश्रोणीकट्यूरुजानुतलेश्रेष्ठांगुलहीनं शेषंपूर्ववदाचरेत् ॥

स्त्रीणांकेशांतंसमं भ्रूलतासंगमंसार्धयुगंभागं पुटांतं पुटांताद्धनु स्त्रिमात्रार्धं सर्वासांगलं नेष्यते शेषं पुंरूपवद्विस्तारायामंग्रीवादोर्विपुलं वह्निकल कोर्परंपंचांगुल मणिबंधंत्रिमात्रं षड्यवयुगं तलं यवोनविपुलाः शेषांगुल्यः शेषांगुलि विस्तारं कक्षानवार्धंतालवत् स्त्रीमूरुतदर्धंगुलं हीनं पादांगुलिविपुलंयवोनं शेषंविपुलं पूर्ववत्कारयेत् ॥

अष्टतालं त्रिविधं - उत्तमादि क्रमेण शिरोमानंद्विमात्रार्धं मुखमेकांशां-गुलं ग्रीवायतं त्रिमात्रार्धं मुखत्रयंकाया द्वाविंशत्यंगुलम्ऊरूजानुत्रिमात्रं जंघाचोरुसमायामा तलंत्रिमात्र मूरुर्दीर्घसमोबाहुः कोर्परंद्व्यंगुलं प्रकोष्ठं-सप्तदशांगुलं द्वितयंमध्यं मध्या(मा) त्पंचमात्रानामिका चतुर्यवा मात्राधि-कातर्जनी, त्र्यर्धमात्रायामाकनिष्ठा तत्सममंगुष्ठंतासामन्तरंक्रमान्नवाद्रि-वस्वब्धिपंचयवा स्तेनालंबघनं तलाबाह्वोरधस्तात् हस्ततारं नवताल-बत्सप्तांगुलविशालं दोर्मूलं मुखस्यविपुलं नेत्रान्मुखांतं हन्वंतरं चतुर्दश-यवार्धकर्णविसृतिः केशांताद्भ्रूद्विमात्रं दृक्सूत्रंद्व्यंगुलं पुटंपुटाद्धनु-स्सार्धरुद्राक्षी कंठमानं त्रियवंगुलं कंठविस्तारं सप्तमात्रं नेत्रायामसमं कर्णतारं द्विगुणायामं नालंशरार्धांगुलं कर्णनेत्रां तयोः कंठाद्धनुर्द्वाविंशतियव मेकोनविंशत्यंगुल मुत्तरतारं चतुर्यवं त्रयोदशांगुलं मध्यश्रोणी तस्मा-त्कालाधिकंलिंगायामंयवांगुलं रुद्रांगुलं ऊरुविस्तारं जानुनवांगुलं

जंघापंचांगुला नलकासार्धवेदं प्रपदंना(ता) लविस्तारं सार्धपंचांगुलम् एवमंगप्रत्यंगं कारयेत् ॥

नरनारीणांमध्यमाष्टतालेन शिरस्यर्धांगुलं हीनंमुखंकंठं च पूर्ववत् तौसार्धंगुलहीनं कायं त्रिताल मूरूत्रिसप्तमात्र जानुत्र्यंगुलं जंघाप्रकृत्यंगुला चरणंजानुसमं विस्तारदीनि पूर्ववत् ॥

स्त्रीणामपिसमंदीर्घं ग्रीवोर्ध्वविस्तारं सार्धपंचांगुलं कर्णतारं दोर्विसृतिस्सार्धवेदाग्निनेत्राणि कोर्पराद्या कंठांतं पंचांगुलायामं वेदार्धं मध्यमांगुलि स्सप्तयवांतरं क्रमादेवतदायतम् अन्यांगुलीनांतलंतुर्यांगुलविस्तार पंचदशांगुलिं वक्षस्तनौसप्तांगुलौ स्तनादधौरुद्रांगुलं श्रोणीसप्तदशांगुला कटीचैकोनविंशातिः सार्धपङ्क्त्यंगुला नाभ्यूरूजानुजंघास्विद्रियांगुलं नलकात्र्यंगुला सार्धपंचांगुलं तलं शेषं युक्त्या कारयेत् ॥

मुखेप्येकांगुलंहीनं नाभावेकांगुलं क्षीणं ऊरावेकांगुलंजंघायामध्यर्ध-विस्तारं भवेत् ॥

सप्ततालविभागं शिरोंगुलं मुखंरुद्रांगुलं कंठंत्रिमात्रं नाभ्यंतरंविंशत्यं-गुलम् योनिर्नकला दशनाभि कला जंघोरुतुल्या तलंनवत्यष्टांभोष्टभागावहे-श्विन्यंगुलैः स्तनस्कंधोरोर्मध्यश्रोण्योरुजंघातलान्येवंविशालरूपं कारयेत् ॥

षट्तालैरेकतालमात्रोमुखं पंचतालायतं कंठं तस्मातन्योन्यंतद्वे शकलाचोरू रष्टादशांगुलायतोज़ानुत्रिमात्रं जंघोरुसमायामा तलंजानुसमं नरोक्तविपुलोन्नतं वंशदडोन्नतं प्रकोष्टककुदौनवमात्र मुरोनासासमोन्नतं उग्रवदनं शेषांगुलं नराकारवत्कारयेत् ॥

मुखमेकांगुलं क्षीण मूरावेकं जंघायामांगुलं मध्यतलं जानुतनुग्री-वास्वंगुलानांतु मध्यतो मध्यस्यविस्तारं तुल्यं कारयेत् ॥

पंचतालविभागम् अंगुलं शिरोभागमंगुलं शिरोभागकेशांतं हक्त्रिमात्रा सार्धपुटांतं पुटाद्रुद्राक्षी हन्वंतंग्रीवाऽश्विन्यायता नवाष्ट-समांगुलायतं क्रमाध्दृदयनाभिमेढ्रांतम् ऊरुरुद्रांगुलं जानुकला जंघोरुसमा पादंकलांगुलंपंचकलायामंतलं चंदोंगुलं बाहुप्रकोष्टं पंचकोलकं तलंभागयुगं मध्यांगुलायामं प्रदेशिनीतर्जनीद्विमात्रार्धं कनिष्टांगुष्टेत्र्यंगुलं त्रियवार्धंत्र-चतुष्पं च मात्राभिः क्रमाद्विस्तारं तलं प्रकोष्टकोर्परबाहूनां मुखविस्तारम् अष्टांगुलार्धं कंठस्यविस्तारं सप्तांगुलं जगतित्रिंशदंगुलम् उरःश्रोणी कटीनां

यथासंख्यं ऊरुजानुजंघानलका तलविस्तारं षडष्टगायत्रीवेदाग्निषण्मात्राभि र्यथाक्रमं हिक्कानाभ्यंतरे मात्रार्धं द्वियवमूर्वायाममंगुलं जंघायाममंगुलं ग्रीवामध्य विस्तारायामम् पूर्ववत्तत्तत्सार्धांगुलहीनं ऊरावेकं चतुर्यवं जंघायामंमध्यमाद्धीनं हृषीकतालं पंचागुलानां तत्रचतुर्यवोनविपुलं कायार्धेनकारयेत् ॥

चतुस्ताले स्यादंगुलंशिरः कंठंद्वादशांगुलं मुखंतालं कर्णांतंयुगं ध्रुवं कलांनाभिः पंचां(दशां) गुलंबृद्धोदरं भूतानांमेढ्रनाभिश्रोण्यालंबं त्रिमात्रम् ऊरुःपंचांगुलायामं जानुत्रिमात्रं जंघोरुतुल्या जानुसमं तलं मुखायामं भुजंसप्तांगुलायामं प्रकोष्ठतलायाम भागांगुलं कलांगुला पंचदशांगुला तलं षडंगुलतारं तलायामम् एवं श्रेष्ठम्, अतोवक्त्रं अंगुलं कलांगुलद्वयं पादांगुलोनं विस्तारे अर्धांगुलं मध्यमं, ततः कंठेऽगुलोनं (अंगष्ठौ) अंसे अंघ्रौचाधमेनकारयेन् ।

त्रिताले शिरोंगुलं मुखं रुद्रांगुलंकंठं द्व्यंगुलंतस्माद्धृदयं हृद-यान्नाभिस्तत्समं मेढ्रेवसुकलम् एवश्रेष्ठं द्विकोलकं तनौहीनं मध्यमं मुखेंगुलं त्रितयमंगुलं कलाहीनंकिन्नराणां त्रितालं मेढ्रादूर्ध्वंपादं कुक्कुटवद्भागमूरुः पंचांगुलायतं जंघापादमात्रोनदीर्घंत्रिमात्रं प्रकोष्ठमध्यमं तावत्पक्षायामं गरुडवत्स्वायामार्धकाया स्सर्वेकिन्नरा बहवो द्विचतुर्बाहुमूलं चेत् अध्यर्धद्विगुणघनं द्विगुणाधिकं नेत्रतालपत्रस्य मूलवदेकद्वित्रियवांगुलैक-त्रिकाकाराः परबाहवोयावंतो बाहुमूलास्तावंतः परिकीर्तिताः ॥

कूष्मांडानांमुखंतालं कंठंद्व्यंगुलमानं युगमूर्धायतं जंघाद्विकोलांगुला चरणंकंठाद्बहिर्मुखायतं चतुस्त्रिमात्रं दोः प्रकोष्ठतलं दीर्घविस्तारं युक्त्या दक्षिण बाहुस(पक्षौ) मायतौ कारयेत् ॥

कबंधमुखमेकपादं कुक्कुटवद्दीर्घं किन्नरपादार्ध विस्तारं पुच्छायामं चतुर्मात्रं पक्षं तद्गुणायतं कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पेदशतालादि निर्णयोनाम त्रयोविंशः पटलः ॥२३॥

# अथ चतुर्विंशः पटलः

## आवहनपात्रादीनां लक्षणम्

अथ पात्रपरिच्छदानां लक्षणंवक्ष्ये - मानाऽङ्गुलेन, मात्राऽङ्गुलेन, ध्रुवबेरस्यदेहलब्धांगुलेन वा, सुवर्णरजतकांस्यानामन्यतमेन चतुरङ्गुल-विस्तारं, तदर्धोत्सेधं, सुवृत्तं, षडङ्गुलास्यतारं, पृष्ठेत्र्यंङ्गुलपादं मध्येना-सिकायुक्तं, ताभ्यांवियुक्तं वापि, एवमावाहन पात्रम्, तथा पाद्याचमन-पात्रोदक पात्रम्, प्रत्येकं शंखंवाऽऽहरेत् ॥

## पुष्पपात्रस्य लक्षणम्

पुष्पपात्रस्य विस्तारं चतुर्विंशत्यंगुलं, द्व्यंगुल भित्युत्सेधम्, अर्धांगुलमोष्ठं, पादंषण्मात्रं, सुवर्णाद्यैरेवं कारयेत्, अलाभेनालिकेर-पत्रैस्तालपात्रैर्वा फेलावत्कारयेत् ।

## गन्धपात्रम्

गन्धपात्रस्य विस्तारं वेदांऽगुलं, तस्योदर विशालं पंश्चांगुलं, आस्यतारं वेदांगुलं, तत्पिधानं यथोचितं कारयेत् ॥

## धूपपात्रम्

धूपपात्रं ताम्रेण पित्तलेन वा षडंगुलविस्तारं, तावदेवोत्सेधं, ओष्ठमर्धांगुलं, बाह्येऽष्ट दलान्वितम् अधस्ताद्द्विपादं, तदुत्सेधंद्व्यंगुलम् अष्ठांगुलायतंदंडं, द्व्यंगुल परीणाहंद्विवक्त्रं, तद्दण्डपुच्छे द्व्यं-गुलेनेभपादवदेक पादं वा कुर्यात् । अथवा पादं त्र्यंगुलोत्सेधं, पश्चां-ऽगुलविस्तारं पद्माकारं, तदूर्ध्वेसमांगुलायामं, षडंगुलपरीणाहं, तदूर्ध्वे पूर्ववत्पात्रंकृत्वा तद्पिधानं यथार्हमग्न्यंगुलोच्छ्रयं मुकुलाकार मनेक-सुषिरयुक्तं शेषं युक्त्यैव कारयेत् ॥

## दीपपात्रम्

दीपपात्रं शरांगुलविस्तारम्, अर्धांऽगुलोष्ठम्, अश्वत्थपत्राकारम्, अष्टदिक्षुचतुर्दिक्षु एकस्यां दिशिवा वर्त्याधारयुतं धूपपात्रवत् दण्डं, पादं वा, कुर्यात् ॥

## घण्टा

घण्टाऽऽस्यविस्तारंषडंगुलं, तत्समोत्सेधंतन्मूल विस्तारंविषयां ऽगुलम्, एकांगुलं शिखरं, चुतुर्यवंगलोत्सेधं, जिह्वावेदांगुलायता, वर्त्ति-वत्षडंगुलंदण्डोच्छ्रयं, दण्डाग्रे चक्रं वीशं वा कृत्वा शेषंयुक्त्यैव कारयेत् ॥

## महाघण्टा

महाघण्टास्यविस्तारमष्टांगुलं, तत्समोत्सेधं, तन्मूलविस्तारंषडंगुलं, गलंत्र्यंगुलोन्नतंषडंगुलपरीणाहं, पट्टिकाद्वयसंयुक्तमोष्ठमेकांगुलं, शिखरोच्चं द्व्यंगुलं, नाहंसमांगुल, सुषिरयुक्तं, चतुर्नाडिसमायुक्तं, तारार्धवर्तिताऽऽनाहं, जिह्वानवांऽगुलायता, तच्छिखरेवलयोपेतं, शेषंयुक्यैव कारयेत् ।

## अर्घ्यपात्रम्

अर्घ्यपात्रस्य विस्तारंयुगांऽगुलं द्व्यंगुलोत्सेधं, तत्पृष्ठपादं-त्रिमात्रोत्सेधं, तद्धीनं वा कारयेत् ॥

## हविः पात्रम्

हविःपात्रं सौवर्णं, रजतं, ताम्रं, कांस्यंवा, द्वादशांगुलंसमारभ्य षट्त्रिंशदंगुलान्तं त्र्यंगुलवृध्या नवधा पात्रविस्तारम् अर्धांगुलभित्युन्नतं द्वियवमोष्ठविस्तारं, शेषंयुक्त्यैवकारयेत् ॥

## पानीयपात्रम्

पानीयपात्रं सौवर्णं, राजत, ताम्र, कांस्यं वा, विस्तारंषडंगुलं, समांगुलं वा, भित्युत्सेधंत्र्यंगुलं, चतुरंगुलं वा, उदरवलयं दशांगुलं, एका दशांगुलं वा, दर्शनीयं कारयेत् ॥

## ताबूलपात्रम्

मुखवासपात्रं सुवर्णेन, रजतेन, ताम्रेण, दारुणा वा, द्वादशां-गुलविस्तारं, समवृत्तं, घनं द्वियवम्, अर्धांऽगुलंभित्युच्चं, दण्डायामं द्वादशांगुलम्, अष्टांगुलं तद्विस्तारं, मूलादारभ्यमध्ये द्व्यंगुलमष्टां-गुलायामविस्तारं, चतुरंगुलोत्सेधं, पद्माकारं पादं कारयेत् ।

## दर्वी

चतुर्विंशत्यंगुलायामा दर्वी, तदायामं पञ्चधा कृत्वा द्व्यंशमग्रायतं, वस्वंगुलविस्तारम्, एकांशंपुच्छायामम्, अग्रार्धविस्तारम्, अग्राच्च मूलादारभ्य मध्ये द्व्यंगुलक्षयं शेषं युक्त्यैव कारयेत् ॥

## त्रिपादिका

त्रिपादिका चतुर्धा शंखपादिका बकपादिका त्रिपादिका स्थालिपादिका चेति, शंखपादिकोच्चंयुगांगुलं, तत्समंमुखविस्तारं त्रिपाद्युता त्रिवक्रा; बकपादिका मुखतारं षडंगुलं, तच्चतुर्गुणंपादायामम् ईषत्-त्रिभंगिकात्रिपाद सहिता; तन्मूले सिंहपादवत् पात्रपादिका चतुष्षडष्टांगुल विस्तारा समोत्सेधा त्रिपाद्युताऽधस्तात् द्व्यंगुलेनशरावपृष्ठाकारंकारयेत्; स्थालिपादिकाविस्तारमष्टांऽगुलं, तत्समोत्सेधं पादादधस्तात्पादाकारं कारयेत् । स्थालिपादिका मायसीं कारयेदिति केचित् ॥

## पादोदकपात्रम्

पादोदकपात्रमूलं षोडशांगुलं, मुखतारंविंशति मात्रं, भित्युच्चं-समांगुलम्, ओष्ठंदूव्यंगुलविस्तृतं, तच्छरावाकृति, तस्योभयोः पार्श्वयोः मकरास्यवत्, तत्पृष्ठेयुगाऽङ्गुलोत्सेधं, द्विवक्रपादत्रयं, सिंहपादवत्सहजं, शेषंयुक्त्यैव कारयेत् ॥

## आचमन पात्रम्

आचमनपात्रम् आचमनतोयाधारं, द्वादशांगुलोत्सेधं, तन्मूलं-षडङ्गुलायामविस्तारम्, आस्यतारमादित्यांऽगुलम्, ओष्ठमेकाऽङ्गुलविस्तारं, धुत्तूरकुसुमोपमं, दण्डायासं चतुरङ्गुलं, तदधस्ताच्चतुरङ्गुलायामविस्तारं, त्र्यङ्गुलोन्नतं, सुवृत्तं, पीठं च, शेषंयुक्त्यैव कारयेत् ॥

## गण्डि

गंडिकायाः द्वादशांगुलं कुक्षिविस्तारं; तस्मादध्यर्धमुत्सेधम्, अधस्तात्षडंगुलविस्तारं, त्रिगुणपरिणाहं, कंठंचतुरंगुलविस्तारम्, ओष्ठंद्व्यङ्गुलम्, आस्यतारंचतुरंगुलं, तत्पार्श्वे नासिका द्विमात्रोत्तुङ्गातद्वृत्तं कनिष्ठांगुल्यग्रसमं, तत्पृष्ठं चतुरंगुलविस्तारायामं पादंद्व्यंगुलोत्सेधं, शेषं

युक्त्यैव कारयेत् ॥

## सहस्रधारापात्रम्

नित्यनैमित्तिकाभिषेकार्थं सहस्रधारायुतं पात्रं, सुवर्णाद्यैः चतुर्विंशतिषोडशद्वादशांऽगुलविस्तारायामं, समवृत्तं, भित्त्युत्सेधमंगुलम्, ओष्ठमेकांगुलं, तन्मध्ये चतुरंगुलविस्तारायामंकर्णिकाकारं, तन्मध्येरत्नं सुवर्णं वा निक्षिप्य तत्परितोऽष्टदलोपेतं पार्श्वयोस्तालमात्रोन्नतं, त्र्यंगुलविस्तृतं, गण्डिकाद्वयम् अग्रंमुकुलाकारं समुष्टिकं वा कारयेत्। गण्डिकारहितं वा कारयेत् ॥

## शङ्खनिधिपद्मनिधी

शङ्खपद्मसमाकारे पात्रे द्वे आढकसंपूर्णे तदर्धसंपूर्णे वा पार्श्वे षड्विंशत्यंगुलायतं, षडंगुलपरिणाहं, तज्जलनिर्याणमार्गयुतं नालं कृत्वा शेषंयुक्त्यैव कारयेत् ॥

## दीपाधारपात्रम्

दीपाधारं ताम्राद्यैः एक हस्तादि नवहस्तांतमुत्सेधं नवधा भवति; तच्छरांशैकांशंपादविस्तारं, तदर्धमुत्सेधं, समवृत्तं, पद्माकारं, तदष्टांशोनमाज्यधाराविस्तारं, तदूर्ध्वेमुकुलमष्टांशैकांशं, मध्ये च एकत्रिपञ्चसप्तनवैकादश त्रयोदशपञ्चदशसंख्यैराज्यधारैर्युक्तं, मध्येनानापट्टिकाभिर्नानाकुंभैर्युक्तं, शेषं युक्त्यैव कारयेत् ॥

## दीपाधारप्रतिमा

आज्यस्थालीं शिरसा पाणिभ्यां वा वहतो नम्रकायान्पुरुषान् स्त्रियोवापि कारयेत् ॥

## दीपमाला

द्वारपार्श्वयोः ताम्रेण अयसा दारुणा वा दीपमालादण्डं द्वारसमोत्सेधं, चतुरङ्गुलविस्तारं, त्र्यंङ्गुलघनं; वेदाऽङ्गुलायतान्, त्र्यङ्गुलविस्तारान्, द्व्यंगुलनालान्, दीपाधारान् दण्डेन संघट्टितान्कारयेत् ॥

## करदीपपात्रम्

अयसा हस्तमात्र, मेकांगुलपरिणाहं, वक्रसहितम्, अग्रेदीपाधारां-

धुत्तूरपुष्पोपमाम् आस्य तारंत्र्यंगुलं, चतुरंगुलं वा गर्त्तंचतुरंगुलं यवमात्रघनम्, अधस्ताद्दारुणामुष्टियमं, यमद्वयं वा संयोज्य एवंह स्तदीपं कारयेत् ॥

## नीराजनपात्रम्

अथ नीराजनपात्रं हेमरजततांम्रकांस्यानामन्यतमेन चतुर्विंशाति-षोडशद्वादशांऽगुलविस्तारं, समवृत्तम्, अर्धांऽगुलभित्युच्चं, तत्सम-सीमाविस्तारं, पात्रमध्ये त्रिभागैकभागेनाऽब्जदलयुतम्, एकांऽगुलोन्नतं तत्कर्णिकामध्ये त्र्यंगुलोत्सेधम्, एकांऽगुलंपरिणाहं, मध्या (ध्यमा) दिनवदिक्षु दीपाधारयुक्तं, मध्येमध्ये यमम् एवसंयोज्य तत्पृष्ठे षट्चतुरंगुलाऽऽयतविस्तारंपादं योजयेत् ॥

## दर्पणम्

दर्पणं शुद्धेनकांस्येन नवैकादशत्र्ययोदशांऽगुलविस्तारायामं, पूर्ण-चन्द्राकारं, नालमष्टांऽगुलं, द्वादशांऽगुलंवा, नानापट्टिकासहितंकारयेत् ।

## पादुका

पादुकां सुवर्णरजतताम्राणामन्यतमेन त्रिमात्रादि सप्तमात्रान्तम्, अर्धांऽगुलवृध्द्या त्रित्रिभेदं पादुकायामं, तदर्धमग्रविपुलं, तन्मध्यंतत्पादहीनं, तदुत्सेधम्, आयामतुरीयांशं, तत्त्रिभागद्विभागंखुरं, शेषमूर्ध्वदलम्, अङ्गुष्ठोच्चं, तलोच्चं, चतुर्भागं, तच्छरांशयुगांशनालं, शेषंपुष्पम्, अंगुष्ठोच्चसमं, पुष्पविस्तारं, शेषंयुक्त्यैव कारयेत् ॥

## जलद्रोणी

जलद्रोणीं सौवर्णीं राजतीं ताम्रमयीं वा भारजलै द्विभारजलैः त्रिभारजलै र्वा संपूर्णां सुदृढां, निर्विवरां सुवृत्तां, चतुरश्रां वा, ग्रीवाहीनां, पार्श्वयोर्वलयसंयुक्तांमृण्मयींवलयविहीनां सुग्रीवां; शेषंयुक्त्यैव कारयेत् ॥

## तरङ्गम्

तरङ्गं क्षौमपट्टदुकूलपटकार्पासै र्वा द्वादशहस्तायतैः पञ्चभिः द्वादशभिः नवभिर्वा नवाऽम्बरैर्युक्तम् आस्य रज्वासमायुक्तं नानारूपान्वितं श्वेतं वा कारयेत् ॥

## स्तम्भवेष्टनम्

स्तंभवेष्टनं तत् स्तंभायामसमं, तदर्धविस्तारं क्षौमाद्यैःकारयेत् ॥

## वितानम्

वितानं तत्पंङ्क्त्या यामविस्तारसमं, नानारूपान्वितं वो कारयेत् ॥

## ध्वजः

ध्वजं त्रिपञ्चसप्ताष्टदशद्वादशकरायतं, षट्पञ्चचतुस्त्रितालविस्तारं, श्वेतपीतश्यामरक्ताभं; हस्तमात्रायामंशिखरं, हस्तायामैर्द्वित्रिपास्संयुक्तं, तिर्यग्वेत्रद्वययुतं, घण्टासहितं, तद्विगुणायतयष्टिसंयुक्तं कारयेत् ॥

## पताका

पताकां तथैव विंशत्यंगुलविस्तारां, त्रिंशदंगुलायतां क्षुद्रध्वजं-पञ्चांगुलविस्तारं, द्वादशांगुलायतवेत्रद्वययुतम्, अन्यत्पूर्ववत्, शिखरे-रज्जुयुक्तंकारयेत् ॥

## यवनिका

यवनिकां द्वारविस्तारसमविस्तारां, तदध्यर्धायामां, श्वेतवस्त्रेण कारयेत्

## छत्रम्

छत्रं चतुस्तालं, समवृत्तमधोमुखं, वैणवेन तन्तुना बन्धनं कृत्वा वस्त्रेणाऽऽच्छाद्य कल्कंप्रलिप्य मुक्तादामयुतं, सरत्नहेमसंछन्नं, हेम-मकुटोपेतमुत्तमं; वस्त्रेणाऽऽच्छाद्यधवलं कृत्वा ताम्रपित्तलमकुटोपेतं मध्यमं; दारुमकुटोपेतमधमं; यथार्हंनालंदंडं च कारयेत् ॥

## पिञ्छम्

पिञ्छं चतुस्तालविस्तारायामं, सुवृत्तं, किंचिदूर्ध्वमुखं, छत्र-वद्वस्त्रेणाऽऽछाद्य मयूरपिंछैर्बाह्यमभ्यंतरं तत्समंचाऽऽच्छाद्य पूर्ववन्म-कुटनालदण्डं च कारयेत् ॥

## जिनछत्रम्

जिनच्छत्रं षट्तालविस्तारं, समवृत्तम्, अधोमुखं वैणवेनतन्तुना संक्षे

पविस्तीर्णयोग्यं, वस्त्रेण बंधनं कृत्वा तदुपरिक्षौमाद्यैस्संछाद्य परितस्तालमात्रं लंबनं कृत्वा पूर्ववन्मकुटयंत्रनालदण्डैस्सहैव कारयेत् ॥

## वर्षछत्रम्

वर्षछत्रमष्टतालविस्तारायामं, वृत्तं, चतुरश्रं वा वेणवेनतन्तुनाऽऽबध्य वस्त्रेणाऽऽच्छाद्य मधूच्छाष्टेनालिप्य अलाभे तालपत्रैराछाद्य पूर्ववन्नालं, शुकनासिकां वा, संयोज्य दण्डाऽग्रे संयोजयेत् ॥

## चामरदण्डः

चामरदंडं सरत्नहेमताम्रजं, दारवं वा, चतुर्विंशत्यङ्गुलायामं, पञ्चाऽङ्गुलनाहं, नानापट्टिकाकुंभसंयुक्तं, नानामण्डनसंयुक्तं च कृत्वा चमरीश्वेतवालैः यथा योगं यथाशोभं संयोजयेत् ॥

## मयूरव्यजनदण्डः

मयूरव्यजनस्य दण्डायामं पूर्ववद्विचित्रितं युक्त्या कृत्वा पिञ्छैः छन्नंछन्नंकृत्वा यथाशोभं यथा योगं कारयेत् ॥

## क्षौमादिव्यजनम्

क्षौमादि व्यजनविस्तारायामं चतुर्विंशतिषोडशद्वादशाऽष्टांगुलं समवृत्तं वेणुनाकृत्वा क्षौमाद्यैर्वेष्टयित्वा दण्डायामं त्रिगुणं, यथार्हनाहकृत्वा दण्डाग्रे संयोज्य नाना तंतुभिर्विचित्रितं कारयेत् ॥

## शिबिका

शिबिकाविस्तारद्वि(त्रि)गुणं कूटोत्सेधं तद्विधाकृत्वैकांशं पादायामं एकांशं शिखरं युक्त्या संयोज्य सुवर्णेनबर्हिपिञ्छैर्वा संछादयेत् ॥

## रथलक्षणम्

रथलक्षणं पञ्चसप्तनवैकादशतालविस्तारायामं तद्द्विगुणोत्सेधं मंटपाकारं, कूटाकारं वा, रथायामत्रिगुणमाधारं, चक्रस्याऽऽयामविस्तारम् उत्सेधार्धं, समवृत्तं, स्थलस्याऽलङ्कारंशिबिकालङ्कारवत् कारयेत्, आधारेपूर्वाऽपरस्थलंकृत्वा पूर्वेमुकुलंनालं च संयोज्य रथोत्सेधंपञ्चधाकृत्वा सार्धांशमधिष्ठानं, कुमुदकुंभपट्टिकाद्यैरुपशोभितं, शिबिकावदलङ्कारैर्युक्तं,

द्व्यंशंपादं, सार्धांशंशिखरं कारयेत्, अत्रानुक्तं सर्वं रंगडोलादीनि च शिल्पिशास्त्रोक्तविधिना कारयेत् ॥

## खट्वा

खट्वाविस्तारं दन्तै दारुसारैर्वा चतुर्विंशतिविंशति षोडशद्वादशाऽङ्गुलम्, अर्धाधिकपादोनद्विगुणं, द्विगुणं वा, आयामविस्तारार्धपादोत्सेधं, तत्समंनाहं, चतुर्भिः षड्भिः अष्टाभिर्वा पादैर्युक्तं, सिंहव्यालगजाकारैर्युक्तम् ईलिकाविस्तारंरसाऽङ्गुलं, तदर्धंबहलं, तत्तारंत्रेधाकृत्वा मध्ये पट्टिकां, तद्बाह्येकपोताकृतिं कारयेत्, ऊर्ध्वतोऽधस्ताच्च गुलिकाद्यैरुपशोभितभित्तिकम्, अभ्यंतरेचाऽऽधारमाय संसुषिकानाराचं संयोजयेत्, त्र्यंगुलविस्तारां यथार्हायामां कक्ष्यां कार्पासतन्तुनाकृत्वा खट्वामावेष्टयेत् । खट्वायामविस्तारसमं, दशाऽष्टषडंगुलोत्सेधम्, अण्डजाद्यैः क्षौमाद्यैर्वा संपूर्णं वा कारयेत् ॥

## उपधानम्

उपधानं त्रिंशदङ्गुलविष्कंभं, त्रिगुणपरिणाहं, यथोचितायामं, पादोपधानं हस्तोपधानं युक्त्या कृत्वा युगपादं द्वादशद्वयांगुलोत्सेधम्, अष्टांऽगुलविष्कंभं, पालिकाकारवत्कृत्वा संयोजयेत् ॥

## पुष्पफलकम्

पुष्पपलकां खदिराऽर्जुनमधूकाद्यैश्शुभवृक्षैः अष्टषट्चतुस्तालविस्ताराम् अष्टषट्चतुर्हस्तायतां चतुस्त्रिद्विमात्राबाहल्यां कृत्वा युगपादंद्वादशांऽगुलोत्सेघंअष्टांगुलविष्कंभं पालिकावत् कृत्वा संयोजयेत् ॥ विष्टरंचतुर्विंशत्यंगुलायामवस्तारं समचतुरश्रं वृत्तं वा वेदांऽगुलंबाहल्यम्, मुष्टिंषडंगुलायामं, सप्तांऽगुलपरिणाहं, शेषं युक्त्या कारयेत् ॥

## विष्टरम्

विष्टरं चतुर्विंशत्यङ्गुलायामविस्तारं समचतुरश्रं वृत्तं वा वेदाङ्गुलबाहुल्यं मुष्टिं षडङ्गुलायामं सप्ताङ्गुलपरीणाहं शेषं युक्त्या कारयेत् ।

## आसनविष्टरम्

आसनविष्टरं शय्याविष्टरवत् पादहीनं समं वा कारयेत् ॥

## स्नानविष्टरम्

स्नानविष्टरं द्वात्रिंशदष्टाविंशतिचतुर्विंशतिषोडशद्वादशांष्टांगुल-विस्तारायामं, समचतुरश्रं विस्तारार्धं, त्रिपादं वा, पादायामं, यथार्हं नाहं, चतुष्पादैर्युक्तं, तस्योपरि चतुर्दिशां चतुरङ्गुलोत्सेधवेदिकां वामपार्श्वेवारि-मार्गं युतं कारयेत्, विधिविहीनं वा स्नानविष्टरमेवं कारयेदिति केचित् ॥

## भेरिका

भेरिकां शुभैर्वृक्षैः, चतुस्तालमायामं, तत्पादोन द्विगुणं द्विगुणार्धंवा परिणाहं, मुखतारं, द्वादशत्रयोदश चतुर्दशाऽङ्गुलं, सुवृत्तं, अर्धाऽङ्गुल-बाहलम्, उभे मुखेचाऽऽयसपट्टेन बन्धयित्वा नवसप्तवाकीलान् संयोज्य अग्रमूलं वामदक्षिणं च स्मृत्वा चन्द्रादित्यौ मुखद्वये वरुणं वलये वरुणंचर्मणि प्रजापतिं प्रहरणे अश्विनौशद्बे ब्रह्माणं वा; आंत्रायांनागान् कीलेषु सप्तर्षीन्, नवग्रहान् वा; भेरिकायां भूतीशं स्मृत्वा एवं कारयेत् ।

## कर्त्रिकाफलकम्

कर्त्रिकाफलकायामम् अष्टादशांगुलैर्वर्तुलंभ्रमीकृत्य अर्धं त्यक्त्वा अर्धंसंगृह्य अर्धचन्द्राकारस्य मध्ये रसांगुलेन सुवृत्तंभ्रमीकृत्य तन्मध्ये तद्विस्तारोत्सेधभित्तियुतं गर्तं (वा) कृत्वा पार्श्वयोरुभयोस्त्र्यंगुलविस्तृतां द्व्यंगुल बाहल्यां पट्टिकां पुष्पवल्लियुक्तां कारयेत्; तद्गर्तभित्तिबाह्यं यवद्वयं तदग्रद्वये मकरास्यं तत्पृष्टे द्वादशांगुलायामं द्विवक्त्रम् अष्टांऽगुलपरिणाहम्, अश्वपादवत् एकमंघ्रिंकृत्वा संयोज्य शेषं युक्त्यैव कारयेत् ॥

## उलूखलम्

उलूखलस्याऽर्जुनजंब्वाद्यैश्शुभैर्वृक्षैः मानांऽगुले न चतुर्विंशत्यंगुलं षोडशांगुलायामं तत्त्रिगुणं नाहम् आयामार्धंपञ्चभागं, त्रिभागंद्विभागंएक-भागंवागर्त्तम्, उत्सेधंपंञ्चधाकृत्वा द्विभागंपादम्, ओष्ठविस्तारंषट्पंचचतुरं-गुलं शेषंगर्त्तम्, एवं कारयेत् ॥

## मुसलम्

खादिराद्यैर्वृक्षसारैः मात्रांगुलेन अष्टनवदशातालायामं द्वादशांऽ-गुलपरिणाहम्, अवक्रं निर्व्रणं कृत्वा ऊर्ध्वाधश्चतुरंगुलमात्रेण अयः पट्टमचलं संयोजयेत्, एवं मुसलं कारयेत् ॥

## दात्रम्

दात्रायामं षोडशांऽगुलं द्विमात्रविस्तरं यवबाहल्य मास्यं सुतीक्ष्णं दारुणामुष्टिं द्वादशांगुलं तदर्धपरिणाहं कृत्वा संयोज्य अयः पट्टेन सुदृढंबंधयेत् ॥

## खनित्रम्

खनित्रायाम त्रिपञ्चांऽगुलमेकवक्रं त्रिमात्रविस्तारम् आस्यतारं चतुरंगुलं पंचांगुलं वा तस्यमूलं सुषिरं त्र्यंगुलविष्कंभं दारुणामुष्टि चतुस्तालमानेन कारयेत् ॥

## पेषणी

पेषणीं शिलामया चतुर्विंशति विंशति षोडशांगुलायामां तदर्धविस्तारां त्रिपादविस्तारां वा विस्तारार्ध समोत्सेधां तदुत्सेधं सप्तधाकृत्वा त्र्यंशांपादं चतुर्भागम् ऊर्ध्वपट्टिकाम्; ऊर्ध्वपेषिण्यायामं तद्विस्तारसमं नाहम् आयामात् पादाधिकं षड्भागैकं मुष्टिं शेषं युक्त्यैवकारयेत् ।

## यन्त्रिका

यंत्रिकाम् अयसा मध्यमांगुलिपरीणाहां द्विवक्रां कृत्वा तन्मूले मुकुले मुकुळं, वलयं वा, युक्त्या कारयेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चना कल्पे पात्रपरिच्छदादि पूजोपकरणलक्षणं नाम चतुर्विंशः पटलः ॥२४॥

# अथ पंचविंशः पटलः

अथ पात्रपरिच्छदादीनां संस्कारं वक्ष्ये-यजमानानुकूले शुभेनक्षत्रे देवेशं प्रणम्य अङ्कुरानर्पयित्वा आलयाभिमुखे चौपासनाग्निकुण्डंकृत्वा आघारं हुत्वा अग्नेः पश्चिमतो देवेशं संस्थाप्य सप्तविंशतिविग्रहैरभ्यर्च्य देवाभिमुखे धान्यस्थण्डिलं कृत्वा नववस्त्राण्यास्तीर्य पात्रादीनि पञ्चगव्येन प्रोक्ष्य प्रक्षाल्य अभ्युक्ष्य स्थण्डिले सन्यस्य वास्तुहोमंहुत्वा पर्यग्निं च कारयेत्; अग्निंपरिस्तीर्य वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं तत्तधधिदेवत्यंमूर्तिमंत्रंच जुहुयात्; तत्तदधिपान्, देवेशं च, पात्रादिषु समावाह्य अभ्यर्च्य पुण्याहं वाचयेत्;

यजमानआचार्यं संपूज्य दक्षिणांदद्यात्, अतोदेवादीन् अष्टाक्षरं च, जपन् देवसन्निधौ तत्तत्कर्मणि संयोज्य देवमभ्यर्च्य यथाशक्ति हविर्निवेद्य ब्राह्मणान् भोजयेत्, अधिदैवते अज्ञाते सर्वत्र सेनेशमर्चयेत् । एतत्सामान्यम् ॥

## अथाऽऽभरणादीनां विशेषविधिः

अथ विशेषतो वक्ष्ये-मकुटाद्याभरणजालं नानारत्नयुक्तं सुवर्णेन तत्तदंगानां योग्यमानेन कारयेत् । देवमभ्यर्च्य अभिमुखे सभ्याग्निकुण्डंकृत्वा आधारंहुत्वा वास्तु होमंहुत्वा पर्यग्निंकारयेत्, पञ्चगव्येनप्रक्षाल्य सप्तकलशैः संस्नाप्यपू र्ववत्स्थण्डिलं कृत्वा नववस्त्राण्यास्तीर्य सुवर्णपात्रे तानिसंन्यस्य तत्तदधिदेवान्, देवेशं च, अभ्यर्च्य अग्निंपरिस्तीर्यतत्तद्दैवत्यं, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, सर्वदैवत्यं च, हुत्वा स्नपनोक्तविधिना देवेशं संस्नाप्य वस्त्रमाल्यैरलंकृत्य पुण्याहं वाचयेत्, आचार्यं संपूज्य दक्षिणांदद्यात्। चतुर्दिक्षु चतुर्वेदैः स्तोत्रनृत्तगीत (जय) वाद्यैः स्तोत्रैर्जय शद्बैश्च संस्तूय आचार्यो देवेशंप्रणम्य 'आत्मसूक्तं' जप्त्वा देवं ध्यायन् एकाऽक्षरादि पुरुषसूक्तं जप्त्वा 'भूतोभूते' ष्वितिमकुटाद्याभरणादि तत्तत्अलंकृत्य आस्थानम (ण्ट)ण्डपे संस्थाप्य स्नपनोक्तविधिना देवेशं संस्नाप्य अभ्यर्च्य महाहविः, प्रभूतं वा, निवेद्य अर्चापीठे संस्थाप्याऽर्चयेत् ।

सहस्रधारां, शंखपद्मनिधी च विधिनाकृत्वा आलयाभिमुखे गोमयेनोपलिप्य औपासनाग्निकुंडं कृत्वा आघारंहुत्वा अग्नःपश्चिमतो देवंसंस्थाप्याऽभ्यर्च्य अभिमुखे धान्यपीठं कृत्वा नववस्त्राण्यास्तीर्य पञ्चगव्येनप्रक्षाल्य सन्यस्य वास्तुहोमं हुत्वा पर्यग्निं च कृत्वा वैष्णवं, विष्णुसूक्तं सौम्यं निध्योर्मूर्तिमंत्रंच; हुत्वा पात्रे चंद्र मण्डलं ध्यात्वा पद्मे पद्मनिधिं शंखे शंखनिधिं समभ्यर्च्य पुण्याहंवाचयित्वा अग्निं विसृजेत् । आचार्यंपूजयित्वा दक्षिणां दद्यात् देवेशंसंस्नाप्य अष्टोपचारैरभ्यर्च्य वस्त्रमाल्यगन्धाद्यैरलंकृत्य नृत्तगेयवाद्यैः स्तोत्रै र्जयशद्बैश्च घोषयित्वा आचार्यः प्राङ्मुख, उदङ्मुखोवा स्थित्वा हस्ताभ्यांपद्ममुद्धृत्य मकुटोपरिधारयन् शंखपद्माख्यपात्रस्थजलं सहस्रधारापात्रस्थपद्मे समर्पयेत्, वसोःपवित्रं, पुरुषसूक्तं वा, समुच्चार्याऽभिषिच्य पश्चादाचमनं दत्वा प्लोतेनविमृज्य अभ्यर्च्य हविर्निवेद्य नित्यनैमित्तिकादिष्वेवं कारयेत्, एतत् स्नपनंसर्वदोषोपशमनं सर्वसंपत्करमिति विज्ञायते ॥

## रक्षा दीपविधिः

रक्षादीपविधिं वक्ष्ये-नीराजनपात्रं कृत्वा पूर्ववत्संस्कृत्य तत्पात्रे तदाधारे घृतेन, तैलेन वा, पिचुवर्त्तियुतंदीपं, 'शुभ्रज्योति' (वै०म०६) रिति संदीप्य दिक्पिण्डार्थं हरिद्राचूर्णितेनाऽन्नेन दशपिंडान्, पञ्चपिंडान्वा, मुष्टिमात्रं दृढतरं कृत्वा अलाभे अक्षतं पुष्पं वा गन्धद्रव्यं च पृथक् पात्रे संगृह्य देवेशं संपूज्य शंखध्वनियुतं सर्ववाद्यैः, स्तोत्रैः, स्वस्तिघोषैः, सह यजमानो, देवदासी वा, तत्पात्रंशिरसा धृत्वा शनैश्शनैर्गत्वा आलयंप्रविश्य अभिमु खेसंस्थापयेत्; आचार्यः पात्रे चन्द्रं दीपे श्रियंचाभ्यर्च्य देवस्यपादयोः पुष्पांजलिंदत्वा तत्काले शंखनादस मन्वितं, नृत्तगेय वाद्यैर्युक्तं, 'श्रिये जात' (ऋ०सं०७-४-४) इतिबिंबस्य मूर्धादि पादपर्यन्तं प्रणवाऽऽकारं त्रिःप्रदक्षिणं कारयित्वा पूर्वस्थानेन्यस्य देवेशंप्रणम्य 'अतोदेवा' (ऋ०सं०१-२-७) दिना प्रागादि दिक्पिण्डान्विसृज्य पाद्याचमनं दत्वा 'तद्विप्रासः, (ऋ०स०१-२-७) 'इमेगन्धा' (वै०म०प्रं०६) इति गन्धेनोर्ध्वपुण्ड्रं कृत्वा अष्टाक्षरेण पुष्पांजलिं दद्यात्; पूर्ववत्त माहृत्य आलयाद्बहिर्गत्वा भूतपीठस्य दक्षिणपार्श्वे निक्षिपेत्; एवं साये प्रच्छन्नपटोद्धरणे च उत्सवे स्नपने बल्युत्सवे च अन्येषु पुण्यर्क्षेषु अर्चनान्ते कारयेत् ॥

## पादुकासंस्कारः

अथपादुकासंस्कारं वक्ष्ये-अवटे, जलद्रोण्यां वा, वरुणमभ्यर्च्य जलाधिवासं कृत्वा पूर्ववदौपासनाग्निकुण्डं कृत्वा आघारंहुत्वा आस्थान-मंटपेधान्यराशौ वस्त्रोपरि पादुके सन्यस्य वास्तुहोमं हुत्वा पर्यग्निं च कारयेत्; शुद्ध्यर्थं प्रोक्षणैः प्रोक्ष्य पुण्याहं कृत्वा अग्निंपरिस्तीर्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं, शैषिकं च हुत्वा अग्निंविसृजेत्; आचार्यदक्षिणां दद्यात् । सर्वालङ्कारसंयुक्तं स्वस्तिसूक्तेन आलयं प्रदक्षिणीकृत्य देवाभिमुखे सन्यस्य तयोर्मध्ये शेषमभ्यर्च्य विष्णु सूक्तेन देवस्यपादयोस्संयोज्य ततो देवं सप्तविंशतिविग्रहै रभ्यर्च्य महाहविः प्रभूतं वा, निवेदयेत्, ततःप्रभृति विष्णोरुत्सवकाले शिरसाधारयन् अग्रतोगच्छेत्, शिबिकायां, हस्ते वा समारोप्य नयेदिति केचित्; नित्यं बल्यन्ते बलिबेरपीठे संन्यस्य पाद्याद्यर्घ्यान्तं पूजयित्वा अभिमुखे पादुके सन्यस्य पूर्ववच्छेषमभ्यर्च्य पादुके संयोज्य देवेन सहाऽभ्यंतरं प्रविश्य गर्भागारेसंन्यसेत् ॥

### वाहनादीनां संस्कारः

अथवाहनादीनां संस्कारं वक्ष्ये-पञ्चगव्यैस्संशोध्य वास्तुहोमंहुत्वा पर्यग्निंकारयेत्; औपासनाग्निकुण्डं कृत्वा कुंभंसंसाध्य तत्तदधिदैवं, देवेशं च, ध्यात्वा आवाह्य सप्तभिः कलशैः संस्नाप्य मण्टपे, प्रपायां वा, धान्ये स्थाण्डिलं कृत्वा नववस्त्राण्यास्तीर्य उपरि संन्यस्य नववस्त्राद्यैराच्छाद्या पुण्याहं वाचयेत्; अग्निंपरिषिच्य वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, तत्तदधि-देवत्यं, मूर्तिमंत्रांश्च व्याहृत्यन्तं हुत्वा अग्निंविसृ जेत्; आचार्यं पूजयित्वा दक्षिणां दद्यात्; देवेशं प्रणम्य आचार्यःसमाहितो देवं ध्यायन् वाहनेषु गरुडं, शयनेषुशेषं, आसनेषु शिवादीन् अन्येषुतत्तदधिदेवानावाह्य अभ्यर्च्य देवेशंप्रणम्य शकुनसूक्तेन देवमादाय 'भूरसिभू' (वै०म०प्र०६) रित्यादिना शयनादिषु प्रतिष्ठाप्य 'प्रतद्विष्णु' (ऋ०सं०२-२-२४) रिति पुष्पाञ्जलिं दत्वा देवेशं प्रणम्य अर्घ्यान्तमर्च्याऽलंकृत्य शकुनसूक्तंसमुच्चार्य सर्वालंकारसंयुक्तं ग्राममालयं वा प्रदक्षिणं कृत्वा कारयित्वा आस्थानमण्टपेसंस्थाप्य नृत्तगीतवाद्यैर्विनोदंकारयेत्; शुद्धस्नपनविधिना संस्नाप्य अभ्यर्च्य महाहविः प्रभूतं निवेद्य अर्चास्थाने संस्थाप्याऽर्चयेदित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे पात्रपरिच्छदादि संस्कारविधि र्नाम पञ्चविंशः पटलः ॥२५॥

## अथ षड्विंशः पटलः

### अङ्कुरार्पणविधिः तत्पात्र स्वरूपं च

अथ अङ्कुरार्पणविधिं व्याख्यास्यामः-भूपरीक्षादि कर्माणि यस्मिन्नहनिकारयेत् तद्दिनात्पूर्वं नवमे, सप्तमे, पञ्चमे, (तृतीये वा) त्र्यहेवा अंकुरार्पणंकुर्यात् ।

अंकुरार्पण पात्राणि पालिकाकुम्भशरावान् सुवर्णरजतताम्रमृण्मयान्वा; ब्राह्मणोयजमानश्चेत् प्रत्येकंषोडश, क्षत्रियश्चेत् द्वादश, वैश्यश्चेत् अष्टौ, शूद्रश्चेच्चत्वारः, सर्वेषां चतुरो वा गृह्णीयात् ।

पालिकोत्सेधं मात्रांगुलेन चतुर्विंशत्यंगुलं, समवृत्तं तदुत्सेधं षडंशं कृत्वा एकांशंपादं, त्र्यंशंनालं, द्व्यंशंपालिकापादोदरविष्कंभंदशांऽगुलम्,

अर्धांऽगुलभित्तिकं पद्माकारं, नालस्योदरविष्कंभंचतुरंगुलम् अर्धांऽगुलभित्तिकं, मुखस्योदरविष्कंभं षोडशांगुलमर्धांगुलभित्तिकं, नालान्तंक्रमात् संक्षिप्तम्, ओष्ठतारम् एकांऽगुलम्, एवं पालिका; ।

कुम्भस्योदरविष्कम्भं षोडशांऽगुलमर्धांगुलभित्तिक, मुखस्योदरविष्कंभंपञ्चांगुलमर्धांगुलभित्तिकं, कण्ठोत्तुंगमेकां ऽगुलम्, ओष्ठवलयमेकांऽगुलं कुंभाकारं, चतुर्दिक्षुभागविस्तृतं द्वारयुतम् अन्यत्सर्वंपालिकावत् कारयेत् ।

शरावाणामोष्ठमेकांगुलम्, एतदेवविशेषः अन्यत्सर्वं पालिकावत्कारयेत्, अशक्तश्चेद्यथालाभमानेनकारयेदित्येके, सद्य एवासन्ने पालिकादीनामलाभे शरावादि पात्राणि संगृह्य पालिकादिवत्कृत्वा कारयेत्, अथवोपयुक्तां जलेन प्रक्षाल्य पर्यग्निं कृत्वा कारयेदित्येके ॥

## धान्यादि

धान्यानि - शालिव्रीहियवमुद्गमाषप्रियंगुगोधूमसर्षपचणकतिलतिल्वकमसूराणि; एतेषामलाभे यथालाभमाहृत्य संशोष्य सारंसंगृह्य तस्मिन्दिनेपूर्वाह्णे तोयेनिक्षिप्य आलयाभिमुखे च उत्तरेवा, ऐशान्यां वा, मण्टपादीन् संकल्प्य, वितानध्वजदर्भमालातरंग स्तम्भवेष्टनाद्यैरलंकृत्य गोमयेनोपलिप्य पैष्ट्याभूमिमलंकृत्य दीपानुद्दीप्य आचार्यःशिष्टैस्सार्धं सायंसंध्यामुपासीत ॥

## यजमानप्रार्थना मण्डलम् तत्कोष्ठदेवताः

यजमान आचार्यं संपूज्यकार्यमावेद्य कर्मेदं मे कुरुष्वेति याचयेत्; आचार्यः तत्तत्कर्मकरिष्यामीति संकल्प्य आरभेत्, देवेशं प्रणम्य विशेषतोऽभ्यर्च्य अलंकृते मण्टपे यथेष्टमानेन सपिष्टैः प्रागग्रै रुत्तराग्रै रष्टभि स्सूत्रै रेकोनपञ्चाशत्पदंकृत्वा मध्यपदे (पाठे) ब्रह्माणमभ्यर्च्य तत्परितश्चतुर्विंशतिपदं विसृज्य बाह्यपदे च ऐशानादि 'ईशं पर्जन्यं जयन्तं माहेंद्रम् आदित्यं सत्य(क) म् अग्निं वितथं गृहक्षतं यमं गन्धर्वं भृंगराजं निर्ऋतिं द्वौवारिकं सुग्रीवं सरित्पतिम् असुरं शोषणं जवनं नागं मुख्यं सोमम् अर्गलम् अदिति' मिति चतुर्विंशतिदेवान् प्रणवादिनमोंऽतं पूर्वंतोयं पुष्पमन्नंपश्चात्तोयं च प्रक्षिप्य अभ्यर्च्य पुष्पादीन् संशोध्य मध्य पदे तालोन्नतं त्रिवेदिसहितं ब्रह्मणः पीठं कृत्वा बाह्यपदे चेंद्रादिषु पदत्रयं द्वारंविभज्य ईशानादि कोणेषु

पदत्रयंद्व्यंगुलोन्नतं तण्डुलै, व्रीहिभिर्वा, यथालाभं दण्डवत्पंक्तिं कृत्वा जयन्ते शेषस्य आदित्ये वक्रतुण्डस्य गृहक्षतेगरुडस्य गन्धर्वेचक्रस्य सुग्रीवेपंक्तीशस्य असुरेभूतेशस्य मुख्येशं खस्य सोमेंऽ कुराधिप (सोम) स्य अर्गलेशान्तस्य च यथा लाभमानेन पीठानि कुर्यात्; मध्ये पदे (पीठे) ब्रह्माणं प्राङ्मुखमभ्यर्च्य शेषादीश्चार्चयित्वा ब्रह्मणः परितोऽष्टसुपदेषु प्रागाद्यैशानान्तं जयां, विजयां, विन्दां, नन्दां, पुष्टिकां, कुमुद्वतीम् उत्पलिकां, विशोकाम् इत्यष्टावप्सरसोऽभ्यर्च्य तद्बाह्यपदे च ऐन्द्रादिषु दिग्देवान् तत्तद्दिक्षुसमर्च येत्, एतेषां यथालाभं हविर्निवेदयेत्, हविषोऽलाभे बलिं वादद्यात् ॥

## अङ्कुराधिपस्थापनम् अङ्कुरार्पणप्रकारः

तदुत्तरे सोमस्याऽभिमुखे धान्यपीठे षोडशप्रस्थसंपूर्णं कालविहीनं नवकुम्भं समादायतन्तुनापरिवेष्ट्याऽद्भिः प्रक्षाल्य तोयेनाऽऽपूर्य वस्त्रेणवेष्टयित्वा तस्मिन् सुवर्णं निक्षिप्य अंकुरधिपंसोमंध्यात्वा तस्मिन् कुम्भे समावाह्याऽभ्यर्च्य हविर्निवेद्य मुखवासंदत्वा निवेदितं व्यवनीय अभ्युक्ष्य पालिकादीन् मृदावालुकाभिर्वा सकरीषमापूर्य तेषां मध्ये प्रत्येकं तन्तुनाबध्वा वस्त्रेणवेष्टयेत्; वस्त्रालाभे दर्भेणब ध्नीयात् ।

ईशानादी ईशपर्जन्यसप्तकेषु अग्निवितथभृंगराजेषु निर्ऋतिद्वैवरिक शोषणेषु जवननागयत्र्यासंस्थाप्य पालिकासु मेदिनीं, छिद्रकुंभेषु राकां, शरावेषु सिनीवालीं, समभ्यर्च्य हविर्निवेदयेत्, (अलाभेबलिंदद्यात्) कांस्यपात्रे बीजानिनिक्षिप्य क्षीरेणाऽभिषिच्य सोमस्याभिमुखेसन्यस्य तेषु सोममभ्यर्च्य पालिकादीनि वस्त्रेणाऽऽच्छद्य पुण्याहंवाचयेत्, आचर्या दिभ्यो दक्षिणां दद्यात्, बीजानि 'सोमंराजान' मित्यभिमृश्य तूर्यघोषसमायुक्तम् आचार्यः प्राङ्मुख उदङ्मुखोवा 'वैष्णवं, विष्णुसूक्तं, सोमराजान' मिति जपन्नंकुरानर्पयेत्, 'एतेशत' मित्यादि वारुणमन्त्रैर्जलसेकं कुर्यात्, आचार्यादिभ्योभक्तेभ्यश्च ताम्बूलं दद्यात् ॥

## अङ्कुरपात्रादीनां गुप्तदेशेस्थापनम्, तत्पूजां च

अंकुरान्सोमकुम्भं च गुप्तदेशे तथाविन्यस्य पालिकादीन् पिधाय नित्यं दीपयुतं त्रिकालं द्विकालम् एक कालं वा, सोममभ्यर्च्यहविर्निवेद-नमत्तमम्, हविर्विना नित्यंदीपार्चनमेवकारयेन्मध्यमम्, सोमकुम्भार्चनंविना कारयेदधमम् ॥

## सद्योऽङ्कुरार्पणप्रकादि

अंकुरार्पणस्य फलम् एवं कर्त्तुमशक्तः सद्य एवाऽऽसन्नेअंकुरार्पणोक्त क्रियाः सर्वाः कृत्वा श्वेततण्डुलैः, पद्माद्यैः श्वेतपुष्पैश्च पालिकादीन् तत्तन्मन्त्रेण पूरयित्वा आरभेत । दिवांऽकुरार्पणं न कुर्यात्, कुर्याच्चेद्विनाशायभवति, एवमंकुरार्पणेकृते देवःप्रीतोभवेत्, अंकुरार्पणहीने कृतंकार्यं सर्वंनिष्फलं भवति, तस्मात्सर्वप्रयत्नेन अंकुरार्पणं कृत्वा सर्वकर्म समारभेदित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमनार्चनाकल्पे अंकुरार्पणविधिर्नाम षड्विंशः पटलः ॥२६॥

# अथ सप्तविंशः पटलः

## प्रतिष्ठामासादिकम्

अथातोभगवतो नारायणस्य प्रतिष्ठाविधिं व्याख्यास्यामः - उदगयने फाल्गुन, चैत्र, वैशाख, तैष्य, ज्येष्ठेषूत्तमम्; दक्षिणायने श्रावणाश्वयुजकार्तिकेषु मध्यमम्; प्रौष्टपदाषाढयोरधमम्, मार्गशीर्षमाघौविवर्जयेत्, उत्तरात्रयरोहिणीश्रवणपुष्यपुनर्वसु स्वाती हस्त चित्ताऽनूराधाऽश्विनीषु, सितेपक्षे पक्षच्छिद्रां विवर्ज्य, कृष्णपक्षे प्रथमाद्वितीयापंचमीषु, सोमगुरु सौम्यकाव्यवारेषु, करणेषुविशिष्टेषु ध्रुवेषुचरेषु वा, विष्टिंमष्टविधांत्यक्त्वा, चरराशिंविहाय, स्थिरराशौ, उभयराशौ वा, श्रेष्ठंविष्णोः प्रतिष्ठांकुर्यात्; आर्द्राऽऽश्लेषमूलनक्षत्रेषु, कृष्णाष्टम्यामुल्कापातेऽशनिपाते दिग्दाहेपांसुलोहितोपलवर्षव्यतीपातभूकंपाऽतिमारुत राजमरणचन्द्रसूर्योपरागयुक्तेषु ऋक्षेषु रात्रौ च परिवर्जयेत् ।

## आचार्यलक्षणम्

वैखानससूत्रेण निषेकादि संस्कारक्रियायुक्तान् विप्रान् वेदविदः शुद्धन् शुद्धित्रयोपेतान् वैष्णवान् वयस्संपन्नान् सुमनस्कान् अर्चनादि सर्वप्रयोगज्ञान् मन्त्रकल्पविदः श्रोत्रियान् अग्निसंपन्नान् आहूय तेषु ज्ञानोत्कटं शुभदर्शनं श्रुतवृत्तशील संपन्नम् एकं गुरुं वरयेत्, हीनदीर्घाऽतिरिक्तांऽगकालमत्सराऽपस्मारकुष्ठोन्मादोदर शर्करामधुमेहादि व्याधियुतान् कुनखश्या-

वदन्तशिपिविष्ट विद्धशेफपाषण्डान् राजपितृगुरु देवब्राह्मणप्राज्ञ वेददूषकान् कुपितान्धबधिरकुब्जवामनायाज्ययाजककुलटा पुत्रहीनाऽति वृद्धाऽतिबालन् अर्थलुब्धान् विरूपकान् अन्यशास्त्रपारंगतान् पाषण्डभक्तान् अस्तमितोदितशयनान् अन्यदेवताभक्तान् विदेशगमनान् नास्तिकभ्रान्तचित्तशठादीन्वर्जयेत्।

## ऋत्विग्लक्षणम् तद्वरणं च

उक्तलक्षणसंपन्नान् षोडश ऋत्विजश्च, अक्ष्युन्मोचनहोमार्थमेकं, वास्तुहोमस्यैकं, पञ्चाग्नीनांपञ्च, अब्जहोमस्यैकं, ब्रह्मसोमऋत्विजौद्वौ, होतारमेकं, स्नानार्थमेकं, सर्वदेवार्चनार्थंद्वौ, स्थापनार्थंद्वौच, एवंवरयेत्; परिवारदेवहोमानामध्वर्यूंश्च वरयेत्, अशक्तश्चेत् यथालाभं वरयेत्,ताननज्ञाप्य तैरनज्ञातः सर्वकार्यं तन्त्रयित्वा करोति, ते सर्वे सुलुप्तकेशश्मश्रुकेशनखाः शुद्धदन्ताःस्नात्वा अघमर्षणं कृत्वा सावित्रीपूर्वं द्वादशसूक्तानि जप्त्वा प्राजापत्यं, पादकृच्छ्रम्, एकाहं वोपोष्य पापंसर्वं सदह्य यावत्प्रतिष्ठान्तं तावद्धविष्यभोजनो दर्भाऽस्तरण शायिनः स्त्रीशूद्रादि संभाषण परिवेषणान्वर्जयित्वा त्रिषवणस्नायिनो जितेन्द्रिया भवेयरितिविज्ञायते ॥

## अक्ष्युन्मोचनम्

अथातो नवबिंबानामक्ष्युन्मोचनम्। प्रतिष्ठादिवसात्पूर्वस्मिन् नवमे सप्तमे पञ्चमे त्र्यहे (तृतीये) द्वितीयेवा अह्नि अमन्त्रकमक्ष्युन्मोचनं शिल्पिनाकारयित्वा पश्चात्समन्त्रकं च कुर्यात्; अर्कराहुसौराणामुदयंत्यक्त्वा (हित्वा) द्विलोचने नक्षत्रे अक्ष्युन्मोचनंकारयेत्।

## कौतुकादीनां पीठसंघातः ब्रह्मादि स्थानेषु रत्नन्यासः

कौतुकादिबिंबानामक्ष्युन्मोचनंचेत् पूर्वेद्युस्तद्दिनेवा पीठसंघातंकुर्यात्, आलयाभिमुखे गोमयेनोपलिप्य पैष्ट्या भूमिमलंकृत्य तन्मध्ये धान्यराशौपीठंसन्यस्य तन्मध्येब्रह्माणमिन्द्रादिग्देवान् तत्तद्दिक्षु तत्तन्नाम्नाऽभ्यर्च्य पुष्पादीन् संशोध्य 'ब्रह्मादेवाना' (वै० म० प्र० ६) मितिब्रह्मस्थाने ब्रह्ममणिम्, 'इन्द्रंप्रणवन्त' मिति इन्द्रे वज्रमणिम्, (वै० म० प्र० ८) 'अग्नावग्नि' (वै० म० प्र० ८) रितिआग्नेय्यां मौक्तिकम्, 'यमोदाधारे' (वै० म० प्र०९ अ० ४) ति याम्येवैडूर्यम्, 'वसवः प्रथम' इति नैर्ऋत्यांशंखजम्, (वै० म० प्र० ९) एतेशत' (वै० म० प्र० ८) मिति

वारुण्यां स्फटिकम्, 'मरुतः परमात्मा' (वै० म० प्र० ९) इति- वायव्यांयुष्यकम्, 'सोमंराजान' (वै० म० प्र० ९) मिति सौम्येचन्द्रकान्तम्, 'ईशान' (वै० म० प्र० ९) इति ऐशान्यां नीलं च क्रमेणविन्यसेत्, अथवा चतुर्दिक्षु पञ्चरत्ननि निक्षिप्य रत्नालाभे सुवर्णंनिक्षिप्य 'भूरसिभू' (वै० म० प्र० ८) रित्यादिना पीठे बेरं संयोज्य पश्चाच्छिल्पि नमाहूय सदृढं कारयित्वा अक्ष्युन्मोचनं कारयेत् ॥

## अक्ष्युन्मोचनम्, दर्शनद्रव्यं च

आलयाभिमुखे मण्टपं, प्रपां वा, अलंकृत्य बिम्बं संस्नाप्य तन्मध्ये विष्टरे संस्थाप्य उत्तरे चौपासनाग्निकुण्डं कृत्वा वास्तुहोमं हुत्वा बिम्बस्या ऽतीवपार्श्वतः पर्यग्निंकृत्वा पञ्चगव्यैर्बेरमभ्युक्ष्य दक्षिणे अभि मुखे मनोरमे चौपासनाग्निकुण्डं कृत्वा आघारं हुत्वा दद्भ्यः स्वाहाद्यंगहोमं, मौलि- मालादींश्च, जुहुयात् । महाभूतदेवत्यसूक्तं, विष्णुसूक्तं, पुरुषसूक्तं, वैष्णवं, श्रीभूमिदेवत्यं, ब्राह्मं, रौद्रं च, हुत्वा विमानं च नवंचेत् तस्यस्थूप्याद्यु- पानान्तंअंगनामभिर्हुत्वाविमान प्रतिष्ठाविधानेनविमानदेवा नामक्ष्युन्मोच- नादीनि कारयेत् ।

आचार्यं स्रग्वस्त्रोत्तरीयाभरणैरलंकृत्य देवाभिमुखे सुवर्णश्रृंगां, रूप्यखुरां, सवत्सां, वस्त्रबन्धां, कांस्यदोहां, पुष्पादिभिरलंकृतां, गामेकां संस्थाप्य तृणादिकबलंदत्वा गोदान सूक्तेनाऽभिमृश्य घृतदधिमधुक्षीरं च प्रस्थादहीनं सौवर्णे, राजते, ताम्रे, कांस्येवा, पात्रे सुवर्णसहितंसंगृह्य अभिमुखे निधाय अधिदेवान् घृतेसामवेदं, मधुनि यजुर्वेदं, दन्धिऋग्वेदं, क्षीरेअथर्ववेदं च, आराध्य व्रीहियवमाष मुद्र तिलतिल्व प्रियंगुसर्षपान्यष्टौधान्यानि प्रत्येकंभारम् अर्धं तदर्धंवाराशीकृत्य अधिदेवं- वायुमभ्यर्च्य जयशब्दैः, स्तोत्रैश्च, संस्तूयस्तुत्य नृत्तगेयवाद्यैर्घोषयित्वा देवाभिमुखे निधायप्रच्छन्नपटं कृत्वा आचार्यश्चोत्तराभिमुखःप्राणायामं कृत्वा 'विष्णुर्मारक्ष' (वै० म० प्र० ८) त्वितिउच्चार्य दिव्य रूपंध्यायन् सुवर्णसूचीधृढकरीभ्यामेव पक्ष्मवर्मरक्त शुक्ल कृष्णज्योतिर्मण्डलानि यथाक्रमेण पृथिव्यादि महाभूतपरमात्माधि दैवतानि स्मृत्वा अतो देवादिना दक्षिणे नयने सहस्रशीर्षादिना वामे च अक्ष्युन्मोचनं कारयेत्, प्रच्छन्नपटं विसृज्य गोधान्याज्यादीनि दर्शनद्रव्याणि संदर्शयेत् ।

## ध्रुवस्याक्ष्युन्मोचनम्

ध्रुवबेराक्ष्युन्मोचनंचेत् हेमपात्रे वर्णंगृहीत्वा मेदिनीमभ्यर्च्य पक्ष्मादि मंडलानि संकल्प्य तथैवाक्ष्युन्मोचनं कारयेत्; एषविशेषः अन्यत्सर्वंसमानम्।

## देव्यादीनामक्ष्युन्मोचनम्

देव्योर्ब्रह्मेशयोर्दौवारिकादीनां च तत्तन्मन्त्रेणाक्ष्युऽन्मोचनं कारयेत्।

## अक्ष्युन्मोचनान्ते जलाधिवासः

कौतुकादि बेराणामक्ष्युन्मोचनान्ते (जला) बेराधिवासादीनि कारयेत् ।

## ध्रुवाक्ष्युन्मोचनान्ते बिम्बशुद्ध्यर्थं नवकलशस्नपनम्

ध्रुवबेराक्ष्युन्मोचनाऽन्ते तत्तद्बेरशुद्ध्यर्थम्, आढकपूर्णान् खण्ड-स्फुटितकालरहितान्नवकलशानाहृत्य तन्तुनापरिवेष्ट्य अद्भिः प्रोक्ष्य नादेयैराधावैः सुगंधैरुत्पूतैरापूर्य अक्षताश्वत्थकूर्चानि पुण्यपुष्पाणि शमीपलाशदूर्वाग्रं नवरन्तनि स्वर्णशकलान्वा प्रणवेनाऽऽक्षिप्य प्रत्येकं वस्त्र मावेष्ट्य देवाभिमुखे शालिव्रीहिभिः स्थण्डिलं कृत्वा नव भागं विभज्य मध्यमादिनवपदेषु नवकलशान्विन्यस्य च आचार्यस्तेषां दक्षिणेचोत्तराभि-मुखो ब्रह्मासनमास्थाय मध्यमादिक्रमेण तत्तत्कूर्चेन 'इदमापःशिवा' (वै० म० प्र० ९) विष्णुगायत्री (वै० म० प्र० ८) अग्निमीले(ऋ० स १-१-१) इषेत्वौर्जेत्वा (वै० स १-१-१) अग्न आयाहि (सा० स० १:१) शन्नोदेवीः (अथ० १-१) आपउन्दन्तु, वैष्णवम्, एकाक्षरादींश्च जप्त्वाऽभिमन्त्र्य तत्तत्कलशैश्चतुर्वेदादिमन्त्रैर्विष्णुसूक्तेन पुरुषसूक्तेनापोहिरण्यपवमानैर्ध्रुवबेरं समभ्युक्ष्य देव्यादिसर्वपरिवाराणं तत्तन्मन्त्रैश्च संयुक्तं आपोहिष्ठा (ऋ० सं-७-६) दिना अभ्यक्षणं कृत्वा पुण्याहं वाचयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे ध्रुवबेरादीनाम-क्ष्युन्मोचनविधिर्नाम सप्तविंशः पटलः ॥२७॥

# अथाष्टाविंशः पटलः

अथाधिवासनम् - अधिवासंकृत्वैवस्थापनं करोति। अनधिवासितं बेरं यत्रस्थापितं चेत् तद्ग्रामयजमानस्थापकादीनामाशुविनाशायभवति। अतोदेवालयस्य उत्तरे, पुरस्ताद्वा, प्रपां, कूटं वा, कृत्वा तन्मध्ये तद्बिंबार्धाऽधिका यामविस्तारां बिंबदघ्ननिम्नांजलद्रोणीं भूम्यामवटं वा, कृत्वा संशोध्य वितानध्वजदर्भमालातरंगस्तंभवेष्टनाद्यैरलंकृत्य परितः प्रावरणं कृत्वा।

पञ्चगव्यानियथायोगं संयोज्य 'वसोः पवित्र' मिति पञ्चगव्यैरापूर्य अधिदेवमीशान मभ्यर्च्य नव वस्त्राण्यास्तीर्य तत्प्राच्यामौपासनाग्निकुण्डं कृत्वा आघारं हुत्वा तस्योत्तरे देवेशंसप्तभिः कलशैस्संस्नाप्य पुण्याहं वाचयित्वा नववस्त्रोत्तरीयाद्यैरलंकृत्य अभ्यर्च्य 'विष्णोर्नुकादीन्' जपन् तिष्ठन् तस्मिन्प्राक्शिरः शाययित्वा अग्निंपरिस्तीर्य 'विष्णवे, विश्वेशाय, जनार्दनाय, सर्वभूतात्मने, अव्यक्ताय, अचलाय, देवेभ्यो, भूतेभ्यो, नागेभ्यो, लोकपालेभ्यः, विमानपालेभ्यः, 'स्वाहे' तिव्याहृत्यंतंहुत्वावैष्णवं, ब्राह्मं, रौद्रं, प्राजापत्यं, वारुणं, वैघ्नं, गारुडं, वैष्वक्सेनं, दिग्देवत्यं च, हुत्वा अग्निंविसृज्य, तद्रात्रौ तदालयगतदेवेभ्यस्सर्वेभ्यो मौद्गिकंबलिंनिर्वाप्य।

प्रभातेस्नात्वा आलयमावेश्य, अधिवसगतंदेवमुध्दृत्य, सप्तभिः कलशैः संस्नाप्य, वस्त्रोत्तरीयाद्यैरलं कृत्य, अभ्यर्च्य, द्रोणीमवटं वासं शोध्य, नववस्त्राण्यास्तीर्य, 'शन्नोदेवी' रिति गव्येनक्षीरेणाऽऽपूर्य, अधिदैवमथर्ववेदमभ्यर्च्य, पुण्यपुष्णाणि निक्षिप्य, 'क्षीरं क्षीरोदधि' रितिस्मृत्वा, तस्मिन्देवं पूर्ववच्छाययेत् पूर्ववद्धोमं हुत्वा, तद्रात्रौपूर्ववद्बलिं निर्वाप्य, प्रभाते स्नात्वा, विष्णोर्नुकादी निजप्त्वा, बिंबमुध्दृत्य, सप्तभिःकलशैःसंस्नाप्य, नववस्त्रोत्तरीयाद्यैरलं कृत्य अभ्यर्च्य।

नदीं, ह्रदं, शुद्धतटाकं वा, आश्रित्य-तज्जले प्रपां कूटं वा कृत्वा, वितानध्वजदर्भमालाधूपदीपाद्यैरलंकृत्य, परितःप्रावरणं कृत्वा, तत्तीरे अग्निशालांकृत्वा अग्निंनिधाय, परिस्तीर्य, परिषिच्य, वैष्णवं हुत्वा पश्चात्सघृतंपायसमादाय, 'योगेशाय शेषपर्यंकशायिने शब्दब्रह्मणेसमुद्रेभ्यः पर्वतेभ्योदेवेभ्यः ऋषिभ्यः पितृभ्यो नागेभ्योभूतेभ्यः स्वाहे' ति हुत्वा, तत्तीर्थम् 'इदमापःशिवा' इत्यभिमृश्य अधिदैवं 'वरुणं, पुण्यतीर्थं (शिव,)

पुण्यं, देवावास' मिति चतुर्भिर्मन्त्रैरर्ध्यान्तमभ्यर्च्य, नववस्त्राण्यास्तीर्य, देवं नववस्त्रोत्तरीयाद्यैरलंकृत्याऽभ्यर्च्य, वैष्णवैर्मंत्रैः प्राक् शिरःशाययित्वा, अग्निंपरिस्तीर्य, धातादि पञ्चवारुणं मूलहोममाग्नेयं च हुत्वा, ततःपरिषेकं कृत्वा ।

तद्रात्रौप्रभूतंबलि माहृत्य, मुद्गनिष्पाव तिलतिल्वलाजमाषाऽपूपसंयुक्तंकटाहे प्रक्षिप्य, पूर्ववत्तदालये ग्रामे च प्रदक्षिणक्रमेण दिग्देवताभ्योबलिंनिर्वाप्य, रात्रिशेषंव्यपोह्य, प्रभातेस्नात्वा, देवमुत्थाप्य, शुद्धोदकैः संस्नाप्य, गन्धोदकैरभिषिच्य, अग्निंविसृज्य, नववस्त्रोत्तरीयाद्यैरलंकृत्य, अभ्यर्च्य, यानमारोप्य, ग्राममालयंवा प्रदक्षिणं कारयित्वि, आलयमाविश्य, आलयभिमुखे, यज्ञालयस्य पश्चिमेवा, देवंसंस्थापयेत् । एवं त्रयाणामधिवासानां प्रत्येकमहोरात्रं दिवाचैकं वा अधिवासयेत् ।

एवमसंभवे पूर्वेअहनिचेत् पूर्ववत्पञ्चगव्याधिवासं, क्षीराधिवासं जलाधिवासं च पृथगेव संकल्प्य, देवं वस्त्रोत्तरीयाद्यैरलंकृत्य, अभिषिंच्य, प्रत्येकंयाममात्रमधिवासयेत् । सद्यश्चेत् पृथक्पृथक्मुहूर्त्तं यथालाभकालंवा अधिवासयेत् । अलाभेत्रीन् कुंभान् द्रव्यैर्जलैरापूर्य, पृथक् पृथक् संकल्प्य, अभिषेचयेत् । एकहोमेसर्वंतन्त्रयित्वा, एकदाबलिंनिर्वाप्य, करयेत् । होमं बलिं च विना सर्वत्र जलाधिवासनमेवं कारयेदिति विज्ञायते ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे अधिवासत्रयविधिर्नाम अष्टाविंशः पटलः ॥२८॥

# अथ एकोनत्रिंशः पटलः

## देवयजनफलम्

अथ देवयजनं व्याख्यास्यामः - 'अग्निहोत्रेणलभेत स्वर्ग' मित्याहुः 'संगतंदेवपूजानांयज्ञा' इति सूरयोर्वदन्ति, यज्ञेष्वेतेषु देवयागोविशिष्यते, यजमानेपिभुवि शाश्वतं तिष्ठतितस्माद्राज्ञोराष्ट्रस्य यजमानवंशस्याभिवृद्धिं करोति ॥

## यागशालनिर्माणम्

तस्याऽग्निहोत्रस्यचऽऽधानंवक्ष्ये - उक्तमासतिथिवारनक्षत्रलग्नेषु

यद्दिनेकर्त्तुमुद्योग स्तद्दिनात्पूर्वस्मिन् दिने अंकुरार्पणं कुर्यात्। आलयात्पुरतो दक्षिणे वा यागशालांषोडशस्तंभ संयुक्तां त्रिपंङ्तिं चतुरश्रांकुर्यात् ॥

## शय्यावेदिः प्रपादिश्च

तद्विमाननिर्देशहस्तेन त्रिहस्तादिपञ्चहस्तान्तं पाद हस्तविवृध्द्या नवधाभित्तिमानं तस्यस्थले तालंद्वि (लवि) भागं, तदर्धं, पादोच्चं ; भित्तिमानसमं पादाधिक, मर्धाधिकं, पदोनद्विगुणं द्विगुणं वा शध्यावेदिविस्तारं ; भित्तिमानसमं पादोनमर्धं, बिंबार्धाधिकं त्रिपादाधिक द्विगुणं, अर्धाधिकद्विगुणं, त्रिगुणं वा, तच्चतुर्थांशमुत्सेधं ; तदूर्ध्वे कूटंवर्षनिवारणंकृत्वा तत्परितः प्रपां चतुर्द्वारसमायुक्तां चतुस्तोरणभूषितां कृत्वा तत्सर्ववितानध्वजदर्भमालातरंगसस्तंभवेष्टनमुक्तादामाद्यैरलंकृत्य, दर्भमालारज्जुं पर्वणि पर्वणि द्विताललंबदर्भद्वययुक्तां; मध्येऽरत्निमात्रत्रिशूल युतानि तोरणानि कारयित्वा 'अग्निमीले' (ऋ० सं०-१-१-१) इति प्राग्द्वारे चाश्वत्थम् ; 'इषेत्वोर्जेत्वे' ति दक्षिणे चौदुम्बरं ; 'अग्नआयाही' ति पश्चिमेप्लक्षं ; 'शन्नोदेवी' रिति उत्तरेवटंचैव द्वारेषुसंस्थाप्य तद्वारपार्श्वे कदलीक्रमुकोद कुंभदीपांऽकुराद्यैरलंकृत्य तन्मध्ये शय्यावेदिं परितश्चाऽग्नि-कुंडानि कारयेत् ॥

## अरण्यादिमानम्

अरण्यर्थमश्वत्थ शमीजातमन्यंवासंगृह्य द्वितालायामांषोडशां (षडं) गुलविस्तृतांभागोत्सेधामरणीं तत्समांचोर्ध्वपलकां द्वितालायामं प्रादेशपरिणाह मूलाग्रयोरेकांगुलि मात्रशिखायुक्तं मन्थदण्डञ्चकृत्वा मौञ्ज्यात्रिवृतांरज्जं मन्थनाय समाहारेत्; खदिराश्वत्थबिल्वाद्यैर्यज्ञ-वृक्षैर्यज्ञपात्राणिकुर्यात् ।

## स्रुवादिस्वरूपम्

स्रुवस्याऽऽयामं द्विप्रादेशं, मूलंप्रादेशपरिणाहं, तदर्धमग्रनाहं, मूलाग्रयोः एकांऽगुलमात्रशिखायुक्तं, बिलादर्वागानुपूर्व्येण संक्षिप्तम्, अग्रे प्रादेशपरिमण्डलं, गोळकं बिलविस्तारं, माषाच्छादनगर्त्तद्वययुत मेवं स्रुवंकारयेत् ।

अग्निहोत्रहवणी षड्विंशत्यंगुलायामा अधस्तात्षोडशांगुलदण्ड द्वादशांगुलपरिणाहा तदूर्ध्वं पञ्चांगुलायामं वृत्तं मध्येनिम्नंभागं, परितोभित्तिरेकांगुला, तस्मादग्रान्तं घृतधारायुत मेकांगुलविस्तारं त्र्यंश्रम्, अग्रादधस्तात् पञ्चांगुलमानुपूर्व्येणसंक्षिप्तं घृतधारापा र्श्वयोरेकांगुलं, भित्तिरर्धांगुला उपरिछत्राकारं घनंभागमेवं कारयेत् ।

जुहू प्रमाणं द्वितालायामं, द्वादशांगुलपरीणाहं मूलं पद्ममुकुळाकारं, अग्रेचाष्टांगुलायामं, चतुरंगुलविस्तारं, द्वादशांऽगु (षडंगु) लोन्नतं, मध्येनिम्नमर्धांगुलम्, भित्तिरेकांगुला, घृतधारायुतम्, ऊर्ध्वेमुकुळाकारम्, अधस्ताद्दण्डाकारं कारयेत् ।

उपजुहूप्रमाणं द्वितालायामं, द्वादशांगुलपरिणाहम्, अग्रअष्टां ऽगुलायामं, समवृत्तं, भित्तिरर्धांगुला, घृतधारायुतमेवं कारयेत् ।

दर्वी तालद्वयायामा, अग्रेपञ्चांगुलायामविस्तारा, मूलेभाग विस्तारायामा, अग्राच्चमूलादारभ्यमध्ये क्रमात् गोळकंक्षीणं, घनमेकांगुलमेवं कारयेत् ।

## सम्भाराहरणम्

पालाशाश्वत्थबिल्वशमीखदिरवटोदुंबरसमिधो गृहीत्वा, कार्पासतन्तून् साग्रन् दशदर्भान् (कुशकाश) विश्वामित्रादीन्वाऽऽहृत्य, याज्ञिकैर्वृक्षैर्द्वितालायामा स्तदर्धविस्तारा श्चतुरंगुलघनश्चतुरश्राः फलकाः कारयित्वा, तन्मध्ये समांगुलोत्सेधान्, श्रीवत्सोदकुंभभेर्याऽऽदर्शन मत्स्ययुग्मांऽकुशशंखाऽऽवर्त्तासीन अष्टमङ्गलानि कृत्वा तथा चक्रशङ्खगदाशार्ङ्गासीन् पञ्चायुधानि कारयेत् ।

वस्त्रं द्वादशाष्टसप्तषड्ढस्तानामन्यतमायामं, पञ्चचतुस्तालविस्तृतं स्नापनार्थं, हविरर्थं च यानिद्रव्याणितानि, होमार्थं घृतं (पयो) दधि च, अष्टधान्यानि, शालीय तंडुलान्, दीपार्थं घृतं, तैलंवा ; अक्ष्युन्मोचनार्थं सवत्सांगां, सुवर्ण पात्रं, उलिकां सूचीं दृढकरीं च सुवर्णेन कृत्वा, कुंभप्रक्षेपणार्थं पीठन्यासार्थं च रत्नधातुबीजानि चाऽऽहरेत् । सुवर्णेन प्रतिसरमंगुलीयकाद्याभरणानि च, आढकपूर्णान् कलशान्, द्रोणार्धपूर्णान् करकान् द्रोणपूर्णान् घटान्, द्रोणद्वयपूर्णं प्रधान कुंभं, प्रस्थपूर्णान् शरावान्, प्रस्थार्धपूर्णाः प्रणिधीः, तथैवाज्यस्थालीः, प्रोक्षणपात्राणि,

द्विप्रस्थपाकयोग्यांस्थालीं, द्रोणार्धपूर्णाः पात्रिकाश्च, अन्यान् सर्वान् खंडस्फुटितकालरहितान् समाहरेत् ।

### अग्निमथनम्

अथ अग्निमथनार्थं यज्ञागारेचाऽऽग्नेय्यां गोमयेनोपलिप्य, पञ्च-वर्णैरलंकृत्य, (तन्मध्ये) मण्डलंकृत्वा, दर्भानास्तीर्य, तत्राऽरणिं प्राङ्-मुखंसन्यस्य अरण्यांमहीं, मन्थे विष्णुम् उत्तरेपट्टिकायामग्निमभ्यर्च्य, आचार्यः प्राङ्मुखः 'अग्नआयाहि' इत्यरणिं सन्यस्य, 'आयुर्दा' इति मन्थदण्डं संस्थाप्य, 'अग्निंदूत', मितिमन्थेरज्जुंसमावेष्ट्य, 'अग्निमूर्धे' ति उत्तरपट्टिकां संयोज्य, 'जातवेदोभुवनस्ये' त्यग्निं मथित्वा उत्पन्नमग्निं 'आयुर्दा' इति प्रणम्य, 'उपावरोह' (वै० म० १-म०) इति गोकरीषैः समुज्वाल्य, 'घृतप्रतीक' (वै० म० १-म०) इति पात्रिकायायमादाय, 'अग्निरिंद्रे' त्यभिवादनंकृत्वा, अप्रमादंनिधाय, स्यापनदिवसात्पूर्व रात्रादालयादुत्तरेच औपासनाग्निकुण्डंच-कृत्वा, आघारं हुत्वा सूत्रोक्तविधिनावास्तुहोमं हुत्वा, आघारंपर्यग्निंकृत्वा पञ्चगव्यैः 'अणोरणीया' (तै० आ० ६-प्र०) नित्यभ्युक्ष्य पुण्याहं वाचयेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे यागोपकरण द्रव्यसंचयविधिर्नाम एकोनत्रिंशः पटलः॥२९॥

## अथ त्रिंशः पटलः

### अग्निकुण्डलक्षणम्

अथाऽग्निकुण्डलक्षणं व्यख्यास्यामः- ब्रह्मा अग्निंपञ्चधासृष्ट्वा पञ्चलोकेषु व्यभजत् । आहवनीयं स्वर्गलोके, अन्वाहर्यामन्तरिक्षलोके, अस्मिन्लोके गार्हपत्यम् आवसथ्यं महर्लोके, सभ्यंजनोलोके, इति चतुरश्रोवैस्वर्गलोकः आहवनीयम्, अंतरिक्षलोकोऽर्धचन्द्राकृतिस्त द्वदन्वाहार्यं, भूमिर्मण्डलाकृतिस्तद्वद्गार्हपत्यं त्र्यश्रोवैमहर्लोकस्तद्वदावसथ्यं चतुरश्रोवैजनोलोकस्तद्वत्सभ्यं, पुण्डरीकवत्तपोलोकःकुर्यात् तद्वत् पौण्डरीकम् ।

यज्ञशालां नवधाविभज्य मध्ये ब्राह्मेशय्यावेदिम्, ऐन्द्रपदेसभ्यम्

आहवनीयं च, आहवनीयं चौपासनाग्निकुण्डवत् कुर्यात्; याम्येअन्वाहार्यमर्धचन्द्राकृति (दक्षिणे) भागमूर्ध्ववेदिविस्तारं, दक्षिणोत्तरं त्रिंशदंगुलं, प्राक्पश्चिमं षष्ट्यगुलं द्विवेदि सहितम्, एकैकं भागविस्तरोत्सेधं, मध्ये निम्नंत्रिकोलकं; तत्पश्चिमे गार्हपत्यं पूर्णचन्द्राकृति ऊर्ध्ववेदिविस्तारं सत्पाधिकत्रिंशदंगुलम् द्विवेदिसहितम्, एकैकंभागविस्तारोत्सेधं, मध्येनिम्नंषडंगुलम्, उत्तरे चावसथ्यं त्रिकोणं, षड्यवाधिकाष्ट चत्वारिंशदंगुलं तदेकभुजयुतोर्ध्ववेदिकं, द्विवेदि सहितम् एकैकं भागविस्तरोत्सेधं, मध्ये निम्नंत्रिकोलकंप्रागग्रंकारयति।

शय्यावेद्याः प्राच्यमाहवनीयस्य पश्चिमे सभ्याग्निकुण्डं त्रिवेदिसहितम्, एकैकंभागविस्तारोत्सेधम्, ऊर्ध्ववेद्यायामं द्वात्रिंशदंगुलं, मध्यवेदिविस्तारंपञ्चांगुलं द्विचत्वारिंशदंगुलमधोवेद्यायामं, पंचदशांगुलं मध्ये निम्नम्, अष्टांगुलं, दशाङ्गुलं (द्वादशाङ्गुलं) वा कारयेदाग्नेय्यां पौण्डरीकं त्रिवेदिसहितं सुवृत्तं ऊर्ध्ववेदिविस्तारायामं सप्ताधिकत्रिंशदङ्गुलं एकैकंभागविस्तारोत्सेधम्, अधोवेदिविस्तारं षडंगुलं, प्रागादि षोडशदलैर्युतं, मध्ये निम्नमष्टांऽगुलं, दशांगुलं वा करोति॥

## स्नानाद्यर्थं श्वभ्रादिकरणम्

ऐशान्यामाहवनीयवत् द्विवेदिसहित, तद्बेरपीठात् प्रतिदिक् चतुरंगुलाधिकविस्तारं स्नानायश्वभ्रं च उत्तरे वारिमार्गं कारयेत्। नैर्ऋतपदे देवस्याऽलंकारार्थं द्विहस्तायताविस्तरां, तालोन्नतां चतुरश्रांवेदिं कृत्वा, वायव्ये यागोप करण द्रव्यविन्यासार्थं चतुर्हस्तायतविस्तारां, भागोन्नतां, वेदिंकुर्यात्॥

## परिवारदेवानांपृथगालयेआहवनीयकुण्डकरणम्

सर्वेषां परिवाराणां तत्तदालयाभिमुखे दक्षिणे वा आहवनीयाग्निकुंडं, कुम्भपूजनं, हौत्रशंसनं मूर्त्यावाहनादिकं च(चा) चरेत्। अथवा देवेशस्य मूर्त्यावाहनकाले परिवारदेवानांअध्वर्यवश्च तत्तन्मंत्रान् जप्त्वा, तत्तद्धोमे दक्षिण प्रणिधावावाहनादि कृत्वा, तत्तन्मंत्रं सवैष्णवं तत्तत्क्रमेण षोडशाद्वा दशपर्यायतो जुहुयुः, परिवाराणामालये प्रतिमाहीनं चेत् सभ्यग्निकुंडे तत्तद्दैवत्यं सवैष्णवं च हुत्वा, देवेशस्याऽऽवाहनान्ते तं कुम्भं नीत्वा, तत्तत्स्थानेपीठे तत्तद्देवं ध्यात्वा, आवाहयेत्॥

## परिवाराऽग्निकुण्डादिकम्

अथवा देवेशस्याऽस्ययज्ञस्यपश्चाग्नीन्; पौण्डरीकाग्निं च, कृत्वा यागशालां परितश्चैकभक्तियुतां प्रपां कृत्वा, इन्द्रेशानयोर्मध्ये वीसस्य, इन्द्रग्न्योर्मध्ये चक्रस्य, यमपावकयोर्मध्ये श्रीभूतस्य, यमानिलयोर्मध्ये ब्रह्मणः नीलवरुणयोर्मध्ये पुण्यस्य, वरुणोदानयोर्मध्ये रत्र्यातीशस्य, वायुसोमयोर्मध्ये शंखस्य, सोमेशानयोर्मध्ये शांतस्य, प्राग्द्वारादुत्तरे मणिकसंध्ययोर्दक्षिणे न्यक्षस्य, दक्षिणद्वारपूर्वे विखनसतापसयोः पश्चिमे विवस्वतः, पश्चिमद्वार-दक्षिणे किष्किंधतीर्थयोरुत्तरे मित्रस्य, उत्तरद्वारपश्चिमे विकटशेषयोः पूर्वे क्षत्तुः प्राच्यां दक्षिणोत्तरयो र्नित्यऽक्षयोर्दक्षिणोत्तर योर्ध्वजशंखयोश्चौ-पासनाग्निकुंडानि (कृत्वा) कुर्यात्, तदुत्तमोत्तमम् ।

विमानपालद्वारपलाँश्चविनाकारयेदुत्तममध्यमम् । महाभूतशंखध्वजपा (व) कोर्जुनान् विना कारयेदुत्तमाधमम् । ब्रह्मेशपुण्यभृगून्विनाकार-येन्मध्यमोत्तमम् । श्रीभूतचक्रवीशान्विना कारयेन्मध्यममध्यमम्, लोक-पालान्विनाकारयेन्मध्यमाधमम् । देवेशस्यैवपश्चाग्नीन्कारयेदधमोत्तमम् । त्रेताग्निविधानेन गार्हपत्याहवनीयाग्नीन् कल्पयित्वा एतेषां प्रधाने गार्ह-पत्याग्नौ सभ्यवत् सर्वं कुर्यात् एत दधममध्यमम् । सभ्याऽग्निमेकमेव कृत्वा सर्वहोमानस्मिन्नग्नौजुहुयादेतदधमाधमम् आचक्षते । सर्वत्र पौण्डरी-काग्निं कारयेदिति केचित् । एवं नवधा भवति, अन्यत्सर्वं समानम् ॥

## बेरपश्चकस्य युगपत्प्रतिष्ठायामेककुम्भादि विधानम्

ध्रुवकौतुकस्नपनोत्सवबलिबेराणां सह प्रतिष्ठाचेत् एकशाला-मेकवेदिं सहैवहोममेककुंभं च कुर्यात् । तेषां पृथक् चेत् पृथगेवहोमा-द्यं सर्वं कर्तव्यम् ।

प्रादुर्भावानामाविर्भावानां च, भक्त्याऽस्मिन् विमानेस्थापनं यदि चेत् मानांगुलेन सप्तांगुलं समारभ्य, द्व्यंगुलवृद्ध्या एकोनषष्ट्यंगुलान्तं सप्तविंशतिभेदाभवन्ति । एतेष्विष्टमानं विनिश्चित्य प्रतिमां कृत्वा, मुखमण्डपे, निर्मले अन्यस्मिन्यथेष्टे देशे वा, रत्नानि सन्यस्य, एक बेरस्थापनामार्गेणप्रतिष्ठाप्य, तत्तन्मूर्तीः मन्त्रेणविभवानुरूपमर्चयेत् । आलयाभ्यन्तरे सह प्रतिष्ठाचेत् स्नपनं शयनं च पृथगेव कृत्वा, एक

कुम्भेतत्तद्रूपंतथैव ध्यात्वा, सभ्ये सर्वेषां तदुक्तहोमं हुत्वा, कौतुकादीनामावाहनान्ते तत्तन्मन्त्रेणाऽऽवाह्याऽर्चयेदिति केचित्। सर्वपदार्थिनः स्नात्वा, सायंसन्ध्यामुपास्य, स्वकीयानग्नीन्जुहुयुः। स्थापकास्सव्या हृतिकांगायत्रीं सशिरस्कांदशप्रणवसहितांत्रिः पठेयुः, आयतप्राणाः सहस्रंशतंवासंयुक्तंरे-चकपूरककुम्भकप्रकारैरुद्ध (द्धू)तैः, एकद्वित्रिविधं मंदमध्यमोत्तमैःक्लान्ति सुषुप्त्यादिनिर्वेदक्षुधाकंपनादन्यत्रयथाविधि श्रद्धयाअनालस्यं यथाबलं प्राणायामं धारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे अग्निकुण्ड विधिर्नाम त्रिंशः पटलः ॥३०॥

# अथ एकत्रिंशः पटलः

## ऋत्विग्वरणम्

अथ गुरुर्यजमानम् 'अणोरणीया' नित्यभ्युक्ष्य, सघृतंपयः- प्राशयित्वा, द्विजंमन्त्रवद्गृह्णीयात्। वर्णात् परमन्त्र मृतेशिष्यत्वेनाहरेत्। तेनशिष्यः पापात्प्रमुच्यते। ऋत्विजश्चाऽऽहूय 'अथावनीद' (वै०म०प्र०३) मिति मण्डलान्युपलिप्य 'अस्त्वासन' (वै०म०प्र-३) मित्यासनानि सदर्भयवानि निधायतेष्वासीनाँस्तान् देववत्स्मृत्वा पवित्रं यज्ञसंयुक्तं 'अग्निमील' (ऋ०स०१-१-१) इति दधि प्राशयित्वा आचामेत्। आचर्यस्तानपूर्वेद्युरपराह्णे यथाकर्मणि नियुञ्जीत ॥

## अग्निप्रणयनम्

पश्चादधिवासगतदेवमासाद्य शुद्धोदकैस्संस्नाप्य अभ्यर्च्य नव-वस्त्रोत्तरीयाद्यैरलं कृत्य यानमारोप्य ग्राममालयं प्रदक्षिणंकारयित्वा यज्ञालये पश्चिमे अलंकृते देवंबैल्वफलकोपरिप्राङ्मुखं संस्थाप्य तत्काले मथितमग्निंसमाहृत्यतस्याऽऽलयस्योत्तरे वस्तुहोमं हुत्वा आलयंसंशोध्य पश्चाद्वैखानससूत्रोक्तविधिना गार्हपत्याग्निकुण्डे आघारं हुत्वा आघारान्ते तमग्निंवर्धयित्वा तस्मादन्वाहार्याग्निकुण्डे 'जातवेदोभुवनस्य' (वै०म०प्र०१) त्यग्निंप्रणीय। पश्चादाहवनीयाऽग्निकुण्डे 'अग्नआयाही' (सा०स०१-१-१) ति मंत्रेणाऽग्निंप्रणीय पश्चादावसथ्याग्निकुण्डे 'अयंतेयोनि' रित्यग्निंप्रणीय

ततस्सभ्याऽग्निकुण्डे 'मयिगृह्णामी' (वै० म० प्र०१) त्यग्निंप्रणीय ततःपौण्डरीकाग्निकुंडे 'घृतप्रतीक' (वै०म०प्र-१) इतिअग्निंप्रणीय। अन्येषु 'जातवेद' (वै० म० प्र०१) इत्यग्निं प्रणयेत ॥

## आघारविशेषः

पश्चादाघारान्तरे विशेषो वक्ष्यते-अग्निकुण्डाना मूर्ध्ववेद्यामिन्द्रादि दिग्देवान् तत्तत्स्थाने दक्षिणवेद्यधस्तात् ब्रह्माणम्, उत्तरेसोममभ्यर्च्य गार्हपत्योत्तरप्रणिधौ अग्न्यादि देवानामावाहनान्ते गार्हपत्ययज्ञं यज्ञ-दैवतविश्वान् देवाान्, 'ओंभूःपुरषमच्युत' मिति ।

अन्वाहार्ये अन्वा हार्ययज्ञं यज्ञदैवतविश्वान्देवान्, 'ओंभुवःपुरुषं, सत्य' मिति ।

आहवनीये आहवनीययज्ञं यज्ञदैवतविश्वान् देवान् 'ओंसुवःपुरुषंपुरुष' मिति; आवसथ्येऽवसथ्य यज्ञंयज्ञदैवतविश्वान् देवान् 'ओंमहःपुरुषमनिरुद्ध' मिति; सभ्येसभ्ययज्ञंयज्ञदैवतविश्वान्देवान् 'ओंजनःपुरुषंविष्णु' मिति; पौंडरीकेपौंडरीकयज्ञं यज्ञदैवतविश्वान् देवान् 'ओंतपः पुरुषंवासुदेव' मिति; श्रामणकेश्रामण काग्नियज्ञंयज्ञदैवतविश्वान् देवान् 'ओंसत्यंपुरुषंनारायण' मित्यावाह्य परिवाराणांहोमेषु औपासनयज्ञंयज्ञदैवतविश्वान्देवान्आवाह-यामीत्यावाह्य, तथैवाज्यंनिरूप्याऽऽहुतीर्हुत्वा, षड्होमेषुवैष्णवं हुत्वा, एवमेव आघारं जुहूयुः ॥

## एकाध्वर्युपक्षेऽन्तरागमनेविशेषः

आघारान्ते पक्वहोमात्पूर्वं तेषामंतरंनव्रजेत्, अध्वर्यूणामभावे-चैकाध्वर्युश्चेत् 'प्रासावी' रित्यन्तेःप्रवाहणं कृत्वा पुनःपरिस्तीर्य होममाचरेत्, अस्य प्रायश्चित्तं वैष्णवं यजेत् ॥

## प्रधान कुंभलक्षणादि

पश्चात् कुम्भपूजां समाचरेत्। द्वात्रिंशत्प्रस्थसंपूर्णसौवर्णं राजतं ताम्रं मृण्मयंवा कुंभं संगृह्य मृण्मयं चेत् खण्डस्फुटित कालरहितं पक्काल र्कफलाकारं सम्यग्दग्धं नवंकुंभंसमादाय यज्ञालये वायव्ये संभारस्थाने-प्राङ्मुखमास्थाय 'इषेत्वोर्जेत्वा' (यजु-सं-१-१-१) दि जपन् त्रिवृतेनै केन वा सूत्रेण तिलान्तरम् यवान्तर, मंगल्यंन्तरं वा, परिवेष्ट्य 'शुचीवोहव्या'

(ऋसं५-४-२४) इति प्रक्षाल्यनादेयं जलं दिवासंगृह्य रात्रौचेदग्निसन्निधावेव संगृह्य 'इदमापःशिवा' (वै०म०प्र०१) इति वस्त्रेणोत्पवनं कृत्वा 'धारा' (वै०म०प्र०१) स्विति कुंभं जलेनापूर्य उशीरादिगन्धैर्वासयित्वा, दुकूलाभ्यां क्षौमाभ्यां सूक्ष्मकार्पासवस्त्राभ्यां वा कुम्भमावेष्ट्य ॥

## कुंभे निक्षेप्यद्रव्याणि

तस्मिन् कुशकूर्चाक्षताश्वत्थ पल्लवानि विन्यस्य पद्मरागवज्रवैडूर्य मौक्तिकमरतकपुष्परागचंद्रकान्तगोमेधिकेन्द्रनीलानी' ति एतानि नवरत्नानि, रत्नानामलाभे प्रत्येकं सुवर्णं वा, श्रीवत्साद्यष्टमंगलानि, गरुडगजकूर्मरूपं च वर्णचिह्नानि, स्रुक्स्रुवकमंडलुजूहूपजुहूपभृत् छत्रचामरांऽकुशध्वजतुलातोदयुगलांगुलादीनि च, मेघविद्युल्लतां च, सुवर्णेन एकांगुलादहीनानि कृत्वा अलाभेसुवर्णशकलानिवा तत्तद्रूपंध्यात्वा, पृथक्पृथक् विष्णुगायत्र्या प्रक्षिप्य, आलाये बालागारे देवाग्रे धान्यराशौ कुंभं सन्यसेत् ।

धान्यराशि स्त्रिविधो भवति । षड्द्रोणमुत्तमं द्रोणत्रयंमध्यमं, द्रोणद्वयमधमं, बालागारं चेत् तंदेवमाराध्य निवेद्य ॥

## कुंभे आवाहनक्रमः

आचार्यस्तस्य दक्षिणेचोत्तराभिमुखोभूत्वा, ब्राह्ममासनमास्थाय, 'विष्णुर्मांरक्ष' (वै०म०३) त्वित्यात्मसूक्तं जप्त्वा, समाहितोध्यानमारभेत् ॥

## आवाहनांगासनादि

स्वस्तिकासनं कुर्यात्, दक्षिणपादमूर्ध्वं वामपाद मधश्च कृत्वा जान्वन्तरे तदंगुष्ठौनिगुह्य, शिश्नवृषणावपीडयन्, निवातगतदीप इवऋजुकायः किंचिदुन्नमितवक्त्रो, दंतैर्दंतान संस्पृशन्, नासाग्रस्थेक्षणश्चैवा ऽऽसनमासीनो यथाबलं प्राणायामं कुर्यात् ॥

## रेचकादि स्वरूपं कुम्भेन्यासः

त्रिविधः प्राणायामः रेचकपूरककुंभक इति । निश्वासविसर्गो रेचको, निश्वासध्यानं पूरको, निश्वासनिरोधः कुंभकः इत्येवं प्राणायामंयोगशास्त्रोक्तमार्गेण कृत्वा, हृदये बीजाक्षरं न्यस्य प्रणवे नवेष्टयित्वा, कुम्भजले अर्धचन्द्राकारंशुद्धस्फटिक संकाशं मध्येऽष्टदलोपेतं पद्मं तन्मध्ये

श्यामवर्णंद्विभुजं इकारबीजान्वितं माहेंद्रमंडलं ध्यात्वा, तन्मध्ये पद्मे सितोत्पलवर्णं द्विभुजं पद्मधरं वकारबीजं वरुणमंडलं ध्यात्वा, तन्मध्ये तप्तहाटकसंकाशं चतुर्भुजं शंखचक्रधरं आदि बीजं सन्यस्य, दिक्ष्वष्टसु प्रणवैरावेष्ट्य, सर्वानेकप्रणवेन वेष्टयेत् । विष्णसूक्तं, प्रणवशतं, सहस्रशीर्षमिति च जप्त्वा, समाहितोज्ञानयोगमार्गेण ध्यानमारभेत् ॥

## ध्यानप्रकारः

सर्वाधारं, सनातन, मप्रमेय, मचिन्त्यं, निर्गुणं, निष्कलं, क्षीरेसार्पिः, तिलेतैलं, पुष्पेगन्धं, फलेरसं, काष्ठेग्निमिव, सर्वव्यापिनं परमात्मानं मनसा संकल्प्यावाहयेत् । आवाहनोद्वासनं विष्णोरयुक्तमिति यथाह्यरण्यां व्यामोहिवह्निर्मथनात्सन्निहितोभवति तथैव ध्यान मथनेनभक्तस्यहृदि-विष्णुस्सन्निहितो भवति, हृदये विष्णुं सकलंसंकल्प्य, सुवर्ण वर्णं रक्तास्यने-त्रपाणिपादं सुखोद्वहं शुकपिंछांबरधरं विष्णुं प्रणवात्मकं किरीटकेयूरहार प्रलंबयज्ञोपवीतिनं श्रीवत्सांकं चतुर्भुजं शंखचक्रधरं एवं परमात्मानं परात्परतरं देव्यादिसर्वपरिषद्युक्तं ध्यात्वा मनसा कुंभेंऽभसिसमावाह्य पुष्पाद्यर्घ्याचमनान्तैरर्चयति ॥

## चतुर्दशकलशस्नपन विधिः

ततोदेवंकुम्भं च समादाय सर्वालंकारसंयुक्तं शकुनसूक्तं जप्त्वा, यज्ञालयेस्नानश्वभ्रे देवं प्रतिष्ठाप्य, दक्षिणेधान्यराशौ कुम्भंसन्यस्य, देवस्यदक्षिणे श्रियं, वामे हरिणीं च, संस्थाप्य; पुरस्ताद्व्रीहिभिस्तण्डुलैर्वा दण्डवत्पंक्तिं कृत्वा, दक्षिणाद्युत्तरान्तं देव्योश्चपृथक्पंक्तिं कृत्वा, तस्यां सप्तकलशान् विन्यस्य, क्षीरघृतमधुसिद्धार्थोदकाऽक्षतोदककुशोदक-चन्दनोदक संपूर्णान् कलशान् उत्तरादीन् सन्यस्य, अन्तरेषूपस्नानकलशान् शुद्धोदक संपूर्णान् सन्यस्य, क्षीरे अथर्ववेदम्, उपस्नानेश्विनौ, घृते सामवेदम्, उपस्नानेऽवत्सरान्, मधुनि यजुर्वेदम्, उपस्नाने वायुं, सर्षपोदकेचाऽऽदित्यम्, उपस्नाने अप्सरसः, अक्षतोदकेकाश्य पम्, उपस्नाने मरुतः, कुशोदकेमुनीन्, उपस्नाने तक्षं, चंदनोदके ऋतून्, उपस्नाने बृहस्पतिं च, एकादशोपचारैरभ्यर्च्चयेत् । अथवा जलपुष्पैरेवार्चयेत् ।

देवेशं प्रति द्रव्यं पाद्याद्यैरर्चयेत् । 'शन्नोदेवी' रिति क्षीरेण 'अग्नआयाही' तिघृतेन 'अग्निमील' इति मधुना 'पूततस्य' (वै० म० प्र० ८)

इतिसर्षपोदकेन 'इमाश्चोषधय' (वै०म०प्र८) इति अक्षतोदकेन 'अभित्वाशूर' (ऋ० स० ५-३-२१) इति कुशोदकेन 'चत्वारिश्रृंगे' (ऋ० स० ३-८-१०) ति गन्धोदकेन च संस्नाप्य, 'वारिश्चतस्रे' (वै० म० प्र० ८) तिसर्वोपस्नानै स्संस्नापयेत् । (द्रव्यंप्रति पूर्वंकुम्भं समभ्युक्ष्य) 'आपोहिष्ठाद्यै' रुष्णोदकेन च संस्नाप्य, शुद्धोदकैश्चा भिषिच्य, प्लोते नविमृज्य, नववस्त्रोत्तरीयाद्यैरलंकृत्य, अभ्यर्च्य, नैर्ऋते विष्टरे देवीभ्यां सह देवं कुम्भं च संस्थाप्य, स्नपनोत्सवबलिबेराणि च पृथगेवं संस्नाप्याऽर्चयेत् ॥

## प्रतिसरबन्धः

आचार्यः स्थापकोद्यैस्सहितः पुण्याहंवाचयित्वा, सौवर्णं राजतं ताम्रं कांस्यं वा पात्रं द्रोणार्धैराढकैर्वा तंडुलैः प्रत्येकमापूर्य तस्मिन्सौवर्णं प्रतिसरंविन्यस्य अलाभे क्षौम कार्पासतन्तुनात्रिवृतंवा कृणुष्वपाज (ऋ०स०३-४-२३) इति स्वस्तिसूक्तेनाऽभिमृश्य, 'स्वस्तिदाविशस्पति' (वै० म० प्र० ३) रिति वदन् देवस्य दक्षिणहस्ते देव्योस्तत्तन्मंत्रेण वामक रेब ध्नीयात् ।

## पंचशयनविधिः

तथैवस्नपनोत्सवबीलबेराणां च कृत्वा 'ध्रुवबेरेपि पूर्वमेव प्रतिसरंबध्वा शय्यावेदिं समभ्युक्ष्य, षड्द्रोणादहीनैश्शालिधान्यैस्तदर्धयवतण्डुलैः तिलैर्वा उपर्युपर्यास्तीर्य, साग्रानू कुशानूप्रागग्रानास्तीर्य, 'वेदाह' (तै० आ० ३ प्र० ९३ अ०) मिति चर्मजं तल्पं प्रथमं विन्यस्य, द्वितीयं रोमजं विन्यस्य, तृतीयंमुण्डजं, चतुर्थमण्डजं पंञ्चमंवामजं, क्रमेणै वोपरिविन्यस्य, उपरिवेष्टनं श्वतंनववस्त्रेणकृत्वा उपधानद्वयंशिरोपधानं च विन्यसेत् ।

चर्मजंसिंह्मव्याघ्रादिचर्मकृतांरोमजमजाऽऽविकादिरोमकृतम्, मुण्डजंकार्पासिशल्मल्यादि फलतूलकृतम् 'अण्डजंपक्षिपिन्छैः कृत्त, वामजंकौशेयक्षौमादिनाकृतं, सर्वालाभे यथालाभंवाऽऽहृत्याऽन्येषां प्रतिनिधिं द्वादशाष्टसप्तह स्तादहीनं नववस्त्रं समाहरेत् । तथैवोपरिवेष्टनमुपधानद्वयं च संकल्पय, प्रणवेनाभ्युक्ष्य, तुलसीपुष्पगन्धाद्यवकीर्य, अगरुधूपैः कर्पूरदीपैस्सहांऽकुराऽष्टमंगलानिपञ्चायुधानिपरितोविन्यस्य, वितानध्वजदर्भमालातरंगस्तम्भवेष्टनमु क्तादामाद्यैरलंकृत्य, सर्ववाद्यसमायुक्तं

शकुनसूक्तं समुच्चार्य, आचर्यःस्थापकैस्सार्धं देवेशं शयनेसमारोप्य, 'यद्वैष्णव' (वै०म०प्र८) मिति मन्त्रेण देवंदेव्यौ तत्तन्मन्त्रेण सहैव शाययेत् ।

यद्दिग्द्वारं विमानं तद्दिङ्मौलिं कृत्वा उत्तराच्छादनं गलादधस्तादाच्छाद्य देवेशस्यदक्षिणे पूर्ववत् कुंभंसन्यस्य स्नपनोत्सवबलिबेराणां चैकवेद्यांप्रत्येकम्, एवं शयनं संकल्प्य तथैव शाययेत् । तत्परितःप्रावरणं कृत्वा संभारवेद्यां धान्योपरि वस्त्राण्यास्तीर्य सौवर्णादि पात्रे रत्नादीनि विन्यस्य तस्मिन् रत्नेशं विष्णुमभ्यर्च्य विष्णुसूक्तेनाऽधिवासनं कृत्वा उत्तराच्छादनं निच्छिद्रं कृत्वा पश्चाद्यज्ञागारं परितः प्रागादि चतुर्वेदाध्ययनं कारयेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे कुम्भध्यानस्नपनशयनादि विधिर्नाम एकत्रिंशः पटलः ॥३१॥

# अथ द्वात्रिंशः पटलः

## होमत्रैविध्यम्

एवं कृत्वापश्चात्सर्वेषांपरिवाराणामालयं परितो होममाचरेत्, अथवा श्रीभूम्योः ब्रह्मेशानयोभृगुमार्कंडेययोर्वीशशेषयोः होममधमम् । विमानपालाना मिन्द्रादि लोकपालानामादित्यशेषयोर्होमंमध्यमम् । द्वारपालानां चक्रध्वजशंखमहाभूतपाकोर्जुनानांहोममुत्तममित्येके ।

## वेदिं परितः देवार्चनक्रमः

यज्ञशालां महावेदिं वा, परितःसर्वान् देवान् समभ्यर्च्य महावेद्युपरिष्ठात् प्रागादि चतुर्दिक्षु ध्रुवकौतुकयो रावरणत्रयदेवान् गर्भालयाधिपान् दक्षिणेब्रह्माणं मार्कंडेयम्, उत्तरे शंकरंख्यातीशं, द्वारेषु धात्रादि द्वारपालान् विमानपालादीन् सर्वान् देवान् प्रथमावरणाद्यावरणक्रमेण तत्तद्दिक्षुसमर्चयेत् ॥

## प्रथमावरण एव सर्वावरणदेवानां निवेशपक्षः

अथवा इंद्रं न्यक्षंश्रियं हविःपाल मग्निं भौमं जगद्भुवं विवस्वन्तं

यमं दुर्गां सप्तरोहिणीः सप्तमातृः नीलं च महाकालिं पुरुषं वरुणं मित्र बुधं ज्येष्ठं पुष्पेशं वायुं शुक्रं सप्तर्षीन् गंगा धन्यं क्षत्तारं निशाकरं पांचभौतिकं शांत मीशानं बह्निरक्षकं वाग्देवीं च, एवं पूर्वादि प्रदक्षिणं, प्राङ्मुखे-श्रीभूतगरुडचक्रध्वजशंखयूथाधिपविष्णुभूतान्यथाक्रमेण एकादशोप-चारैरभ्यर्च्य, तत्तन्नाम्नार्चयेदिति केचित् ॥

## हौत्रप्रशंसनम्

प्रभूतबलिमाहृत्य बलिनिर्वापं च कारयेत् । पश्चा द्धोतारमाहूय वस्त्रोत्तरीयाभरणैरभिपूजयेत् । सहोतासभ्यस्यपुरतस्तिष्ठेत् सभ्याध्वर्यु रग्निंप्रज्वाल्य 'होतरेही' ति वदते । सहोता 'अध्वर्य्वोर्देवते' त्युक्त्वा आचम्य प्रणवपूर्वं 'नमःप्रवक्र' (वै०म०प्र०८) इति वदन् तिष्ठन्सोच्चं (उच्चैः) वैखानससूत्रोक्तविधिना हौत्रं प्रशंसयेत् । अध्वर्युस्तेनोक्तं ओंकारंश्रुत्वा सप्तदशपालाशेध्मान् पद्ममुकुलाग्रानॄ घृतात्कान् गृहीत्वा, अग्नौ 'ओं स्वाहे' ति क्षिपेत् ; होता ब्राह्मण भारते (वै०म०प्र०८) त्यन्तमुक्त्वा यजमानस्य-गोत्रप्रवरं क्रमेण वदेत् । ग्रामो यजमानश्चेत् काश्यपप्रवरं वदेत् । 'आया' (वै०म०प्र०८) त्विति मंत्रान्ते 'विष्ण्वादि महाभूतान्तं आवहे' ति वदेत् ॥

## प्रणिधावावाहानं, सभ्ये उक्तहोमः

तथैवाऽध्वर्युः आदिमूर्त्यादिशर्वान्तं' दक्षिणे प्रणिधौधात्रादि महा भूतान्तंउत्तरप्रणिधौ समावाह्य आवाहन क्रमेण जुष्टाकारंकृत्वा तत्क्रमेणा-ऽऽज्याहुतीर्जुहोति । सभ्याग्निंपरिषिच्य पालाशेध्मान् गृहीत्वा मूलाग्राभ्यां-घृतंस्पर्शयित्वा देवंध्यायन्विष्णुगायत्र्याजुहोति । आग्नि होत्रहविण्या आज्यं-गृहीत्वा अतो देवादिना हुत्वा पश्चादुपभृताऽऽज्य मादाय विष्णुसूक्तैश्च हुत्वा जुह्वापक्वंसमादाय वैष्णवं षोडषद्वादशपर्यायतो जुहोति स्रुवेणाज्यमादाय पञ्चवारुणं मूलहोमं यद्देवादिकूष्माण्डंच सकृत्हुत्वा पश्चात् 'स्वस्ति चैवेहास्वहा, प्रजापतये स्वाहा, आदित्येभ्यःस्वाहा, विश्वेभ्योदेवेभ्यःस्वाहा, मरुद्गणेभ्यःस्वाहा, भूरग्नये च पृथिव्यै च महते च स्वाहे' त्यन्तैर्मंत्रै र्दशभिः शतशो जुहुयात् । एषा सहस्राऽऽहुतिः एनांउ पांशुयजेत । वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, ध्रुवकौतुकयोः पुरुषाद्यावरणत्रयदेवानां वैष्णवं, तत्तन्मंत्रैःजुहुयात् ॥

## सर्वदेवत्यमन्त्रक्रमः

'श्रिये जाता, हिरण्यवर्णा' मिति श्रियै, 'मेदिनी देवी, भूमिर्भूम्ने' ति मह्यै; 'ब्रह्मजज्ञानं, हिरण्यगर्भ' इति ब्रह्मणे; 'रुद्रमन्यं, त्र्यंबक' मिति रुद्राय; 'चिरायुषाय, पुण्यौघनिष्ठा' येति मार्कंडेयाय; 'पद्मापित्रे, भृगव' इति भृगवे, 'द्यावापृथिव्योः, यस्याः श्रिया तस्थुषोधृत्या, य एष बिभ्रति, वितत्यविश्वः योनोभिरक्षती' ति षट् च द्वारदैवत्याः, 'मुनींद्र' मिति मणिकाय, 'सन्ध्या'येति सन्ध्यायै, 'तापस' मिति तापसाय 'वैखानसाये'ति विखनसे, 'किष्किन्धाय, तीर्थाये'ति तीर्थाय ।

'त्रातारमिंद्रं, महाग्ँइन्द्रः महाग्ँइन्द्रो नृवत्, भुवस्त्वम्, एन्द्रसानसिं, प्रससाहिषम्, अस्माकम्, इन्द्रोभूतस्च, इन्द्रोद्यौः, इन्द्रंप्रणवन्तम्, इंद्रोवृत्रम्, इन्द्रोबभूवुः, इन्द्रोऽस्माकमिति त्रयोदशइन्द्राय, 'अग्निर्मूर्धा, अयमग्नि' रित्याग्नये; 'यमोदाधार, नमस्ते निर्ऋते' इति द्वौयाम्यौ, 'वसवः प्रथमः, सहस्राक्ष'इति निर्ऋतये । 'येतेशतं वरुणः उदुत्तमम्, अयाश्चग्ने, आपः सृजन्तु स्निग्धानी' ति चत्वारो वरुणाय, 'मरुतः परमात्मा, मरुतो गणाना' मिति वायवे, 'मिश्रवासस, एतान्ध्नतैता' निति द्वौकुबेराय, 'ईशानः, ईशाईशते' ति द्वावीशानाय, 'उदुत्यं चित्र' मित्यादित्याय, 'ममाग्ने, अहमग्ने, अग्नआयाही' तित्रयोभौमाय, 'प्रभुर्देवो, गृहाधिपतिरिति शनैश्चराय, 'बृहस्पतिर्देवानां, बृहस्पतिस्सोमो, बृहस्पतेऽतियत्, उभयामगृहीत' इति चत्वारो बृहस्पतये, 'श्रविष्ठजोयः तद्विष्णोः परमं, तद्विप्रास' इति(त्रयः)बुधाय, 'प्रजापतेनत्वत्, सुभूः स्वयंभूः' इति द्वौशुक्राय, 'भूगामिनी, इष्टगामिनी' ति द्वौगंगायै 'सोमयास्ते, यातेधामानी' ति चन्द्राय, 'रुद्रमन्यं, त्र्यंबक' मिति द्वौरुद्राय; 'जगद्भुवं, जगद्भुवोधिपतिः सुब्रह्मण्यो बृहस्पते, सुब्रह्मण्यो रुद्रभुवो, जगद्भवोयायज' इति षट् कुमाराय;

'अतोदेवा, इदंविष्णुरिति द्वौ पुरुषाय; 'या ब्रह्मचारिणी, साचारजन्म' नीतिद्वौ धात्र्यैः 'येषामराणां, याम्ये' ति द्वौज्येष्ठायैः 'जातवेदसे, तामग्निवर्णां, अग्नेत्वंपारया, विश्वानिनो, प्रतनाजितं, प्रतोषिक' मिति षट्दुर्गायै; नंदिन्यामूल, आपोविवेश, शाखाभूत, देवीप्रवाहिनी, बिसिनीभूता, प्रविद्युता; गंगा वाणी, विद्यांनो, माताह्ममेया, आयामहंत्वां, ययासती स्सत्यं, प्रसव्यनंगे, याभ्योहियोमानसा इति चतुर्दश मंत्रान् रोहिणीभ्यः ।

'यतस्त्वमासीत्, तस्मदस्मा' दिति भृगवे; 'कस्यांगिरोभूत्, विस्मापयती' ति मरीचये; 'व्यावर्धतेयो, सस्मारेति पुलहाय; 'यएषोदानं, आनंदरोद, इति पुलस्त्याय; 'प्रप्रायशो, पेनिष्पंता, इति क्रतवे; 'योनोवसिष्ठःसमोत्तमा' इति वसिष्ठाय; 'य आनसूयेशः य एष विभ्द्यः, इत्यत्रये; 'स एकोभूत्, यत्त्रैष्टुभश्चे' त्याकाशाय; 'प्रक्रम्या, योमातरिश्वे' ति वायवे 'वृषाकपे, जोऽभिमानी' त्यग्नये; 'आपोविश्वं, चातुर्य' मिति तोयाय; 'तयादित्या, तन्त्रीण्येषे' तिपृथिव्यै; 'पावकानो, महोर्ण' इति सरस्वत्यै; शंसानियच्छ, भूयाम' इति श्रियै; य उत्तमः, अग्नेःपंथाय' मिति न्यक्षाय; 'यमर्पयंति, यस्संहरती' ति विवस्वते; 'ऋचामधीशो, नीतंधृत' मिति मित्राय; 'येनायुष्टे, समूह्यतेंऽबेतिमहीधराय; 'चरुंपचेद्य, श्चुल्यांही' ति हविरक्षकाय ।

चतुर्मुखी, यालोकेति ब्रह्माण्यै, 'त्रिणेत्रधारी, चिह्नंचे' ति गणेश्वर्यै, 'ज्वालामाला बालान्हरी' ति षण्मुख्यै, 'युगे युगे, सर्वंरमे' ति वैष्णव्यै, 'कल्पेषु अन्ते'ष्वितिवाराह्यै, 'सासर्वदेवेषु, मालाधरी' ति इंद्राण्यै, 'चंडी, मोह्नी' ति काल्यै, 'धातास्य, फुल्लानी' ति पुष्परक्षकाय, विश्वान्बंले, सौरी' ति बलिरक्षकाय, 'अग्नेयो, प्रेक्षामधीश' इति विष्वक्सेनाय, 'शतधारं, कदाविसृजते' ति गरुडाय, 'धर्मोघमादौ, योगन्धर' न्निति विघ्नाय, 'यमर्पयन्ति, शन्न' इत्यनन्ताय, 'भूमाननोऽग्रे, वन्ध्योन' इति सुदर्शनाय, 'आसाग्र, ओजोबलाये' ति ध्वजाय, 'तंमायिशाग्रे, अस्मादुपास्य' इति शंखाय, भूतानां, भूतोभूते' ष्विति महाभूताय; 'अक्षहांतये, भूता' इति विष्णुभूताय, हुत्वा व्याहृतीर्जुहोति, यस्यदेवस्य स्वकोमंत्रो न विद्यते तस्यनाम मंत्रं वैष्णवान्तं जुहोति ॥

## तत्तदग्नौहोमेमन्त्रविशेषः

अथाहवनीये पुरुषसूक्तं भृगुमार्कण्डेययोर्मंत्र, ऐंद्रं, आग्नयम्; अन्वाहार्ये विष्णुसूक्तं, ब्राह्मं याम्यं नैऋतं; गार्हपत्ये 'अतो देवा' इति वैष्णवं, श्रीभूमिदेवत्यं वारुणं, वायव्यम्; आवसथ्ये एकाक्षरादिसूक्तं, रौद्रं, कौबेरं, ईशानदेवत्यं द्वादशाऽष्ट चतुरोवा पर्यायतो जुहोति । पौंडरीके विष्णुगाय त्र्याऽब्जं, बिल्वपत्रंवा, घृताक्तं अष्टाशतं जुहुयात् । विष्णुसूक्तं, ब्राह्मं, 'विष्णुस्सर्वेषा' मित्यादि पारमात्मिकं, वैष्णवान्तं जुहुयात् ॥

## विष्णवादि मूर्तीनां प्रधानमन्त्राः

अथातः पारमात्मिकाऽनुक्रमणम् 'विष्णुस्सर्वेषां, सुसूक्ष्म, ज्योतिर्वा, ईशो यस्मात्, रायामीशो, यो ब्रह्मशेद्वा, योवात्रिमूर्तिः, यद्वाकृतं, कःकोशमंगे यंयज्ञै' रिति प्रथमं; 'योवागाविष्ठो, योवावायुः, त्वमग्ने, त्वंजीवो, भूमेर्वितन्वन्, मनस्त्वं, त्वंवुद्धिः, यत्सूक्ष्मान्, यस्य वाभयात्, यंत्वांसव' मिति द्वितीयं; 'यस्त्वं, कामोभूत्वा, अंगादंगात्, योमोहयन्, योवादशात्मा, योब्रह्मा; सारस्वतो वा, योवा परंज्योतिः, यो दोषः यस्यैता ब्रह्मे' ति तृतीयं, 'वाकोवा, द्वावेतौ, योवाआयुः योवातेजः, सासंपायात्, योवासंयोगः, सहस्त्रं वा, स्वातिका, सत्वंवा उद्रेकं, सत्योज्योति' रिति चतुर्थं; 'सत्व सत्यं, समोद्योगः, कामीमिमा' आरणीवा, तत्सत्वोवाविष्णुः, तत्भूर्भूस्थम्, आपो आपः, त्रयीवाकामं, द्वौवामुख्यौ, स एकैक' इति पंचमं, 'स्वयमादिः, यत्स्वयंसृष्टं, स्वौजसासर्वं क्ष्मामेकां, यःकुंधरमाणो, योवापृधां, घांगामुशंतीं प्रजापतेनत्वत्, योधूर्धुरं, योवाव्यहिंसी' रिति षष्ठम्, 'तपोनिधिं, योवानृसिंहो, रयिंककुद्मान्, राकामहं, वेदाहमेतं, दिग्दोषायस्य, पद्मास्यवक्षो, यःपुंडरीकः, रयीणांपतिः रायांपतत्रे' ति सप्तमं, यत्सारभूतं, फलोवा एषः, धूर्नोवहंतां, विश्वंबिभर्षि, सोवास्वरूपा, भूर्भुवं वा, दाक्षायण्यै, आशास्समस्ता, योजंगमानां, योवादशाना' मित्यष्टमं, चत्वारो दोषा, वक्षोवसत्यस्य, अणोरणीयान्, विष्णुर्वरिष्ठो, ओजोजुषन्तां, मामात्मगुप्तां, यंचिन्तयन्तो, पुण्यांचपुण्यः, सोनोभूतं, सत्वैवनित्य' मिति नवमं, 'यागावरिष्ठा, वाय्वन्तरात्मा, सर्वोपरिष्ठात्, तंसर्वभूत, ज्योतिर्ज्योतिः, सत्वंसत्वात्मकं, अनिर्भिण्णं, यस्येच्छालोके, योवेदादिः योवाव्यक्त' मिति दशमं, योवाभूतिः सत्यस्सत्यस्थं, ऋतंसत्यं, अंरजिमन्तं, मामात्मगुप्तां, इत्येकादशम्, इति 'विष्णुस्सर्वेषामित्यादि पञ्चोत्तरशतं पारमात्मिकमिति विज्ञायते ॥

## वैष्णवान्तहोमानंतरं कर्तव्यम्

परिवाराणांतत्तद्धोमेषु तत्तन्मंत्रं वैष्णवंद्वादशाऽष्टचतुः पर्यायतो-जुहोति । विष्णुसूक्तेन पञ्चस्वग्निषु दधिक्षीरघृतलाजैर्युक्तं उपजु ह्वाहुत्वा सभ्याऽग्निंपौण्डरीकाग्निंच विना सर्वेष्वाग्निषु अन्तहोमंहुत्वा अग्नीन्विसृज्य नृत्तगेय वाद्यैश्च रात्रिशेषं व्यपोहयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे हौत्रशंसनादिसर्व-देवत्यपारमात्मिकानुक्रमणं(णिका) नाम द्वात्रिंशः पटलः ॥३२॥

# अथ त्रयस्त्रिंशः पटलः

## पीठावटे रत्नादिन्यासः दक्षिणादानं च

ततःप्रभाते स्नात्वा आचम्य संध्यामुपास्य देवादीनद्भिस्तर्पयित्वा ब्रह्मयज्ञं कृत्वा देवालयं प्रविश्य 'प्रतद्विष्णु' रिति सप्तप्रदक्षिणं कृत्वा यज्ञालयं-प्रविश्य अर्चापीठे कृतेऽवटे पञ्चविंशतिभागंकृत्वा अधिवासित रत्नान्यादाय तस्मिन् ब्रह्माणं इंद्रादि दिग्देवांश्चभ्यर्च्य पुष्पादीन् संशोध्य 'तमेकनेमि' (वै०मं०प्रं०८-) मित्युक्त्वाऽभिमृश्यतेनैव ब्रह्मस्थाने गजं प्रतिष्ठाप्य 'शतधार' (वै०प्र०८-) मिति गरुडं तस्मिन् 'ब्रह्मादेवाना' मिति ब्रह्मस्थाने ब्रह्ममणिं (तै०आ०८) 'इद्रंपणदवन्त' (वै०प्र०) मिति ऐन्द्रेवज्रमणिम्, 'अग्नावग्नि' (वै०प्र०८) रिति आग्नेय्यां मौक्तिक 'यमो दाधारे' (वै०म०६, तै०आ०८) ति याम्ये वैडूर्यम्, 'वसवःप्रथम' (वै०म०प्र०८) इति नैर्ऋत्यां शंखजं, 'एतेशत' (वै०प्र०८) मिति वारुण्यांस्फटिकम् 'मरुतःपरमात्मे' (वै०प्र०६) ति वायव्यांपुष्यकं, 'सोमं राजान' (वै०प्र०१) मिति सौम्ये चन्द्रकान्तं, 'ईशान' (वै०म०८) मित्यैशान्यांनीलं च, इंद्राग्न्योरंतरे 'शंन्नोनिधत्ता' (वै०प्र०८) मिति अमृताश्मकं, 'धाताधातृणा' (वै०म०८) मिति यमाग्नयोरन्तरे लोहिताक्षकं, यमनीलयोर्मध्ये 'विश्वेदेवस्चे' (वै०म०३) त्युत्पलमणिं, नीलवरुणयोर्मध्ये 'अधिब्रह्मायतता' (वै०प्र०८) मिति प्रवाळ, वरुणवाय्वोरन्तरे 'मम अर्धधान्य' (वै०म०प्र०८) मिति मनःशिलां, वायुसोमयोर्मध्ये 'अप्सर' (वै०प्र०८) स्विति शुक्तिजं, सोमेशानयोरंतरे 'काद्रवेय' (वै०प्र०८) इति विमलमणिं, ईशानेन्द्रयोर्मध्ये ।

'अर्यम्णःकुंभी' (वै०प्र०८)ति मरुदं, सन्यस्य अभ्यन्तरेपदे च एन्द्रादीन्विदिक्षुगैरिक, हरिताळ, मनःशिलां, जनश्यामक, सीस, पारत सौराष्ट्र, गोरोचनांऽतं तत्तद्दिगीशानांमन्त्रेणऽसंकरंसन्यस्य तथा शालि, व्रीहि, यव, निष्पाव,नीवार, षाष्टिका, माष, मुद्ग, तिल, तिल्वादीनांरूपं, सुवर्णेनकृत्वा श्रीवत्सादीनिमंगलादीनि च सन्यस्य पञ्चायुधानि मध्ये चतुर्दिक्षु सन्यस्य मध्ये पदे सौवर्णचिह्नानि कूर्मरूपमेघविद्युल्लताश्च विन्यसेत्, एवं कर्तुमशक्तश्चेन्नवरत्नाष्टमंगळपञ्चायुधवर्णचिह्नानि सन्यस्य तच्छ्वभ्रं दुकूलेनाऽऽछाद्य सुधयापूरयित्वा सुदृढंकृत्वा 'विष्णुस्त्वांरक्ष' त्विति उक्त्वा (वै०प्र०३) अभ्युक्ष्य पौंडरीकाग्निं विसृज्य गर्भालयंसंशोध्य

उपलिप्यपैष्ट्याभूमिमलंकृत्य उपरिष्ठाद्विमानपलाकमुक्तादामपुष्पमालाद्यैरलंकृत्य अधस्तात्कुसुमाक्षतानाकीर्य, अगरुधूपैः कर्पूरदीपै द्वारपार्श्वे दीपांकुरोपकुंभाद्यैरलंकृत्य यज्ञशाला मागत्य देवेशं प्रणम्य यजमानो गुरुमभिवंद्य अनुज्ञाप्य वस्त्रोत्तरीयोष्णीषाभरणैर्गंधमाल्यैश्च अभिपूज्य देवसन्निधौ सोदकं सुवर्णं दद्यात् ।

राजाचेत् - चतुष्षष्ठिनिष्कंगुरवे, ग्रामश्चेदष्ट चत्वारिंशत्, इतरेत्वाढ्या एकविंशतिनिष्कंदद्युः, । अन्येषामप्यशक्तानां दक्षिणादानं नवधा- उच्यतेपादाधिकंनवनिष्कमुत्तमोत्तमं, तथाष्टनिष्कमुत्तममध्यमं, तथासप्तनिष्कमुत्तमाधमं, पादाधिकं षण्णिष्कंमध्यमोत्तमं, तथा पंचनिष्कं मध्यममध्यमं, निष्कचतुष्टयं मध्यमाधमं, पादाधिकत्रयनिष्कमधमोत्तमं, तथा- निष्कद्वयमधममध्यमं, तथैकनिष्कमधमाधममिति तस्माछक्तिं नवं चयेत् । अज्ञानादर्थलोभाद्वाशाक्तिवंचने कृते ते पदार्थिन एव तत्फलमाप्नुयुः यजमानोरौरवमायाति ।

स्थापकानां सभ्याध्वर्यो र्होतुः पौंडरीकाध्वर्योश्च आचार्यदक्षिणा चतुर्यांशं, तदर्धमाहवनीयाध्वर्यूणां, तदर्थं अन्यपदार्थिनां च, दद्यात्, । यज्ञस्य दक्षिणाजीवोभवेत् अल्पदक्षिणायागो यजमानं ब्रूणहत्यां प्रापयति इत्येके । तस्मादवश्यं दक्षिणादानं यथोक्तं कुर्यात् । द्रव्यहीने तद्ग्रामयजमानस्यापि द्रव्यहानि; क्रियाहीने पुण्यक्रियाहानि मंत्रहीने स्वाध्यायायुष्यहानिः श्रद्धाभक्तिहीने सर्वहानिर्भवति, तस्मात् शास्त्रं संलक्ष्य यथाविधि समाचरेत् ।

## व्याहृति होमादि कुंभादिनयनं च

अथाध्वर्युस्सभ्याग्निकुंडंपरिस्तीर्य वैष्णवंव्याहृत्यंतं चतुष्कृत्वा हुत्वा स्विष्टकृदादि पूर्णाहुतिपर्यंतं कृत्वा आलयदक्षिणे प्रथमावरणे महानसे नैर्ऋते पूर्ववत्सभ्याग्निकुंडं कृत्वा प्रोक्षणोल्लेखनादिकं कृत्वा अग्निंनित्यहोमार्थं निधाय पश्चात् दैवज्ञमभिपूज्य ।

मुहूर्त्तेसमनप्राप्ते देवेशंप्रणम्य 'भूस्त्रप्रपद्ये' (व०प्र०८) इति कुसमांजलिंदत्वा ततादिवाद्यैर्घोषयित्वा वितानैः ध्वजैः छत्रैः, पिञ्छैः, चामरै, हेमादि परिछदै र्धूपै, र्दीपै, रष्टमंगलैः, पंचायुधै, र्भक्तैश्च, परितो नृत्तगेयवाद्यसंयुक्तं, शकुनसूक्तं समुच्चार्य, तोयधारापुरस्सरं आचार्यः शिरसा कुंभंधारयन्, अग्रतोगच्छेत् ततोऽनुस्थापका देवमादाय पार्श्वयोरुभयोर्देव्यौ

स्नपनोत्सवबलिबेराणि च क्रमेणैव आलयं प्रदक्षिणं कृत्वा भक्ताभिर्ब्राह्मण-पत्नीभिः दीपांकुरोदकुंभैः प्रत्युत्थानं कारयित्वा आलयमाविश्य आचार्यो ध्रुवस्य दक्षिणे धान्यपीठे कुंभं संन्यसेत् । स्थापकाः 'प्रतद्विष्णु' रिति कौतुकंब्रह्मस्थाने प्रक्षिप्य (प्रतिष्ठाप्य) पार्श्वयोरुभयोर्देव्यौ तद्दक्षिणेस्नापनं उत्तरेचोत्सवं बलिबेरं च स्थापयेयुः, अथवा दक्षिणेचोत्सवं उत्तरे स्नापनमित्येके । देवस्य पादौस्पृष्टा विष्णुसूक्तं, पुरुषसूक्तं एकाक्षरसूक्तं च (वै०प्र०१) जप्त्वा दक्षिणे श्रीदेव्याः पादौ स्पृष्ट्वा श्रीसूक्तं वामे महीदेव्याः पादौस्पृष्ट्वा महीसूक्तंजपेत् । ध्रुवस्य दक्षिणे च उत्तराभिमुखस्तिष्ठन् आत्मसूक्तं जप्त्वा समाहितो देवं ध्यायन् । सुवर्भुवर्भूरिति विंबस्य मूर्धनाभिपादेषु क्रमेणविन्यस्य प्रणवैरावेष्टयेत् ।

## न्यासमंत्र स्वरूपम्

एषां त्रयाणांन्यासमंत्रस्वरूपंवक्ष्ये - षण्डपुँस्त्रीरूपानृग्यजुस्साम मयान् सितहेमश्यामनिभान् रक्तश्यामशुक्लवस्त्रान् खड्गदंडपद्मधरान् प्रसन्नशीतसौम्यलोचनान् स्मृत्वान्यसेत् । एषां त्रयाणामास्तिक ऋषिः तृष्टुप्छंदः विष्णुर्देवतेति च स्मरेत् । यकारंपादयोरन्तरेपीठे हृदये अकारं चन्यस्यतौप्रणवैर्वेष्टयेत् । तयोः स्वरूपंवक्ष्येयकारं पुंरूषं कनकाभंसितांबरं द्विभुजं पुष्पदंडधरंस्मृत्वा न्यसेत् । अस्य ऋषिरंतर्यामी छंदो देवीगायत्रं वायुर्देवतेति चस्मरेत् । अकारं पुंरूषं कदंबकुसुमप्रभं पीतांबरधरं वैभवीशक्तिसंरूढं चतुर्भुजं अभयकट्यवलंबितहस्तं चक्रशंखधरं स्मृत्वा न्यसेत् । अस्य ऋषिर्ब्रह्मा देवीगायत्रीछंदः परमपुरुषो देवता इति च स्मरेत् । एताने वंध्यात्वा अक्षराणिसंस्कृत रूपेण विलिखेत् । अक्षराणि पृथक् पृथक् प्रणवैर्वेष्टयेत् । प्रणवस्वरूपमुत्तरतो वक्ष्यामः ।

## आवाहनक्रमः

'इदंविष्णु' रिति मंत्रेण कुंभस्थमाधावं शक्तियुतं कूर्चेनादाय 'आयातु भगवान् इति बिंबस्य मूर्ध्नि विष्णुमावाहयामीति संश्राव्य आवाहयेत् । तत्पीठंपरितः पुरषाद्यावरणत्रयदेवानां तत्तन्नाम्नासमावाह्य श्रीदेव्या दक्षिणे श्रीकारं, वामे भूमेर्लकारं च, हृदये सन्यस्य तत्तन्मन्त्रेणाऽऽवाह्य, ततो ब्रह्मणोमकारं, शंकरस्य शकारं, पुण्यस्य मकारंभृगोश्चलकारंबीजाक्षरं, सन्यस्य तत्तन्मंत्रैस्तत्तन्नाम मंत्रंसंयोज्याऽऽ (वै०म०८) वाहयेत । 'संयक्तमेत

दिति ध्रुवकौतुकयोस्संबंधकूर्चंप्रक्षिप्य कौतुकादीनांपूर्वोक्तन्या संचकृत्वा सौवर्णादि पात्रे शंखे वा पूतवारिणाऽऽपूर्य पुष्पाक्षतकुशकूर्चान्विन्यस्य दीपाद्दीपमिव ध्रुवबेरात् शक्तिं प्रणिधिजले तथाध्यायन्, कौतुके विंबे समावाह्य, तद्दक्षिणे देवींश्रियं, वामे हरिणींचाऽऽवाहयेत्। तथैवस्नपनोत्सव बलिबेरेषु क्रमेणाऽऽवाहयेत् । कुंभस्थोदकेन कौतुकंपरितः सुभद्राद्या-वरणत्रयदेवानावाह्य अन्येषु परिवारबिंबेषु तत्तद्बीजंविन्यस्य तत्तन्मंत्रै र्तत्तन्नाममंत्रै स्संयोज्या ऽऽवाहयेत् ।

आचार्यः स्थापकोद्यैस्सहितः पुण्याहं वाचयित्वा ब्रह्मघोषं च कारयेत्। तत्कुंभेनाऽभ्युक्षणं यः कुर्यात्, तस्य मनोवाक्कायकृतं पापं तत्क्षणादेव नश्यति ।

देवंनित्यार्चना विधानेनाऽभ्यर्च्य पायसादि हवींषि निवेद्य होमं हुत्वा बलिं निर्वाप्य, विधिना बलिबेरमाराध्य बलिं बलिबेरं वो (च) आलयंप्रदक्षिणंकारयित्वा पश्चाद् ब्राह्मणानन्नेनतर्पयित्वा वैष्णवान् संपूज्य तद्रात्रौ ध्वजारोहणंकृत्वा उत्सवोक्त क्रमेण उत्सवंकारयेत्, अशक्तश्चेत्त-द्रात्रौग्राममालयं वाप्रदक्षिणं कारयित्वा स्नपनोक्तक्रमेण स्नपनं कुर्यात् ।

अस्य यज्ञस्य प्रथमंअंकुरार्पणं, द्वितीयं संभारहरणं, तृतीयंमक्ष्युमोचनं, चतुर्थं बिंबशुद्धिः पंचममाग्निमथनं, षष्ठं वास्तुशुद्धिः सप्तममग्निप्रणयनं अष्टमं कुंभपूजा, ध्यानं नवमं; कलशस्थापनं, प्रतिसरं, शयनास्तरणं च दशमं; शयनाधिवासनं एकादशं; वेदाध्ययनं सर्वदेवार्चनं द्वादशं; हौत्रशंसनादि त्रयोदशं; प्रधानहोमं चतुर्दशं; देवस्योत्थापनं, स्नानं पंचदशं; रत्नन्यासं षोडशं; दक्षिणादानमग्निसंग्रहणंसप्तदशं; सद्मप्रदक्षिणंअष्टादशं; चलाचल स्थापनं तयोरावाहनं च एकोनविंशं; अन्यदेवानामावाहनं विंशातिकं; पुण्याहं एकविंशं; देवार्चनं द्वाविंशातिकं; ब्रह्मणभोजनंवैष्णवपूजनं त्रयोविंशं उत्सवं चतुर्विंशं; स्नापनं पंचविंशं; महाहविर्निवेदनम् इति क्रमेण एतेषां विपर्यासं न कारयेत् ।

एवं यः कुरुतेभक्त्याविष्णोस्थापनं ब्राह्मणः श्रधान स्तस्यमनो-वाक्कायकृतं पापं क्षिप्रं नश्यति। सर्वयज्ञफलं लब्ध्वासर्वान् कामानवाप्य दशपूर्वान् दशापरान् आत्मानं चैकविंशतिकं बिष्णोर्लोकं गमयित्वा तद्विष्णोः परमंसायुज्यपदंप्राप्नोति। क्षत्रियो विजयांश्रियं कीर्तिंच लब्ध्या अन्यूना-ऽनेककोशाक्षयबलः सर्वक्षत्रियाभिवंद्यः सागरान्तां महींप्राप्य चक्रवर्तीभूत्वा

विष्णोस्सारूप्य पदं प्राप्नोति । वैश्यो धनधान्यसंपूर्ण स्तेजस्वी यशस्वी पुत्रवान् पशुमान् पुण्यमनोरधपुरस्थसामीप्यपदंप्राप्नोति शूद्रः स्वकुलकेतुः प्रजावान् तेजस्वी यशस्वी पशुमान् ऐहिकान् भोगानवाप्य विष्णोःसालोक्यं पदं प्राप्नोति । ग्रामस्य राष्ट्रस्य राज्ञश्च शांतिमारोग्यधनधान्यायुर्विवृद्धिं च कुर्यात् । तस्माद्देवयजनं यष्टव्यामिति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे रत्नन्यासप्रतिष्ठाविधिर्नाम त्रयस्त्रिंशः पटलः ॥३३॥

# अथ चतुस्त्रिंशः पटलः

परिवाराणां पृथक्प्रतिष्ठाविधिं वक्ष्ये - द्वारं विधिवत्कृत्वा षडंगानि विधिना शिल्पिना योजयेत् । प्रथमं पट्टिका मूर्ध्वाननां दक्षिणशिरस्कां न्यस्य, तदूर्ध्वे दक्षिणस्तंभमुत्तराभिमुख, मुत्तरसंस्तम्भं दक्षिणाभिमुखं, तयोरुपरिष्ठा दुत्तरपट्टिकां अधोमुखीं, उत्तरशिरस्कांन्यस्य, अन्तरे दक्षिण कवाटमुत्तराभिमुखं, उत्तरकवाटंदक्षिणाभिमुखं, संस्थाप्य शिल्पिनां-विसृज्य; तद्वाराभिमुखे चोत्तरे वास्तुहोमं हुत्वा, पर्यग्निंकृत्वा, पंचगव्याद्भि-स्संशोध्य, षडंगानि प्रत्येकं वस्त्रेणावेष्ट्य, अभिमुखे धान्यपीठे कुंभंसंन्यस्य, आचार्य उत्तराभिमुखमासित्वा, ध्यायन् धातारं, विधातारं, भुवंगं, पतंगं, पतिरं वरुणं च तस्मिन् कुंभांऽभसि समावाह्य, पश्चाद्धौत्रं प्रशंस्य, धात्रादी-नामावाहनं, जुष्टाकारस्वाहाकारान् कृत्वा, धात्रादि षट्दैवमंत्रान् प्रत्येकं दशपर्यायं सवैष्णवं च हुत्वा, प्रभाते तत्कुंभोदकेन धात्रादीन् समावाह्य, अभ्यर्च्य, हविर्निवेदनं च कारयेत् । ब्रह्मेशयोः भृगुमार्कंडेययोश्च, मुखमंटपे सोपाने वा दक्षिणोत्तरयोः पृथगेव होमं हुत्वा कुंभपूजनं च कारयेत् ।

मणिकादीनां द्वारपालानां तत्तत्पार्श्वेऽभिमुखेवा होमं कुंभपूजनं च । अन्येषां परिवाराणां तत्तदालयाभिमुखे सर्वेषां पृथगेव वास्तुहोमं हुत्वा, अभिमुखेशय्यावेदिं द्विहस्तायतविस्तारां तत्तद्बिंबार्धाधिकमानां वा, तत्तुरीयांशोत्सेधं संकल्प्य, तत्तन्मन्त्रेण पूर्ववदक्ष्युन्मेषणाधिवासादीनि कृत्वा, पश्चादौपासनाग्नावाघारं हुत्वा, कुंभांश्चतुराढकसंपूर्णान् खंडस्फुटित-कालरहितान्, संगृह्य, तंतुनापरिवेष्ट्य, अद्भिरापूर्य, वस्त्रयुग्मेनावेष्ट्य, रत्नंसुवर्णं वा, तत्तदायुधसहितं, तत्तन्मन्त्रेण तत्तत्कुंभेप्रक्षिप्य, सप्तभिः

कलशैः संस्नाप्य, शय्यावेद्यां धान्योपरि पंचवस्त्राण्यास्तीर्य, प्रतिसरंबध्वा, तत्तन्मन्त्रेण शाययित्वा, उत्तराछादनं कृत्वा, हौत्रं प्रशंस्य तत्तन्मूर्ति मन्त्रेण आवाहन-जुष्टाकारस्वाहाकारहु (कृ)त्वा, सर्वेषां परिवाराणां तत्तन्मंत्रान् सवैष्णवान् षोडशकृत्वो द्वादश कृत्वो वा जुहुयात्, रात्रिशेषं व्यपोह्य, प्रभाते स्नात्वा, आलयमाविश्य, कुंभंबिंबं च समानीय, तत्तन्मंत्रेण रत्न न्यासंकृत्वा, तत्तन्मंत्रेण तत्तन्मंत्रेण तत्तद्बेरहृदये तत्तद्बीजाक्षरंन्यस्य, तत्तन्मंत्रेणाऽऽवाह्य, अभ्यर्च्य, हविर्निवेदये दित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे परिवाराणां पृथक्प्रतिष्ठाविधिर्नाम चतुस्त्रिंशः पटलः ॥३४॥

# अथ पंचत्रिंशः पटलः

अथ नवषट्पञ्चमूर्तिविधिं वक्ष्ये-सहस्राधिकविप्रवासे ग्रामे मध्ये, पश्चिमे वा, नवहस्ताद्येकषष्ठिहस्तान्तं द्विहस्तविवृद्ध्या, सप्तविंशति भेदेषु इष्टमानंविनिश्चित्यतत्रैकाशीति विभागं कृत्वा, मध्ये पञ्चविंशति भाग-मूर्ध्वतल करणार्थं दृढतरं यथालक्षणं परिकल्प्य, तत्परितः प्रागादि चतुर्दिक्षु पुरुषसत्याऽच्युताऽनिरुद्धानां गर्भागारं दशभागं तत्प्रमुखेनिर्गमयुक्त्या कृत्वा, तत्सम प्राच्यां मुखमंटपं सत्यादीनांमुखमंटपं तद्गर्भागारसमं त्रिपादमर्धंवा प्येवं विमानं नळिकाद्यलंकारयुतं चतुर्मुखं चतुर्द्वारं चतुष्कूटं त्रिशालंहारा-पञ्जरनासिकाद्यैस्सहकृत्वा, द्वितीयतले विस्तारं पूर्ववदेकाशीतिभागंकृत्वा, तन्मध्ये पञ्चविंशतिभागं विष्णोराधिमूर्त्तेरासनागारं तत्परितोऽलिन्द्र चतुर्विंशतिभागं तद्बाह्येद्वात्रिंशद्भागं बाह्यकुड्यं कूटशालाद्यै रुपशोभितं मुखमंटपसोपानसंयुक्तं कृत्वा, तस्यालिंन्द्रे दक्षिणे नरनारायणयोर्दक्षिणेनागारं पश्चिमे नृसिंहस्य उत्तरेवाराहस्यचाऽगारंयुक्त्यापरिकल्प्य, तृतीयतलविस्तारायामं यथालक्षणं देवेशस्य शयनागारं, मुखमंटपसंयुक्तमेवं त्रितलैर्युक्तं नवमूर्ति-विमानंकारयेत् ॥

## षण्मूर्तिप्रतिष्ठाविधानम्

षण्मूर्तिप्रतिष्ठाचेत् - एवंविमानंत्रितलं कृत्वा नरनारायण नार-सिंहान्विना तृतीयतले देवेशं शयानं द्वितीयतले विष्णुमादिमूर्तिं अधस्तले पुरुषादीन् पूर्ववत् स्थापयेत् ।

अथ विमाने द्वितले अधस्तले विष्णुमादिमूर्तिं भोगासनमार्गेण प्रतिष्ठाप्य तत्परितोऽलिंद्रं चतुर्दिक्षु चतुर्द्वारयुतं यत्प्रधानं तन्मुखमंटपंसंयुक्तंकृत्वा, तत्प्राच्यामलिंद्रे दक्षिण भागे भित्तिमाश्रित्यपुरुषं प्राङ्मुखं, दक्षिणेऽलींद्रे दक्षिणामुखंसत्यं, तथैव पश्चिमे अच्युतं, उत्तरे अनिरुद्धं, देवीभ्यां सहितं वा कृत्वा, ऊर्ध्वतले योगेशं योगशयनं वा संस्थाप्यार्चयेत् ।

## पञ्चमूर्तिप्रतिष्ठाक्रमः

पञ्चमूर्तिप्रतिष्ठाचेत् - विमानंदितलंकृत्वा, ऊर्ध्वतले विष्णुमादिमूर्तिम्, अधस्तले पुरुषादीन् पूर्ववत् स्थापयेत् । अथवा द्वितीयतले विष्णुं पूर्ववत् संस्थाप्याऽधस्तले अभ्यन्तरंघनसुयुक्त तत्परितःसालींद्रं चतुर्दिक्षु चतुर्द्वारयुतं प्रधानंमुखमण्टपसंयुक्तंकृत्वा, अलींद्रे प्राङ्मुखादीन् पुरुषादीन् देवीभ्यांसहितंरहितं वा स्थापयित्वाऽर्चयेत् ।

एवं यथोक्तविधिना सर्वाणिध्रुवबेराणिकर्तुमशक्तश्चेत् उक्तविमानेष्वेकस्मिन् विमाने चैकतलप्रासादं नवहस्तादहीनं निश्चित्य तस्मिन्नेकाशीति विभागं कृत्वा तन्मध्ये नवभागं गर्भागारं तत्परितः षोडशभागमभ्यन्तरं तत्परितश्चतुर्विंशतिभागमलिंद्रं तद्बाह्ये द्वात्रिंशद्भागंबाह्यकुड्यं अथवा तदेकविंशतिशतभागंविभज षट्पंचाशद्भागं अलिंद्रं चत्वारिंशद्भागंबाह्यकुड्यं कारयेदित्येके ।

तत्समं त्रिपादमर्धं वा, मुखमण्टपंदक्षिणपश्चिमोत्तरं मूर्तीनां द्वारदेशे जालकैर्युक्तं बाह्यंभित्तिविस्तारसम मभ्यन्तरभित्तिविस्तारं सप्तदशोत्सेध मर्धाधिकं, पादोन द्विगुणं, द्विगुणं वा, विमानोत्सेधं तदष्टभागं कृत्वा, एकांशमधिष्ठानं, तद्विगुणंस्तंभायाम मेकांशंप्रस्तरं, बाह्यभित्तौसंयोज्य अभ्यन्तरभित्तेरुपरिकंठमेकांशं, द्व्यंशंशिखरं, एकांशापिण्डि (स्थूपि) केत्येवमेकतलप्रासादंपरिकल्प्य, तस्मिन् गर्भालये दैविके भागे विष्णुमादिमूर्तिं भोगासनमार्गेण ध्रुवबेरं प्रतिष्ठाप्य, पुरुषादिमूर्तीनामादिमूर्त्तेभिन्नत्वात् ध्रुवबेरं विना आदिमूर्त्तेरनुरूपं विष्ण्वादीनि सर्वाणि कौतुकबेराणि विधिना कारयित्वा, गर्भागारे ब्रह्मपदे विष्णु मादिमूर्तिं, मलिंद्रेद्वारदक्षिणेप्राङ्मुखंपुरुषं दक्षिणे सत्यं, पश्चिमे अच्युतं, उत्तरे अनिरुद्धं, द्वारस्योत्तरपार्श्वेशयानं, दक्षिणे सत्यस्य पश्चिमे नरनारायणौ, पश्चिमे अच्युतस्योत्तरे नृसंहम्, उत्तरे अनिरुद्धस्य पश्चिमे वाराहं स्थापयेत् ।

अथवा तत्तद्भित्तावाभासंध्रुवं संकल्प्य, ध्रुवकौतुक संयुक्तं कारयेदिति केचित्। अथवा पुरुषादीनाम भ्यन्तरभित्तौ गुहासु रत्नन्यासं कृत्वा कौतुकानेव स्थापयित्वा अर्चयेत् ।

सर्वेषामंशानां (कौतुकानां) आवाहनं विसर्जनं च आदिमूर्त्ताविव नित्यहोमबलिदानबल्युद्धरणस्नपनोत्सवादीन्यादिमूर्त्ते(रे) रिव कारयेत्। अन्यत्सर्वसमानं पुरुषादीनामेव तौ विना तत्रार्चनमेवकारयेदित्येके ।

अथवा द्वितलप्रासादमेवं कल्पयेत् । विमानोत्सेधं चतुर्दशभागं कृत्वा, सार्धांशमधिष्ठानं, तत् द्विगुणंस्तंभायामं, सार्धांशं प्रस्तरं बाह्यभित्तौसंयुज्य, अलींद्रंविसृज्य अभ्यंतरं भित्तेरुपर्यूर्ध्वभूमेः पादंद्व्यर्धांशं, प्रस्तरमेकांशं, सपादांशंकंठं, सपादद्व्यंशंशिखर, मेकांशंस्थूपि तुंगं, बाह्यभित्तेरुपरिकूटशालाद्यैरुपशोभितं मुखमंटपचर्यासोपानादिभिर्युक्तं शिल्पिशास्त्रोक्तमार्गेण युक्त्या कृत्वा, अधस्तले विष्णुं पूर्ववत्, ध्रवकौतुकं संस्थाप्य, पुरुषादीन् पूर्ववत् स्थापयेत् ।

ऊर्ध्वतले शयानधुवकौतुकसंयुक्तं, कौतुकमेव वा, मानुषपदे पीठे रत्नानि विन्यस्य, संस्थाप्य, नृसिंहं द्वारस्योत्तरेपार्श्वे अलींद्रे स्थापयेदिति विशेषः ।

अथवा कूटाकारमनर्पितं चतुर्वर्गयुक्तं संकल्प्य, बाह्यभित्तिसमाभ्यंतरभित्तौ सप्तदशोत्सेधंषडंशं कृत्वा, एकांशमधिष्ठानं, द्व्यर्धांशं स्थंभतुंगं, द्व्यंशंशिखर, मर्घांशंस्थूपितुंगमिति एवं शिलयेष्टकयावाभित्तिंसंकल्प्य, लुपाविधानेनकृत्वा, लोहैर्लेष्टैर्वाऽऽछाद्य, उपरिस्थूपिकां(एकां) तिस्त्रः, पंच, सप्त, नव वा कारयेत्। मुखमंटपेनसार्धंवेति केचित्। ध्रुवबेरं विना विष्ण्वाधिसर्वमूर्तीनां कौतुकानेवपूर्ववत्प्रतिष्ठापयेत्। उपरितालार्धंविष्णुमूर्त्तेः प्राच्यामुन्नतं पीठं कृत्वा, तस्मिन् भित्तौ, गुहायां वा, देवं कौतुकमेव संस्थाप्य, नृसिंहं द्वारवामे अलींद्रे स्थापयित्वाऽर्चयेत् । षट्पञ्चमूर्त्तिभ्योऽधिकमूर्त्तीर्विनैवं कुर्यात्।

शक्तश्चेत्पुनर्वालगारं कृत्वा, कूटकागारे तस्मिन् प्रतिष्ठाप्य, अभ्यर्च्य, नळनळिकादिषु पूर्ववद्यथोक्तं विमानं ध्रुवबेराणि च कृत्वा, बालागारे अर्चितान् कौतुकादीन् समानीय तस्मिन्विमानेप्रतिष्ठाप्याऽर्चयेत्। अथवा प्रथमं तरुणालयस्थाने कूटाकारं कारयेदिति केचित्। क्षुद्रविमाने ध्रुवयुक्तं स्थापितंचेत्तस्मिन्महाविमानं कर्त्तुमिच्छेच्चेत् अन्यत्र विस्तीर्णदेशे

यथोक्तंविमानंध्रुवबेराणि च कृत्वा, पूर्वविमानस्थान् कौतुकादीन् समानीय, तस्मिन्विमानेप्रतिष्ठाप्य अर्चयेत् । पुनरपि पूर्वविमाने ध्रुवानुरूपंकौतुकं यथालाभमानेनकृत्वा संस्थाप्य, अलाभे सुवर्णं, कूर्चं वा, निक्षिप्य; यथालाभ मर्चयेत् । आदिमूर्त्यादीनां बल्युत्सवस्नपनादीनि सर्वाणि विष्णोरादिमूर्त्तेरिव समाचरेदित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे नवषट्पञ्चमूर्त्ति-विधिर्नामपञ्चत्रिंशःपटलः ॥३५॥

## अथ षट्त्रिंशः पटलः

अथ नवमूर्त्तीनांध्रुवबेराणि मानं च वक्ष्ये - धामगर्भ गृहद्वारस्तंभ-यजमानमानांगुलमानेषु इष्टमानेन ध्रुवबेराणि कल्पयेत् । देव्यौ बाहुकर्ण-सीमामानेन मुन्यादि परिवारांश्च तत्समेन, त्रिपादेन, अर्धेन वा कारयेत् ॥

मध्यमतले विष्णुमादिमूर्तिं सिंहासनेसमासीनं श्रीभूमिभ्यां, भृगुपुण्याभ्यां, ब्रह्मशंकराभ्यां, युक्तम्, उपरिभित्त्यूर्ध्वभागे दक्षिण-वामयोर्वंदमानौ चामरधारिणौ किष्किंधसुंदरौ च कामिनीव्याजि-नीभ्यामर्कचंद्राभ्यांयुक्तं प्रथमद्वारस्य दक्षिणे तुहिनंवामेबलिदं, द्वितीयद्वारे तापस सिद्धिदौ च; तस्याऽलींद्रे दक्षिणामुखौ नरनारायणौ, स्थितौ प्रजापतिशंकराभ्यांअर्चकमुनिभ्यांकामिनीव्याजिनीभ्यामर्कचंद्राभ्यांयुक्तो; द्वारस्य दक्षिणवामयो श्चक्रचूलि शंखचूलिनौ च, तस्याऽलींद्रे पश्चिमे नृसिंहं योगासनेसमासीनं कक्ष्ययोरोबद्धं ब्रह्मशंकराभ्यामर्चकमुनिभ्यां अर्कचंद्राभ्यां-युक्तं; द्वारस्य दक्षिणवामयोः चण्ड प्रचण्डाभ्यां सहैव कुर्यात् ॥

तस्याऽलींद्रे चोत्तरेचोत्तरामुखं वाराहं पूर्ववत् देवस्य दक्षिणे चंद्रं वामे हलेशं पूजकमुनी ब्रह्मशंकरौ अपरभि त्त्यूत्योर्ध्वभागे सनकसनत्कुमारौ चंद्रादित्यौ द्वारदक्षिण वामयो दुर्गां विघ्नेशं च कुर्यात् ॥

अधस्तले प्राच्यां पुरुषं भोगासनमार्गेणाऽऽसीनं पूजकमुनिभ्यां ब्रह्मशंकराभ्यां अपरभित्त्यूर्ध्वभागेश्वेतच्छत्रेण, वामयोःचामरधारिणीभ्यां मायासंह्लादिनीभ्यां सनकसनत्कुमाराभ्यां चंद्रसूर्याभ्यां च युक्तं कारयेत् ।

प्रथमद्वारे तुहिणबलिंदौ द्वितीयद्वारे शंखपद्मनिधी द्वारसोपान-स्थलेभित्तौ प्राङ्मुखींश्रियं, वारणाभिषेकयुक्तां कारयेत् ।

दक्षिणे सत्यमूर्तिं दक्षिणामुखं देवीभ्यां पूजकमुनिभ्यां ब्रह्मशंकराभ्यां अपरभित्त्यूर्ध्वभागे छत्रेण चामरधारिणीभ्यां जयाभद्राभ्यां सूर्यचंद्राभ्यां शुक्रबृहस्पतिभ्यां युक्तं प्रथमद्वारे नासत्यदस्त्रौ द्वितीयद्वारे चक्रशंख चूलिनौ दक्षिणे सोपानस्थलभित्तौ दक्षिणामुखं वाग्देवीं च कारयेत् ॥

पश्चिमे पश्चिमाभिमुखं अच्युतं देवीभ्यां पूजकमुनिभ्यां ब्रह्मशंकराभ्यां अपरभित्त्यूर्ध्वभागे छत्रेण चामर धारिणीभ्यां जयाभद्राभ्यां सूर्यचंद्राभ्यां युक्तं; प्रथमद्वारे गुहजांबवौ, द्वितीयद्वारे शंखपद्मनिधी, सोपानस्थलभित्तौ पश्चिमामुखं मन्मथं कारयेत् ॥

उत्तरेचोत्तराभिमुखं अनिरुद्धं देवीभ्यांसहितं रहितं वा पूजकमुनिभ्यां ब्रह्मशंकराभ्यां परभित्त्यूर्ध्वभागे छत्रेण चामरधारिणीभ्यां जयापुष्टिकाभ्यां सूर्यचंद्राभ्यां युक्तं; प्रथमद्वारे विद्युदप्सरसो द्वितीयद्वारे चक्रशंखचूलिनौ सोपानस्थलभित्तौ चोत्तराभिमुखं मुद्गलंमुनिं च कारयेत् ॥

तृतीयतले योगशयनं दक्षिणशीर्षं अनंतस्यसप्तभिपंचभिर्वा-फणौछन्नमौलिं द्विभुजं पूजं पूजकस्थाने महीमार्कंडेयौ देवस्यदक्षिण-हस्तंमार्कंडेयशिरसिन्यस्तं वामं समुद्धतकटकं पादंदक्षिणंप्रसारित-मीषत्कुंचितं नाभ्यंबुज समासीनं ब्रह्माणं पंचायुधान् गरुडं च उद्देश्य-करतलप्रहारयुक्तं पादपार्श्वे मधुकैटभौ च दक्षिणपार्श्वे कर्किणं सनकं वामे भारतीं सनत्कुमारं ऊर्ध्वेवेदान् दक्षिणोत्तरयोः ब्रह्मशंकरौ प्रथ-मद्वारे गंगायमुने द्वितीयद्वारे सुरसुंदरौ च कारयेत् ।

ब्रह्मस्थाने कौतुकं चतुर्भुजं शंखचक्रधरं अनंतोत्सेगं आसीनं फणैस्सप्तभिःपञ्चभिर्वाछन्नमौलिं कारयेत् ॥

आदिमूर्तीनांसर्वासांमूर्तीनां तत्तत्कौतुकबिंबानां पूर्वोक्तविधिना तत्तध्द्रुवबेरानुरूपं, विष्णुंचतुर्भुजं वा, कारयेत् ।

इंन्द्रादिलोकपालानाम् अन्येषां परिवाराणां नवभेदेष्वेकमार्गेण नवषट्पञ्चमूर्त्तीः विमाने कारयेत् ॥

इति श्रीवेखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे नवषट्पञ्चमूर्त्ति-कल्पनंनाम षट्त्रिंशःपटलः ॥३६॥

# अथ सप्तत्रिंशः पटलः

## नवषट्पञ्चमूर्तीनां प्रतिष्ठाविधिः आचार्यवरणम्

अथ नवषट्पंत्रमूर्त्तीनां प्रतिष्ठाविशेषं वक्ष्येपूर्वेक्तेषु नक्षत्रेषु एकस्मिन् यजमानानुकूले नक्षत्रे प्रतिष्ठां कुर्यात् । तद्दिनात्पूर्वं यथोक्तमंकुरानर्पयित्वा नवमूर्त्तीःसमुद्दिश्य प्रत्येकमाचार्यं स्थापकानृत्विजश्च पूर्वोक्त लक्षणसंपन्नान् उक्तदोषविवर्जितान् वरयेत् ॥

## आदिमूर्तेः प्रतिष्ठाक्रमः

तथैव संभारान् संभृत्य, आलयाभिमुखे विष्णोरादिमूर्त्तेर्यागशालां पञ्चहस्तायतविस्तारां षट्त्रिंशत्पादसंयुक्तां प्रपां कृत्वा, तन्मध्ये वर्षनिवारणकूटं कृत्वा, तस्मिन् पञ्चविंशतिभागं कृत्वा तन्मध्ये पदे शय्यावेदिं तद्भित्तिसममाऽऽयामविस्तारां, तत्तुरीयांशोत्सेधां दर्पणोदरवत् स्थलं संकल्प्य, परितश्चाऽष्टसु पदेषु उपपदेष्वष्टांऽगुलोत्सेधानि स्थलानि कृत्वा, शय्यावेद्याः पूर्वे सभ्यमाहवनीयं च, याम्ये अन्वाहार्यम्, पश्चिमे गार्हपत्यं, सौम्ये चावसथ्यम्, आग्नेय्यां पौण्डरीकं, नैऋत्यां विष्टरं, वायव्यां संभारवेदिम्, ऐशान्यां स्नानश्वभ्रंच तद्बाह्ये षोडशभागैकभागांगुलोत्सेधं स्थलं कृत्वा इन्द्रादि दिग्देवानां तत्तद्दिक्षु औपासनाग्निकुंडानि कृत्वा इन्द्राग्न्योर्मध्येगरुडस्य यमपावकयोर्मध्ये ब्रह्मणो यमनीलयोर्मध्येभृगोः नीलवरुणयोर्मध्ये श्रीदेव्याः, वरुणोदानयोर्मध्ये महीदेव्याः, वायुसोमयोर्मध्ये मार्कंडेयस्य, सोमेशानयोर्मध्ये शंकरस्य, इन्द्रेशानयोर्मध्ये विष्वक्सेनस्य च, अन्येषां परिवाराणांत त्तद्दिक्षु यागशालां परितश्चौपासनाग्निकुंडानि कुर्यात् ॥

तेषां बेरमालयं यदि स्यात् तत्तदभिमुखे च, औपासनाग्निकुंडकुंभपूजनं च पृथगेव कुर्यात् । बिम्बाभावेपि इन्द्रादीशानपर्यन्तानां द्वारेषु द्वारपालानां न्यक्षादीनामभिमुखे श्रीभूतस्यानपायिनं च होमंकुर्यादिति केचित् ।

## पुरुषादीनां यागशालादि लक्षणम्

प्राच्यां पुरुषमूर्त्ते र्यागशालां षोडशस्तंभसंयुक्तां तन्मध्ये शय्यावेदिं परितश्चतुरग्निकुंडानि च परिकल्प्य, आलयाद्दक्षिणे तद्द्वाराभिमुखे सत्यमूर्त्तेर्यागशालां तन्मध्ये शय्यावेदिं परितश्चतुरग्निकुंडानि परिकल्प्य,

तद्दक्षिणे नरनारायणयोर्यागशालां तन्मध्ये शय्यावेदिं तन्मध्ये चतु रग्नीन् संकल्प्य, पश्चिमेअच्युतमूर्त्तेर्यागशालां तन्मध्ये शय्यावेदिं परितश्चतुरग्नीन्, तत्पश्चिमे नृसिंहस्य यागशालां तन्मध्ये शय्यावेदिं परितश्चतुरग्नीन् परिकल्प्य, उत्तरे अनिरुद्धमूर्त्तेर्यागशालां तन्मध्ये शय्यावेदिं परितश्चतुरग्नीन् परिकल्प्य, तस्योत्तरे वाराहस्य यागशालां तन्मध्ये शय्यावेदिं परितश्चतुरग्नीन् परिकल्प्य, अन्यत्सर्वं पूर्ववत्कुर्यात् ।

आलयस्योत्तरे श्रामणकाग्निकुंडं कृत्वा सूत्रोक्तविधिनावा स्तुहोमं हुत्वा सर्वत्रपर्यग्निपञ्चगव्याभ्यां संशोध्य प्रोक्षणैःप्रोक्ष्य अधिवासनगतान् देवान् आदायाभिषिच्य व स्त्रोत्तरीयाद्यैर्विभूष्या अष्टोपचारैरभ्यर्च्य आलयमावेश्य तत्तद्यागशालायां पश्चिमे विष्टरे प्राङ्मुखान् देवान् संस्थाप्य सर्वेष्वग्निकुंडेषु आघारं हुत्वा सर्वेषां आचार्यः(र्याः) पूर्ववत्प्रत्येकं कुंभपूजनं कुर्या(र्युः)त् । यजमानः आचार्यान् वस्त्राद्यै रलं कुर्यात् ।

कुंभानादाय तंतुनापरिवेष्ट्य प्रक्षाल्य नादेयैरा धावैःपूरयित्वा पृथक् पृथक् वस्त्रयुग्मेनाऽऽवेष्ट्य प्रत्येकं नवरत्नानि सौवर्णानि अष्टमंगल पंचायुधवर्णचिह्नानि च विन्यस्य, तत्तदगारे, बालागारे वा, देवाभिमुखे-धान्यराश्युपरि कुंभान्संन्यस्य, पूर्ववध्यात्वाऽऽवाह्य, पश्चात् स्थाप कानाहूय, आदिमूर्त्यादीन् यथाक्रमेणाऽऽचार्याःतत्तत्समादाय पुरतेगच्छेयुः ।

तत्तद्यागशालामासाद्य स्नानश्वभ्रेप्रतिष्ठाप्य, सप्तभिःकलशैः संस्नाप्य, वस्त्रोत्तरीयाभरणैरलंकृत्य, अभ्यर्च्य, पुण्याहान्ते प्रतिसरंबध्वा, तत्तद्वेद्यां धान्योपरि पञ्चशयनानि, वासांसिवाऽऽस्तीर्य तथैवशाययित्वा उत्तराच्छादनं कृत्वा होतृन् सर्वान् वस्त्रोत्तरीयाद्यैरलंकृत्य तत्तत्प्रधान होमे हौत्रंप्रशंस्य, तथैवाऽऽवाहनादीनि कुर्यात् ।

विष्णमूर्तेःशयानस्य सभ्यं, पुरुषमूर्त्ते राहवनीयं, सत्यमूर्त्तेरन्वाहार्यं, अच्युतमूर्तेर्गार्हपत्यं; अनिरुद्धमूर्त्तेरावसथ्यं; नरनारायणयोरन्वाहार्यं; नृसिंहस्यगार्हपत्यं; वाराहस्याऽऽवसथ्यं; प्रधानाग्निरित्युच्यते ।

पश्चादादिमूर्त्तेस्सभ्याग्निं परिस्तीर्य, परिषिच्य, पालाशेध्मान् गृहीत्वा मूलाग्राभ्यां घृताक्तान्, विष्णुगायत्र्या जुहुयात्, उषभृता वैष्णव माज्येन, जुह्वापक्वंसाज्यंवैष्णवेन, स्त्रुवेणाज्यमादाय, विष्णुसूक्तम् अग्निहोत्रहविण्या पुरुषसूक्तं च, दशपर्यायतो यजेत् ।

सहस्राहुतिमिष्ट्वा, पञ्चवारुणं, यद्देवादींश्च, ब्रह्मजज्ञानादि सर्व-देवत्यमन्त्रान् वैष्णवं, मिन्दाहुतीर्विच्छिन्नं च, सकृज्जुहुयात्। आहवनीये पुरुषसूक्तं अन्वाहार्ये विष्णुसूक्तं, गार्हपत्ये वैष्णवं, आवसथ्ये चैकाक्षरादि-सूक्तं त्रिर्जुहुयात्। विष्णुसूक्तेन पंचस्वग्निषु क्षीरदध्याज्यलाजान्युक्तान् उपजुह्वा जुहुयात्। आज्यं स्रुचागृहीत्वा वैष्णवं सकृद्धुत्वा पौंडरीके वैष्णवं जुहुयात्। अब्जशतं, बिल्वपत्रं वा, घृताक्तं विष्णुगायत्र्याजुहुयात्। पुरुषसूक्तं, 'विष्णुः सर्वेषा' मित्यादि पारमात्मिकं, देवं ध्यायन् जुहुयात्। परिषदां होमेषु तत्तन्मन्त्रान् द्वादशाष्ट पर्यायतो जुहुयात्।

## तृतीयतलस्थशयानस्य

तृतीयतले शयानस्य शयनस्थापनमार्गेण पञ्चाग्नीनां होमं हौत्रशंसनं मूर्त्यावाहनादिकं चाचरेत्।

## पुरुषस्य

अधस्तले प्राच्यां पुरुषमूर्ते र्यागशालायामाहवनीये पुरुषसूक्त-मन्वाहार्ये विष्णुसूक्तं गार्हपत्येवैष्णवं श्रीदेवत्यं पूजकमुन्योर्मंत्रं आवसथ्ये एकाक्षरादिसूक्तं महीदेवत्यं रौद्रं च जूहूयात्।

## सत्यस्य

दक्षिणे सत्यमूर्तेर्यागशालायामन्वाहार्ये विष्णसूक्तं, गार्हपत्ये वैष्णवं, श्रीदेवत्यं ब्राह्मं आवसथ्ये एकाक्षरादि सूक्तं, भूमिपुण्ययोर्मंत्रं, आहवनीये-पुरुषसूक्तं, महीदेवत्यं, रौद्रं च, जुहुयात्।

## अच्युतस्य

पश्चिमे अच्युतमूर्त्तेर्यागशालायां गार्हपत्येवैष्णवं, आवसथ्ये-चैकाक्षरादिसूक्तं, श्रीदेवत्यं, ब्राह्मं, आहवनीये पुरुषसूक्तं, मुन्योर्मंत्रं, अन्वहार्ये विष्णुसूक्तं, महीदेवत्यं, रौद्रं च जुहुयात्।

## अनिरुद्धस्य

उत्तरे अनिरुद्धमूर्त्तेर्यागशालायां आवसथ्ये चैकाक्षरादि सूक्तम्, आहवनीये पुरुषसूक्तं श्रीदेवत्यं, बाह्मं; अन्वाहार्ये विष्णुसूक्तं, मुन्योर्मंत्रं, गार्हपत्ये वैष्णवं, महीदेवत्यं वैष्णवं च जहृयात।

## नरनारायणयोः

दक्षिणे नरनारयणयो र्यागशालायाम् अन्वाहार्ये विष्णसूक्तं, विष्णु गायत्रीं च, गार्हपत्ये वैष्णवं, आदित्य देवत्यं, आवसथ्ये चैकाक्षरादिसूक्तं, आहवनीये पुरुषसूक्तं, प्राजापत्यं च जुहुयात् ।

## नृसिंहस्य

पश्चिमे नृसिंहस्य यागशालायां गार्हपत्येवैष्णवं, 'योवानृसिंह' इति एकं, आवसथ्ये चैकाक्षरादिसूक्तं, ब्राह्मम् आहवनीये पुरुषसूक्तम् अन्वाहार्ये विष्णुसूक्तं, रौद्रं च जुहुयात् ।

## वाराहस्य

उत्तरे वाराहस्य यागशालायां आवसथ्ये एकाक्षरादिसूक्तं, 'यत्स्वयंसृष्ट' मित्येकं महीदेवत्यं, आहवनीये पुरुषसूक्तं, (ब्राह्ममाहवनीये पुरुषसूक्तं) ऐंद्रं, अन्वाहार्ये विष्णुसूक्तं, गार्हपत्ये वैष्णवं, वारुणं च, जुहुयात् ।

सर्वान् मंत्रान् षोडशद्वादशपर्यायतो जुहोति पुरुषादीनां चतुर्णां नरनारायणनारसिंहवराहाणां च, तत्तत्प्रधानाग्निमेवहुत्वा यथोक्तं होमं जुहुयादित्येके ।

विष्णुमूर्ते स्सभ्यं पौंडरीकं च अन्येषां तत्तत्प्रधानाग्निं च विना सर्वहोमे अन्तहोमंहुत्वा, रात्रिशेषंव्यपोह्य, प्रभातेत्वाचार्यः स्थापकाद्याश्च स्नात्वा, आलयमाविश्य प्रदक्षिणंकृत्वा, तत्तद्यागशालामागत्य, पूर्ववत्सर्वान् देवानुत्थाप्य, अभ्यर्च्य, गर्भालयेषु सर्वेषु कौतुकपीठे रत्नन्यासं कृत्वा, सभ्याग्निंविना सर्वहोमेष्वन्तहोमं जुहुयुः । यजमानः आचार्यादिभ्यो यथोक्तदक्षिणां देवसन्निधौ सोदकं दद्यात् । सभ्याग्निंपरिस्तीर्य अंतहोमं हुत्वा, तमग्निंनित्यहोमाय विन्यसेत् ।

पश्चात्सुमुहूर्त्ते प्राप्ते तत्तद्यागशालामागत्य, तत्तदाचार्यादयः 'भूः प्रपद्य' इति क्रमेण कुसुमांजलिं दत्वा, तं तं देवं प्रणम्य, सर्वालंकार संयुक्तं, सर्ववाद्यघोषसमायुक्तं, तोयधारापुरस्सरं, शकुनसूक्तं समुच्चार्य, आचार्याः कुंभानाहृत्य शिरसाधारयन्तोऽग्रतो गच्छेयुः । स्थापकाः कौतुका दीन्यादायानुगच्छेयुः आलयं प्रदक्षिणं कृत्वा पूर्वं विष्णुमादिमूर्तिं पश्चात्

पुरुषसत्याच्युतानिरुद्धाँश्च, शयानं देवं, नरनारायणनारसिंह वाराहाँश्च क्रमेणानीय तत्तद्गर्भागारंप्रविश्य तत्तध्द्रुवबेरस्य दक्षिणपार्श्वे कुंभन्सन्यसेयुः। 'प्रतद्विष्णु' रिति कौतुकबेराणि संस्थाप्य, पार्श्वेयोः देव्यौ च, पूर्ववत् स्थापयेयुः।

आत्मसूक्तं जप्त्वा ध्रुवबेरस्य पादौस्पृष्ट्वा, सूक्तानि जप्त्वा, तथैव मंत्रन्यासं (अक्षरन्यासं) च कृत्वा, समाहितो देवं ध्यायन् पूर्ववत्स मावाह्य पुण्याहंकृत्वा, नित्यार्चनाविधानेनाऽभ्यर्च्य, पायसादीनि हवींषि निवेद्य, होमं हुत्वा, बलिंनिवाप्य, बल्युद्धरणं च कारयेत्। एष विशेषोऽन्यत्सर्वंसमानं।

षण्मूर्तिप्रतिष्ठाचेद्विष्णवादि पंचमूर्त्तीश्शयनं च यथोक्तविधिना-प्रतिष्ठापयेत् ॥

## अशक्तविषयककल्पः

एवं सर्वासां मूर्त्तीनां पृथक् कर्त्तुमशक्तश्चेत् प्राच्या मेका याग शालां पूर्ववत्कृत्वा मध्ये पदे विष्णोःप्रागादीशानान्तमष्टसु पदेषु यथाक्रमेण संवेशयन् यथाक्रमेणानन्तशयनपुरुषसत्यनरनारायणाच्युतनृसिंहानिरुद्ध-वाराहाणांशयनवेदिं तत्तत्प्राच्यां तत्तप्प्रधानाग्निं च कृत्वा एकाग्निविधानेन प्रतिष्ठापयेदिति केचित् ॥

## अशक्तानां नवमूर्त्यादीनां प्रतिष्ठाविशेषः

अशक्तानामेकतलप्रासादे नवषट्पश्चमूर्त्तीनां प्रतिष्ठाविशेषं वक्ष्ये - पूर्ववदाचार्यं एकं, स्थापकादींश्च वरयित्वा, यथोक्तमंकुरानर्पयित्वा, संभारान् संभृत्य, तथैवाक्षिमोचनाधिवासौच कृत्वा, आलयाभिमुखे, दक्षिणे वा, पूर्ववद्यागशालां, महावेदिं च कृत्वा, परितोग्निकण्डानि, पौंडरीकाग्निकुंडं च, कृत्वा, वास्तुशुद्धिं च कृत्वा, सर्वेष्वग्निष्वाघारं हुत्वा, पूर्ववत्कुंभं-संस्थाप्य, आलये बालागारे, देवाभिमुखे, धान्योपरि कुंभंसंन्यस्य, आचार्यश्चोत्तराभि मुखआसित्वा, पूर्ववध्द्यायन् कुंभेसर्वान् देवान् समावाह्य, कुंभंसंगृह्य, अग्रतोच्छेत्। स्थापकाः शकुनसूक्तं समुच्चार्य, पूर्वं विष्णु मादिमूर्त्तिं, पश्चात्पुरुषादीन् स्नापनोस्तवबलिबेराणि च आदायाऽनगच्छेयुः स्नानवेद्यां मध्येविष्णुं, दक्षिणेश्रियं, पुरुषसत्यनरनारायणनारसिंहाँश्च, उत्तरेमहीं, अच्युतानिरुद्धवाराहाँश्च, शयानं च संस्थाप्य, एषां दक्षिणपार्श्वे

कुंभंसंन्यस्य, स्नापनोत्सवबलिबेराणि च, तत्क्रमेण संस्थाप्य, पूर्ववत्प्रत्येकं कलशैः संस्नाप्य, वस्त्रोत्तरीयाद्यैर्विभूष्याऽभ्यर्च्य यज्ञालये नैऋते देवान् सं स्थाप्य, पूर्ववत्प्रतिसरं बध्वा, ध्रुवबेरेपि प्रतिसरमाबध्य, पुरुषादीनां ध्रुवबेरं यदिस्या दाभासंविना प्रतिसरं बंधयेत् ।

पूर्ववत् पृथक् पृथक् शयनान्यास्तीर्य, मध्ये विष्णुमादिमूर्तिं, देवी भ्यांसह, दक्षिणे पुरुषसत्यनरनारायणनृसिंहाँश्च, शयानं च, तत्तद्देवी भ्यांसह समारोप्य, तेषां दक्षिणे स्नापन, मुत्तरेचोत्सव बलिबेरं च समारोप्य, पूर्ववच्छाययेत् ।

यतोद्वारंत तस्तेषांमौलिं कृत्वा, उत्तराछादनं कृत्वा, सभ्याग्नौपूर्व वद्धौत्रं प्रशंस्य, आवाहनादीनि कृत्वा, सर्वानभ्यर्च्य, चतुर्दिक्षु वेदान-ध्यापयेत् ।

सभ्याग्नौ पूर्वोक्तहोमंहुत्वा, आहवनयादिषु यथोक्तं होमं जुहुयुः, तथैवपद्महोमं हुत्वा, सर्वपरिवाराणां तत्तद्देवत्यं, तत्तद्धोमेसभ्येवातथैवहुत्वा, नृत्तगेयवाद्यैरात्रिशेषं नयेत् ।

अथाचार्यः प्रभाते स्नात्वाऽऽलयमाविश्य, देवानुत्थाप्य, पूर्व वद्विष्णुवादीनां सर्वेषां कौतुकादीनां पीठेषु रत्नादीनि सन्यसेयुः, यजमानः आचार्यादिभ्यो दक्षिणां दद्यात् । सभ्याग्निं परिस्तीर्य, अंतहोमं हुत्वा, तदग्निंनित्यहोमाय विन्यसेत् ।

मुहूर्ते प्राप्ते सर्वालंकारसंयुक्तं, तोयधारापुरस्सरं, शकुनसूक्तं जप्त्वा, देवं ध्यायन् आचार्यः शिरसा कुम्भंधारयन् अग्रतो गच्छेत् । स्थापकाःविष्णवादिमूर्त्तीःपूर्ववदादायाऽनुगच्छेयुः ।

आलयंप्रदक्षिणंकृत्वा, अभ्यन्तरंप्रविश्य, ध्रुवबेरस्यदक्षिणे कुंभं-सन्यस्य, ब्रह्मस्थाने विष्णवादिमूर्त्तिं, तद्वारदक्षिणे अलींद्रे प्राङ्मुखंपुरुषं, दक्षिणेदक्षिणामुखंसत्यं, तत्पश्चिमेनरनारायणौ दक्षिणाभिमुखौ, पश्चिमे-पश्चिमाभिमुखमच्युतं, तदुत्तरे तथैवनृसिंह, उत्तरेचोत्तराभिमुख मनिरुद्धं, तत्पश्चिमेतथैववाराहं, पूर्वद्वारोत्तरे ऽलींद्रेशयानं प्राङ्मुखं, पूर्ववत्स्थाप-येयुः ।

तस्मिन्मुखमंटपे अभ्यन्तरेवादक्षिणे स्नापन, मुत्तरे चोत्सवं बलिबेरं च स्थापयेत् ।

आचार्यश्चात्मसूक्तं जप्त्वा, ध्रुवस्यपादंस्पृशन् सूक्तानि जप्त्वा, दक्षिणे चोत्तराभिमुखस्तिष्ठन्, ध्रुवबेरे अक्षराणिविन्यस्य, समाहितः कुम्भस्थां शक्तिमादाया, 'आयातुभगवा' निति ध्रुवबेरस्यमूर्ध्नि विष्णुमावाहयामीति समावाहयेत्। तथैव पुरुषादीनांध्रुवबेरेषु तत्तन्मूर्त्तिभिस्समावाहयेत्। तथैव पुरुषादीनांध्रुवबेरं हीनं चेत्, आदिमूर्ते ध्रुवबेरस्य मूर्ध्नि सर्वांमूर्त्तिमावाहयेत्।

ध्रुवस्यपादंपरितः पुरुषाद्यावरणत्रयदेवान् समावाह्य, दक्षिणे श्रियं, वामेहरिणीं समावाहयेत् विष्णवादीनां कौतुकानां स्नापनोत्सव वलिबेराणां बीजमंत्रन्यासमक्षरन्यासं च कृत्वा, पूर्ववत् सौवर्णादि पात्रं, शंखं वा, पूतवारिणाऽऽपूर्यदेवंध्यायन् ध्रुवबेरात्प्रणिधिजले दीपाद्दीपमिव आवाह्य, विष्णवादीनां, कौतुकेषु यथाक्रमेण आवाहयेत्। तदैव स्नापनोत्सवबलिबेरेषु चावाहयेत् । एष विशेषोऽन्यत्सर्वंसमानं ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे नवषट्पञ्चमूर्त्ति प्रतिष्ठाविधिर्नाम सप्तत्रिंशः पटलः ॥३७॥

# अथाष्टत्रिंशः पटलः

## एकविमाने स्थानकादि प्रतिष्ठाविधिः

अथैकविमाने स्थानकाऽऽसनशयनानां प्रतिष्ठाविधिं वक्ष्ये - विमानं-त्रितलायतचतुरश्र, मायतवृत्तं वा, मुखमंटपसोपानसहितं कृत्वा, आद्यतले स्थानकंद्वितीयतलेचासनं तृतीयतलेशयानंकारयेत्।

तृतीये स्थानकं द्वितीये चासनं आदौ शयानं कारयेदिति केचित्। योगभोगादिभेदेष्वेकमार्गेण ध्रुवबेराणि पूर्ववत्कारयेत् । ध्रुवा (वबेरा) नुरूपंकौतुकादीनि बेराणि कृत्वा, परिषदमालयं, प्राकारं, मंटपं, गोपुरं च, पूर्ववत्कारयेत् ।

तेषां स्थापनविशेषं वक्ष्ये - यथोक्तमंकुरानर्पयित्वा, संभारासंभृत्य पूर्ववदक्षिणो चनाधिवासौकृत्वा, आलयाभिमुखे स्थानकस्य, तत्त् पश्चिमे-आसीनस्य, तत् प्राच्यां शयानस्य च, यागशालां कृत्वा, अलंकृत्य, तन्मध्ये-शय्यावेदिं परितोग्निकुंडानि च पूर्ववत्कृत्वा, त्रयाणां देवानां प्रत्येकमाचार्य-स्थापकादीन्वरयेत् ।

आलयस्योत्तरे वास्तुहोममेकमेवकृत्वा, आलयं संशोध्य, सर्वे-ष्वग्निकुंडेषु आघारंहुत्वा, कुंभपूजनस्नापन प्रतिसरबंधनशायन हौत्र-शंसनमूर्त्यावाहनादि होमादीनि - सर्वाणि महाप्रतिष्ठोक्त विधिना पृथ-गेवकृत्वा, रात्रिशेषंविनीय, प्रभाते स्नात्वा, यज्ञशालामाविश्य, सर्वान्-देवानुत्थाप्य, अभ्यर्च्य, पश्चाद्रत्नादीनि संन्यसेत् ।

मुहूर्त्ते समनुप्राप्ते यजमान आचर्यादिभ्यो दक्षिणां देवसन्निधौ सोदकं दद्यात् । आचार्याःकुंभान् शिरसाधारयन्तो अग्रतो गच्छेयुः, स्थापका देवानादायाऽनुगच्छेयुः, आलयं प्रदक्षिणीकृत्याऽभ्यन्तरंप्रविश्य, कुम्भान् देवांश्च संस्थाप्य, पूर्ववदावाह्य, हविर्निवेद्य, होमंहुत्वा, बलिंनिर्वाप्य, बल्युद्धरणं कारयेत् । आदितले बलिदानबल्युद्धरणस्नापनोत्सवादीनि कारयेदिति केचित् ।

## द्विमूर्ति स्थापनाविधिः

द्विमूर्त्तिस्थापनंव क्ष्ये-ग्रामादिषु यथेष्टदेशे, बाह्ये वा, चूलिका मेकामेवकृत्वा, पृथक् पृथगन्तर्मण्डलसंयुक्तं, दक्षिणे शंकरभवनं, उत्तरे विष्णवालयं, उत्तरेशंकरभवनं, दक्षिणेविष्णवालयं वा, अथवा पश्चिमे विष्णवालयं प्राङ्मुखं, तत्पूर्वे पश्चिमाभिमुखं शंकरभवनं कुर्यात् । एतद्विपरीतं वा, विमानंसपरिषत्कं कृत्वा, रुद्रं तच्छास्त्रविधिभिस्सं स्थाप्याऽर्चयेत् । पूर्वोक्तविधिनाविमानादिनि सर्वाणि कृत्वा, अन्तर्मण्डले नवभेदेष्वेकमार्गेण परिवारान् परिकल्प्य, देवेशंविष्णुं प्रतिष्ठोक्तविधिना प्रतिष्ठाप्य, अभ्यर्च्य, हविर्निवेद्य होमाद्यं सर्वं पूर्ववत् स्नापनोत्सवादीनि कारयेत् ॥

## त्रिमूर्ति स्थापनम्

अथ त्रिमूर्तिस्थापनं वक्ष्ये-ग्रामादिषु यथेष्टदेशे अन्यत्र विविक्ते वापि एकस्मिन् प्राकारे पृथक्पृथगन्तर्मण्डल संयुक्तं मध्येविष्पवालयं सपरिषत्कं दक्षिणेशंकरभवनं, उत्तरे ब्रह्मभवनं उत्तरेशंकरभवनं, ब्रह्म भवनंवा, मध्येशंकरभवनं, दक्षिणे ब्रह्मभवनं, उत्तरे विष्णवालयं वा, मध्ये ब्रह्मभवनं दक्षिणे विष्णवालयं, उत्तरे शंकरभवनं वा, मुखमंटपसोपानो पेतं, विधिना कारयित्वा, शंकरभवनंतच्छास्त्रोक्तविधिना संस्थाप्य, देवेशंविष्णुं-देवीभ्यांसहितं रहितं वा, संस्थाप्याऽर्चयेत् ।

ब्रह्माणं, चतुर्मुखं चतुर्बाहुं तप्तहाटकसन्निभं विद्युद्दामपिशंगार्चि-र्जटामुकुटसंयुतं, कुण्डलांगदहारादिभूषणभूषितम्, आगुल्फतललम्बि-शुक्लाम्बरं मेखलोपवीतोत्तरीयकृष्णाजिनशुक्लमालासमायुक्तं दक्षिणा ऽऽदक्षिणकराभ्यां अक्षमालाकमंडलुधरं दक्षिणंपूर्वकरं सकूर्च मभयं वामकरं कुशाग्रंथिधरं। अथवा दक्षिणकरं स्रुवधरं वामकरमाज्यस्थालीधरं। अथवा दक्षिणं पूर्वकरंस्रुग्धरं वरदंवामकरं गोश्रृंगधरं कारयेत्। आसनंचेत्सिंहासनस्योर्ध्वे पद्मासने समासीनं कारयेत्। स्थानपीठोपरि देवीभ्यांसहितं, रहितं वा, कारयेत्। तस्य शयनं न कुर्वीत।

दक्षिणे देवींभारतीं श्वेताभां जटामकुटान्वितां द्विभुजां रक्तवस्त्रधरां वामे सावित्रीं रक्ताभां जटामकुटमंडितां द्विभुजां श्यामवस्त्रधरां अन्यत्सर्वं श्रीभूम्योरिव कारयेत्।

द्वारपार्श्वयोः शंखलिखिता, मुखमंटपद्वारे तापस सिद्धिदौ, अंतर्मं डले पूर्वादीशानपर्यंतं भृग्वादि सप्तर्षीन्, सनकं च, अग्रेवाहनं हंसराजं, शैषिकंकुशाध्वजम् अकल्मषं नृपं पीठदैवतं महाभद्रं, अन्तर्मंडलद्वारेना-सत्यादस्त्रौ, कृत्वा, कौतुकपीठं तद्रूपं कुर्यात्, अंकुरानर्पयित्वा पूर्व-वद्वास्तुहोमांऽगेहौमाहुत्वा, पद्माग्नावाघारंहुत्वा, कुंभंसंसाध्य ब्रह्माणं सपरि षत्कंध्यात्वा, आवाह्य, सप्तभिःकलशैः, संस्नाप्य, शयने समारोप्य प्रतिसरं बध्वा, तन्मंत्रेणशाययित्वा, पद्माग्नौ हौत्रं प्रशंस्य, 'ब्रह्माणं प्रजापतिं पितामहं हिरण्यगर्भम्' इति ब्रह्माणं, 'भारतीं वाणींब्रह्मपत्नींसरस्वती' मिति भारतीं, 'गायत्रीं वेदमातरं सर्वदेवत्यां सावित्री' मिति सावित्रीं, तद्दक्षिणप्रणिधौ समावाह्य, उत्तरप्रणिधौ अन्यपरिवाराणां तत्तन्नाम मंत्रेण आवाह्य, तथैव-जुष्टाकारस्वाहाकाराकृत्वा, श्वेताब्जशतं घृतेनाप्लुत्य, गायत्र्या जुहुयात्। 'ब्रह्मजज्ञानं, हिरण्यगर्भ' इति द्वाभ्यां ब्रह्मसूक्तं षोडशकृत्वोहुत्वा, पारमात्मिकमींकारांश्च सर्वान् जुहुयात्। तद्दक्षिणे कुण्डे'पावकानो महोअर्ण' (ऋ०१-१-६) इति मंत्राभ्यां सूक्तंसारस्वतं दशकृत्वः उत्तरे आग्निकुण्डे सावित्रीमष्टोत्तरशतं हुत्वा, पद्माग्नावन्यपरिवाराणां मंत्रान् दशकृत्वो हुत्वा, चतुर्दिक्षु चतुर्वेदाध्ययनेन रात्रिशेषं यापयेत्।

प्रभाते स्नात्वा यागशालामागत्य, ब्रह्माणं देव्यौ च प्रणवेनोत्थाप्य, अभ्यर्च्य, अभ्यन्तरेपीठे रत्नादीनि संन्यस्य कुंभंबिंबं च समादाय, सद्मप्रदक्षिणं कृत्वा, अभ्यन्तरं प्रविश्य, ब्रह्मस्थाने 'ब्रह्मजज्ञान' (य सं-

४-का २-प्र०८-अ०२) मिति कौतुकं प्रतिष्ठाप्य, देव्यौ तत्तन्मंत्रेण संस्थाप्य, ध्रुवबेरंस्पृष्ट्वा, ब्रह्मसूक्तं, ध्रुवसूक्तं च, जप्त्वा, तत्तद्बीजाक्षरं तस्य हृदये न्यस्य, कुंभस्थां शक्तिं 'ब्रह्मजज्ञान' मिति मंत्रेण ब्रह्माणं ध्यात्वा, तस्य मूर्ध्निसमावाह्य, ततःकौतुक बिंबे समावाह्य; तत्तत्कुंभजलेन धात्रादि महाभूतांतान् तत्तन्मंत्रणे आवाह्य, अग्निंविसृज्य, पुण्याहं कृत्वा, अभ्यर्च्य, हविर्निवेदयेत् । अत्रानुक्तं सर्वं हरेरिव समाचरेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे स्थानकासनशयने द्वित्रिमूर्त्तिस्थापनविधिर्नाम अष्टत्रिंशः पटलः॥३८॥

# अथ एकोनचत्वारिंशः पटलः

## विमानप्रतिष्ठाविधिः

अथ विमानप्रतिष्ठाविधिं वक्ष्ये - विमानंविधिवत्कृत्वा, देवानेतान् प्रकल्पयेत् । मुखमंटपद्वारदक्षिणे तापसम्; उत्तरे सिद्धिदं; विमानस्य दक्षिणे सत्यं; पश्चिमे अच्युतं; उत्तरे अनिरुद्धं; मुखमंटपदक्षिणे विनायकं; उत्तरे विंध्यवासिनीं वै मूलतले स्थानक मासनं वा, उपरिवा द्वितीयतले प्रागादिषु पुरुषादीन्; अथवा पूर्वे चक्रं, दक्षिणे नृसिंहं, पश्चिमे अच्युतम्, उत्तरे वाराहं च, गळस्थाने पूर्वादिषु पुरुषादीन्, दक्षिणे दक्षिणामूर्तिं, उत्तरे पितामहं, पश्चिमे नृसिंहं, पूर्वे वराहं च, कारयेत् ।

कोणेषु द्विजेद्रं, मृगेंद्रं वा, कारयेत् ।

आस्मिन्विमाने चाऽऽदितले मध्ये, तृतीये वा, यथेष्टदेशे नृसिंहं, दक्षिणामुखं, पश्चिमाभिमुखं वा, कारयेत् । सर्वशत्रुविनाशः सर्वार्थ साधनमिति विशेषणोक्तम्, ।

तेषामुद्देशमानम् मानांगुलेनैकादशांऽगुलं समारभ्य, सप्तविंशति-मात्रान्तं, द्व्यंगुलंवर्धयेत्, नवधाभवति, एतेष्विष्ट मानेन शैलमृण्मयमैष्टकं सौधमालेख्यं वा यथार्हं कारयेत् ।

शैलं बेरं वर्णयुक्तं यदीच्छेत् ।

प्रथमं पूर्वोक्त सशर्कराकल्कं, द्विगुणं द्विगुणार्धं त्रिगुणं वालुकां मिश्री कृत्य, निर्यासांबुनासह, तस्योपरिष्टादावेष्टयेदिति विशेषः । शेषं समानम् ।

अस्मिन्विमानांगदेवानां, विमानपालद्वारपालानां, श्रीभूम्यादि सर्व परिषदां च, प्रतिमाकरणे, तत्राऽऽयव्ययाद्यं नेष्टं स्वप्रधाने बेरे विमाने च प्रतिष्ठादिवसात् पूर्वमंकुरानर्पयित्वा, आलयाभिमुखे दक्षिणे पश्चिमे चोत्तरे वा विमानंपरितो वा प्रपांकृत्वा, तोरणाद्यैरलंकृत्य, प्रतिष्ठादिवसात्पूर्वं तृतीये द्वितीये वा अहनि, विमानदेवानामक्षिमोचनममंत्रकं समंत्रकं च कुर्यात् ।

अक्षिमोचनार्थं तस्यालयस्योत्तरे कुंडमौपासनं कृत्वा, वास्तु होमं हुत्वा, पर्यग्नि पंचगव्याभ्यां आलयं संशोध्य, पुण्याहं वाचयित्वा आलयाभिमुखे चौपासनाग्निकुंडं कृत्वा, आघारांते वैष्णवं विष्णुसूक्तं, पुरुषसूक्तं, महीभूतदेवत्यं, दद्भयः स्वाहाद्यंगहोमस्थूप्याद्यौपान पर्यन्तांऽगानां अभिजुहुयात् ।

'स्तूपिमुकुळाय, पद्माय, फलकायै, पद्माय, कंठाय, क्षेपणाय, वेत्राय, क्षेपणाय, कंठाय, क्षेपणाय, पंकजाय, कुंभाय, पंकजाय, क्षेपणाय, पद्माय, फलकायै, अवलग्नाय, कुंभाय, शक्तिध्वजाय, पद्माय, उभाय, नासिकायै, फलकायै, दंडाय, मृणाळिकायै, मुष्टिबन्धाय, वाजनाय, उत्तराय, कंठाय, ऊहप्रत्यूहाय, वेदिकायै, भूमिकल्पाय, वाजनाय, प्रतये, अन्तरिताय, लिंगाय, शक्तिध्वजाय, नासिकायै, कर्णपालिकायै, कपोताय, वाजनाय, पंकजाय, वाजनाय, उत्तराय, बोधिकायै, वीरकांडाय, पलकायै' वेत्राय, उत्संधिकाय, धृजे, कुंभाय, धृज आस्याय, पद्माय, भीरवे, स्कंधाय, पद्ममालायै, स्तंभांतराय, वेदिकायै, महापट्टिकायै, कंठाय, कुमुदाय, जगत्यै 'उपानाय, (६३ अग) स्वाहे' तिव्याहृत्यन्तं हुत्वा, विमानं परितः प्रागादिचतुर्दिक्षु सवत्सांगां घृतं मधु क्षीरं अष्टधान्यराशींश्च संकल्प्य, प्रच्छन्नपटंकृत्वा, देवानां तत्तन्मंत्रेणाऽक्षिमोचनं कृत्वा, तत्प्रच्छन्नपटंविसृज्य, गवादि दर्शन द्रव्याणि दर्शयित्वा, अग्निंविसृज्य, तत्काले तद्विमान शुद्ध्यर्थं, कुंभं सूत्रेण वस्त्राभ्यां च वेष्टयित्वा, पूतवारिणाऽऽपूर्य, सुवर्णमक्षतान् कूर्चंविक्षिप्य, 'इदमापःशिवा' इत्यभिमन्त्र्य, विष्णुसूक्तेन आपो हिरण्य पवमानै र्विमानं समभ्युक्ष्य, पुण्याहं कारयेत् ।

प्रतिष्ठोक्त दिनात्पूर्वे अपराह्णे प्रागादि यज्ञशालां संशोध्य, प्राच्यां मुखमंटपपूर्वे सभ्य माहवनीयं च, विमानस्च दक्षिणभागे अन्वाहार्यं, पश्चिमे गार्हपत्यं, उत्तरे चावसथ्यं च संकल्प्य, तदालयोपरिस्थ देवानां प्रत्येक मौपासनाग्निकुण्डं तत्तदभिमुखे विमानं परितः कल्पयेत्, एतदुत्तमम् ।

सभ्यादि पंचाग्नीन् परिकल्पयेदेतन्मध्यमं सभ्याग्निमेकमेव कल्पयेद-धममाचक्षते ।

सर्वेष्वाघारं हुत्वा द्रोणद्वयपूर्णं कुंभं संगृह्य, त्रिगुणे नैकेनवा सूत्रेण वेष्टयित्वा, 'शुचीवोहव्य' (ऋ०५-४-२४) इति प्रक्षाल्य, 'धारास्वि' त्यपामुत्पवनंकृत्वा, अद्भिरापूर्य, 'इदमापः (वै०म०य०१) शिवा' इत्य भिमृश्य, वस्त्रयुग्मेनावेष्ट्य, पंचरत्नानि सुवर्णं वा अष्टमंगल पंचायुध-वर्णचिह्नानि पृथक् पृथक् विष्णुसूक्तेन प्रक्षिप्य, अभ्यन्तरं प्रविश्य, ध्रुव-बेरस्याभिमुखे धान्यराशौ कुंभंसन्यस्य, आचार्य उत्तराभिमुखो भूत्वा ब्राह्म मासनमास्थाय, प्राणायामं कृत्वा, समाहितो देवंध्यायन् ध्रुवबेरात्कुंभेअंभसि तद्विमानं सम्यगावाहयेत् ।

यस्माद्देवेशो विष्णुः सर्वेषांप्राणभूतः सर्वावासश्च तस्माद्वि-मानस्यध्रुवादावाहनं, तस्मिन्नुद्वासनं च कारयेत् ।

पश्चाच्छकुनसूक्तं समुच्चार्य, कुंभमानीय, तस्यालयस्याऽभिमुखे सभ्याग्निकुण्डस्य पश्चिमे धान्यवेद्यां वस्त्रेणाऽस्तीर्य, तस्यां कुंभं सन्यस्य, आलयं परितश्चतुर्विंशति कलशन्यासार्थं धान्यैः पङ्क्तिं कृत्वा; तस्या-मैशानादि पंचगव्यघृतमधुदधिक्षीरगंधोदकाऽक्षतोदकफलोदककुशोद-करत्नोदकजप्योदकसर्वौषध्युदकानि प्रत्येकमुपस्नान संयुक्तानि यथा क्रमेण विन्यस्य, अधिदेवान् समाराध्य यथोक्तैर्मंत्रै र्विमानस्य पादमूले प्रदक्षिणा-वशेनाऽभिषिच्य, 'विमानं विष्णुमयं देवाऽऽवासं वैकुंठोद्भव' मिति चतुर्भि-र्मंत्रै रघ्यान्तमभ्यर्च्य, हेमादि पात्रे तंडुलोपरिन्यस्तप्रतिसरं त्रिवृत स्वस्ति-सूक्तेनाऽभिमृश्य, 'स्वस्तिदा विशस्पति' रिति तस्यपादमूले बध्नीयात् ।

विमानस्यशयनार्थं तत्परितः शय्यावेदिं कृत्वा, हस्तमात्रविस्तारां तालोत्सेधां द्विभागोत्सेधां भागोत्सेधां वा व्रीहिभिः कृत्वा, नवैर्वस्त्रैः स्थूप्यादिविमानान्त मधिष्टानांतं, कपोतान्तं वा निच्छिद्रं परिवेष्ट्य, 'यद्वैष्णव' मिति शयनं संकल्पय; चतुर्दिक्षु चतुर्वेदाध्ययनं कारयित्वा, सभ्याग्निं समुज्वाल्य, हौत्रं प्रशंस्य, दक्षिणप्रणिधौ 'विमानं विष्णुमयं देवाऽऽवासं वैकुण्ठोद्भव' मिति, उत्तरप्रणिधौ आलयांऽगदेवान् न्यक्षादीन् इन्द्रादि लोकपालाँश्चाऽऽ वाह्य, आवाहन क्रमेण जुष्टाकारस्वाहाकारं च कृत्वा पश्चाद्वैष्णव (विष्णुसूक्तं पुरुषसूक्तं तदालयगतदेवानां मन्त्राँश्च जुहुयात्) मिंद्रदेवत्यादि तत्त-दंगमंत्रैस्सहन्यक्षादि देवत्यमंत्रांश्च आवसथ्ये

चैकाक्षरादि सूक्तं क्षत्रदेवत्यं आलयोपरिस्थ देवानां अग्निकुंडेषु तत्तद्देवत्यमंत्रान् दशपर्यायतो जुहोति।

नृत्तगेयवाद्यैरात्रिशेषं नयेत्। आचार्यादयःप्रभाते स्नात्वा आलयमाविश्य देवंप्रणमेयुः मुहूर्त्ते प्राप्ते यजमान आचार्यादीन् वस्त्रोत्तरीयाद्यैर लंकृत्य दक्षिणादानं दद्यात्। पश्चात्सर्वाग्नीन् विसृजेयुः। आचार्यः शिरसा कुंभंधारयन् सर्ववाद्यसमायुक्तं सर्वालंकारसंयुक्तमालयं प्रदक्षिणीकृत्य कुंभंविमाने समारोप्य तस्यमूर्धनि 'आयातुभगवा' निति मन्त्रान्ते 'विमानं, विष्णुमयं, देवाऽऽवासं, वैकुंठोद्भव' मिति चतुर्भिर्मंत्रै स्समावाह्य, पश्चात् प्रागादितद्विमानगत (देवांश्च तत्तन्मन्त्रेणाऽऽवाह्य पश्चात्तद्विमानगत) देवान् तत्तन्मन्त्रेणावाहयेत्। एवं विमानप्रतिष्ठायां महाप्रतिष्ठाफलं लभते। तस्माद्देवेशेनसार्धं, पृथगेव वा कारयेदित्याह मरीचिः॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे विमानप्रतिष्ठा विधिर्नाम एकोनचत्वारिंशःपटलः॥३९॥

## अथ चत्वारिंशः पटलः

अथ देव्योः, श्रीभूम्योः पृथक् प्रतिष्ठाविधिं वक्ष्ये - ध्रुवे देवीसमायुक्ते वियुक्ते वा कौतुकस्य देव्योः स्थापनं कारयेत्। कौतुके देवीसमायुक्ते वियुक्तेवापि औत्सवं देवीभ्यां सहितं स्थापितंचेत् तद्ग्रामस्य समृद्धिर्भवति; यद्द्रव्येणकृतंबिंबं तद्द्रव्येण देव्यौ च कारयेत्। हीनाधिकद्रव्यैर्न कारयेत्। स्थान केस्थानकं, आसने चासनं, देवस्यबाहुमानं स्तनांतं वा स्थानकस्य, आसनस्यकर्णांत मास्यांतं वा यथोक्ततलक्रमेण देव्यौ सम्यक् प्रकल्पयेत्।

स्थापनदिवसात्पूर्वं, अंकुरानर्पयित्वा, पूर्ववदक्षिमोचनाधिवासौ च कृत्वा, आलयाभिमुखे यागशालांतन्मध्ये दक्षिणे, श्रीदेव्याः शय्यावेदिं द्विहस्तायतविस्तारा तत्तुरीयांशोत्सेधां तत्प्राच्यामौपासनाग्निकुण्डं तत्प्राच्यां स्नानश्वभ्रं च कारयेत्। तन्मध्ये चोत्तरे शय्यावेदिं, तथैवमहीदेव्यास्तत्प्राच्यामौपासनाग्निकुण्डं, तत्प्राच्यां स्नान श्वभ्रं चकारयेत्।

अधिवासगते देव्यौ समादाय, शुद्धोदकैस्संस्नाप्य, वस्त्राद्यैरलंकृत्य, यज्ञालये पश्चिमे विष्टरे देव्यौ संस्थाप्य, वास्तुहोमं हुत्वा, पर्यग्नि पञ्चगव्याभ्यां शोधयित्वा, द्वयोरौपासनाग्निकुण्डयोराघारंहुत्वा, द्वौ कुंभौ संगृह्य,

पूर्ववत्तन्तुना परिवेष्ट्य, अद्भिः प्रक्षाल्य, उत्पूतैराधावैरापूर्य, पञ्चरत्नाऽष्टमंगलपञ्चायुधवर्णचिह्नानि पूर्ववत् प्रक्षिप्य, वस्त्र युग्मेनावेष्ट्य, अभ्यन्तरं-प्रविश्य, पूर्वं श्रीदेव्या अभिमुखे धान्यराशौ कुंभंसंन्यस्य, पश्चान्महीदेव्या अभिमुखे धान्यराशौ कुंभंसन्यस्य, देव्योध्रुवबेरहीने देवस्यध्रुवा, दर्कमण्ड-लाद्वा, तत्तद्रूपं तथैवध्यात्वा, कुंभे अंभसि समावाह्य, कुंभौसमादाय, शकुनसूक्तं जप्त्वा, देवीभ्यां सह स्नानश्वभ्रे प्रतिष्ठाप्य, पूर्ववत्सप्तभिः कलशैस्संस्नाप्य, वस्त्राद्यैर्विभूष्याऽभ्यर्च्य, शय्यावेद्यांधान्योपरि पूर्ववत्प्रत्येकं अंडजादीनि पञ्चशयनानि वासांसि वा आस्तीर्य, शयने समारोप्य, पुण्याहं कृत्वा, पूर्ववत्प्रतिसरं बध्वा तत्तन्मन्त्रेणशाययित्वा, पश्चाद्धोता समाहूयाऽभिपूजयेत् । स होता तयोः प्राच्यां तिष्ठन् हौत्रं प्रशंसयेत् ।

प्रत्येकं होता अध्वर्युः देव्यौ जयाद्यप्सरसश्चावाह्य, आवाहन-क्रमेणनिरूप्य, आज्याहुतीर्हुत्वा, दक्षिणे अग्निकुंडे श्रीसूक्तं, श्रीदेवत्यं, जयादीनां मूर्तिमंत्रान् उत्तरे अग्निकुण्डे महीसूक्तं, महीदेवत्यं, तथा जयादीनां मूर्ति मन्त्राँश्च जुहुयात् ।

पश्चात् नृत्तगेयवाद्यैश्च रात्रिशेषं व्यपोह्य, प्रभाते त्वाचार्याद्याः स्नात्वा, आलयं प्रविशेयुः । आचार्याद्याः देव्यौ समुत्थाप्य, अभ्यर्च्य, अभ्यन्तरे तत्पीठे पञ्चरत्नानि सुवर्णं वा निक्षिपेयुः आचार्यादिभ्यो दक्षिणां दद्यात् । अग्निं विसृज्य, मुहूर्त्तेप्राप्तेतु, आचार्यः श्रीदेव्याः कुंभं, पश्चान्महीदेव्याःकुंभं च, शिरसाधारयन् अग्रतो गच्छेत् । स्थापकाः देव्यौ समादायानुगच्छेयुः ।

सर्ववाद्य समायुक्तं, देवागारं प्रदक्षिणं कृत्वा, अभ्यन्तरं प्रविश्य, ध्रुवस्याभिमुखे धान्यराशौ द्वौ कुंभौन्यसेत् । कौतुकस्य दक्षिण वामयोः कृते पीठे देव्यौ तत्तन्मन्त्रेण स्थापयेयुः । अचार्यश्चोत्तराभिमुखस्तिष्ठन् ध्रुवबेराक्षरन्यासं कृत्वा, पूर्वमावाह्य, पश्चात्कौतुकेअक्षरन्यासं कृत्वा, तद्ध्रुवादेव्यौ ध्यायन् दीपाद्दीपमिवावाहयेत् । ध्रुवे देवीयुक्ते देवी बेरे अक्षर-न्यासं कृत्वा, समावाह्य, पश्चाद्देव्योरक्षरन्यासं कृत्वा, समावाहयेत् ।

अस्त्वासनमिति आसनं दत्वा, पुण्याहं वाचयित्वा, नित्यार्च्च नाविधानेन देवेशेनसह देव्यौ समभ्यर्च्य, हविर्निवेद्य, पञ्चप्रणामान् कुर्यात् । ते देव्यौ पृथक् पृथक् चेत् पृथगेवं कारयेत् ॥

## देव्योर्विवाहविधिः

अथ देव्योर्विवाहक्रियाविधिं वक्ष्ये - देव्योर्नवबिंब प्रतिष्ठानन्तरं विवाह क्रियां कारयेत् । यजमानो द्विजश्चेत् गृहे देवालये वा यागशालां कृत्वा, यथाविभवमलंकुर्यात् । तन्मध्ये दक्षिणे श्रीदेव्या वामेमहीदेव्याश्च औपासनाग्निकुण्डं स्थंडिलं वा कुर्यात् । शुभे मुहूर्त्ते संप्राप्ते पूर्वं देव्यावानीय, शुभासने संस्थाप्य, अर्चयित्वा, फलोपहारतांबूलादीनि निवेद्य, आचार्यः परिचारकैस्सह देवमलंकृत्य, यानमारोप्य, शंखभेर्यादिघोष युतं, नृत्तगेयस्तोत्रध्वनि समायुक्तं, यागशालां प्रविश्य, अग्निकुंडा त्पश्चिमे महार्ह संस्तरणपर्यंकोपरि देवं प्राङ्मुखंसं स्थाप्य, राजवदुपचारं कुर्यात् । यजमानो-बान्धवैस्सह देवेशं प्रणम्य, आचार्यं पूजयेत् ।

आचार्योदेवं पाद्याद्यर्घ्यान्तमभ्यर्च्य, मधुपर्कं निवेद्य, वैखानस सूत्रोक्तविधिना विवाहंकारयेत् । आत्मसूक्तं जप्त्वा, देवंध्यायन् एकाक्ष-रादिसूक्तं, विष्णुसूक्तं, पुरुषसूक्तं, वैष्णवं च जपेत् । देवेशं प्रणम्य, प्रतिसरं बध्नीयात् ।

'प्रसुग्मन्ते' (वै०म०म०३-) ति देवो देवीमीक्षेत, 'अभ्रातृघ्नी' मिति देवंदेवीप्रेक्षेत, पश्चादाघारं जुहुयात् ।

### कन्यकादानम्

श्रीदेव्योः प्रधाने देवसन्निधौ देवीं, विनीय यजमानः स्वात्मानं-भृगुंस्मृत्वा, 'मूलप्रकृतिरूपामयोनिजां संकल्प तनयां भृगुपुत्रींश्रियं, विष्णवे तुभ्यं ददामी' ति 'प्रजापतिस्त्रिया'मिति चोक्त्वा, सुवर्णगोभूमियुतं जलं दद्यात् ।

हरिण्याप्रदाने यजमानः स्वात्मानं प्रजापतिं स्मृत्वा 'विष्णोः पुराण-महिषीं प्रकृत्यंशभूतां संकल्पतनयां काश्यपीं हरिणीं विष्णवे तुभ्यं ददामी' ति पूर्ववद्दद्यात् ।

प्रादुर्भावेषु सर्वेषु तत्तद्देवी पितरं संचिन्त्य, तत्तन्नाम्ना दद्यात् । यजमानः शूद्रादिश्चेत्तन्नियोगेन द्विज एवं कुर्यात् ।

### पाणिग्रहणम्

एव जलप्रदाने कृते देवस्यदक्षिणवामयो र्देव्यौ संस्थाप्य, नवैर्वस्त्रा-

भरणगंधाद्यैरलंकृत्य, विवाह विषय मंत्रान् लाजहोमादि प्रदक्षिणादिक कर्म देव्योस्सन्निधौ आचार्य एवाचरेत् । पाणिग्रहणे मन्त्रमुच्चरन् दर्भेण देव देव्योः पाणी स्पर्शयेत् । अश्म संस्पर्शने देव्योः दक्षिणपादांगुष्ठेनाऽश्म संस्पर्शयेत्। सप्तपदाक्रान्तौ देवस्याभिमुखे नववस्त्रे चोत्तराग्रान् दर्भानास्तीर्य, यथाक्रमेण संस्पृशेत् । स्तोमारोपणे वैष्णवैर्देवस्यादेव्यो स्तत्तन्मंत्रेण पादयोः प्रक्षिपेत् । ध्रुवदर्शनादीन् नाचरेत् ।

एककाले तयोर्देव्यो र्विवाहक्रियाचेत् एकाग्नौ पृथगेवकुर्यादितिकेचित् । आचार्यादिभ्यो दक्षिणां दद्यात् ।

## अन्तहोमः

वैष्णवान् संपूज्य, सर्वेषामपि गन्धपुष्पमुखवासादीनि दद्यात्। पुण्याहं वाचयित्वा, अंतहोमंहुत्वा, अग्निं नित्याग्नौसमारोप्य, प्रभूतं हवि र्निवेद्याऽपूपादीनि निवेद्य, आचमनमुखवासं च दद्यात्। देवं देवीभ्यां सह यानमारोप्य, ग्राममालयं वा सर्वालंकारसंयुक्तं प्रदक्षिणं कृत्वाऽभ्यन्तरं प्रविश्य, शुद्ध स्नपनवि धिना संस्नाप्य, अभ्यर्च्य, हविर्निवेद्य, प्रणामं कुर्यात्,

एवं हरेर्वैवाहिकोत्सवे कृते सर्वसंपत्समृद्धिर्भवति, तद्ग्रामवासिन्यो स्त्रियः पुत्र मंगल संयुक्ता भवन्ति । यजमान इष्टान् कामानवाप्य, विष्णोस्सायुज्यमाप्नुयात् । स्नापनं बिंबं बलिबेरं च देवीभ्यांसहितं रहितं वा कारयेत् ।

कौतुकादि बेरे अक्षिरेखाभ्रूरेखाद्यतिजीर्णे वृद्धे पृष्ठे अंगहीने चोराद्य पहृते तद्वत्पुनः बिंबं कृतंचेत्, बिंबं प्रतिष्ठाप्य, विवाहक्रियां नाचरेत् । अर्चाहीने प्रायश्चित्तं कृत्वा, सहार्चयेत्। देव्योः पुनर्बिंबंकृतं चेत्, प्रतिष्ठाप्य, विवाह क्रियां कारयेत् । योगमार्गेण विरहमार्गेण वा ध्रुवबेरं यत्रैव प्रतिष्ठाप्याऽर्चितं, तत्र पश्चाद्देवीयुक्तं न कारयेत् ।

## स्नापनोत्सवादीनां विवाहविधिः

अथ स्नापनोत्सवबलिबेराणां पृथक् प्रतिष्ठाविधिं वक्ष्ये पूर्वोक्तेन विधानेन बिंबंसलक्षणं कृत्वा, अंकुरानर्पयित्वा, संभारान्संभृत्य, यागशालां कृत्वा, त्रयाणां बिंबानां सह प्रतिष्ठाचेत् सहैवाऽक्षिमोचनं कृत्वा, प्रत्येकं गवादि दर्शन द्रव्याणि दर्शयित्वा, पृथक् पृथक् यथोक्त विधिनाऽधिवासनं

कृत्वा, पश्चाग्निं, पौंडरीकाग्निंच, कृत्वा; कुंभं संसाध्य, सप्तभिः कलशैः संस्नाप्य, शय्यावेद्यां एकस्यां धान्योपरि प्रत्येकमंडजादीनि पञ्चशयननि-वासांसिवाऽऽस्तीर्य प्रतिसरंबध्वा, तद्देवं शाययित्वा, सभ्याग्नौ हौत्रं प्रशंस्य, सर्वेष्वग्निषु पूर्ववद्धोमं हुत्वा, रात्रिशेषं व्यपोह्य, प्रभाते स्नात्वा, आलय-माविश्य, देवानुत्थाप्य, अभ्यर्च्य, अभ्यन्तरं प्रविश्य कृते पीठे सुवर्णं निक्षिप्य, अग्निंविसृज्य, यजमानः आचार्यादिभ्यो दक्षिणां दद्यात् ।

आचार्यः शिरसा कुंभं धारयन् अग्रतो गच्छेत् । स्थापकादेव मादा-याऽनुगच्छेयुः आलयं प्रदक्षिणीकृत्य, अभ्यन्तरं प्रविश्य, ध्रुवबेरे देवं समावाह्य, तस्मात् स्नापनोत्सवबलिबेरेषु समावाहयेत्, एषविशेषोन्यत्सर्वं समानम् । तेषां पृथक् चेत् पृथगेव समाचरेत् । स्नापने बेरे तद्रात्रौ स्नापनोक्त क्रमेण स्नपनं कारयेत् । औत्सवे चोत्सवोक्त क्रमेण उत्सवं, ऐकाहिकोत्सवं वा कारयेत्, बलिबेरे तत्काले बल्युत्सवं कारयेत् । एवं यः कुरुते भक्त्या स महाप्रतिष्ठाफलं लभेतेति विज्ञायते ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे देव्योः पृथक् प्रतिष्ठावैवाहिकस्नपनोत्सवबलिबेरप्रतिष्ठा विधिर्नामचत्वारिंशः पटलः॥४०॥

# अथ एकचत्वारिंशः पटलः

## नित्यार्चनविधिः

अथ विष्णोर्नित्यार्चनाविधिं व्याख्यास्यामः मंत्रेण स्नात्वा, आचम्य, कृतप्राणायाम, स्सावित्रीं जप्त्वा, संध्या मुपास्य, देवादीनद्भिस्तर्पयित्वा, ब्रह्मयज्ञं कुर्यात् ।

'प्रतद्विष्णुस्तवत' इति देवालयंगत्वा, प्रदक्षिणं करोति 'मणिकं प्रपद्ये' (वै०म०८) ति द्वारपालं प्रणम्य, कवाटे बन्धं यन्त्रिकया 'निरस्त' (वै०म०प्र०८) मिति निरस्य, 'हिरण्यपाणि' (ऋ०स०१-२-४) मिति कवाटमुद्घाटयति । 'दिवं विवृणोत्वि (वै०म०प्र०७) त्यन्तः प्रविश्य, वैष्णवैर्मन्त्रैर्देवं प्रणमेत् । 'उद्दीप्यस्वे' (वै०म०प्र०८) ति दीपानुद्दीप्य, 'शाम्यन्त्वि' (वै०म०प्र०८) ति पाणिनादक्षिणेन वामे संताड्य, 'भगवत' (वै०म०प्र०८) इति देवं प्रार्थयेत् ।

परिचारकाः स्नात्वा कुम्भमादाय, 'दुहतां दिव' (वै०म०प्र०८) मिति गृहीत्वा, 'नद्यास्तोयम् आद्यमभिगृण्ह्णामी' (वै०म०प्र०८) ति संगृह्य, तदभावे तटाके कूपे वा 'सोमंराजानम्' (वै०प्र०८) इत्यालयंप्रविश्य, धौतवस्त्रेण 'धारास्वि' (वै०म०प्र०१-१) ति तोयमुत्पूय, उशीरादि गन्धै र्वासयित्वा, 'इदमापश्शिवा' (वै०म०प्र०८) इति कुशे नाभिमंत्रयेत् । 'अवधूत' मिति मार्जन्यामार्जयित्वा, 'आशासुसम' (वै०म०प्र८०) स्विति गोमयेनो दकेन प्रोक्ष्य, उपलिप्य, 'आमावाजस्ये' ति प्रणिध्यर्घ्यपात्रं हविः पात्राणि प्रक्षाल्य, विधिनाहवींषिचोपदंशाँश्च पचेत् ।

अर्चको 'ब्रह्म ब्रह्मे', ति हृदयमभिमृश्य, 'द्यौ र्द्यौरसी' ति शिरोभिमृश्य, 'शिखे' ति शिखोद्वर्तनं, 'सकृद्देवानामायुधै' रिति सर्वत्ररक्षां कृत्वा, 'सुदर्शन' मितिदक्षिणे हस्ते सुदर्शनमुद्रां धारयेत् । 'रविपा' मिति वामे शंखमुद्रांधारयेत् ।

'सूर्योसी' ति दक्षिणे नयने, 'चन्द्रोसी'ति वामेनेत्रे, हस्तयोस्तलयो र्दक्षिणवामयो स्सूर्या चंद्रमसो मंडलंन्यस्य, 'अभूरण्य' मिति अंगुष्ठादि कनिष्ठान्तं न्यस्य, 'अन्तरस्मि न्निम' इति ब्रह्माणंस्मरति ।

'अहमेवेद' मिति देवमनुमान्य, 'पूतस्तस्ये' ति निर्माल्यं व्यपोह्य, पीठवेदिद्भिर्व्याहृत्यापरिमार्ज्य, 'नारायणायविद्महे' इति ध्रुवस्य पादपुष्पं पञ्चभिर्मूर्त्तिभिर्दत्वा, देवेशस्यनिर्माल्यं विष्वक्सेनाय दत्वा अन्येषां बहिर्विसर्जयेत् ।

'भूः प्रपद्य' इति देवेशंप्रणम्य, आलयद्वारोत्तरपार्श्वे पुर्वे वा प्रथमावरणे स्नानपीठे 'परंरह' इत्यवस्थाप्य, 'इषोत्वोर्जेत्वे' ति जपन् बिंबं यथा शुद्ध माम्लाद्यैस्संशोध्य, शुद्धोदकैस्संस्नाप्य, चंदनोदकैरभिषिच्य, धौतप्लोतवस्त्रेण मूर्धाद्यं विमृजेत् ।

परिमृष्टेऽर्चापीठे देवेशं प्रतिष्ठाप्य, वस्त्रा भरणोपवीतैरलंकुर्यात् । पवित्र पाणिश्चन्दनाद्यैरूर्ध्वपुंड्रं धृत्वा, 'संयुक्तमेत' दिति ध्रुवकौतुकयोर्मध्ये संबन्धकूर्चं प्रक्षिप्य, विष्णुगायत्र्या पीठं प्रोक्ष्य ध्रुवपादयोर्मध्ये 'विष्णवेनम' इति पुष्पं दद्यात् ॥

प्रागादि प्रदक्षिणं चतुर्दिक्षु 'पुरुषाय सत्याय अच्युताय अनिरुद्धाये' ति क्रमेण पुष्पाणिन्यसेत् । आग्नेयादि कोणेषु 'कपिलाय यज्ञाय नारायणाय

पुण्याये' ति परितः प्रागाद्यैशानान्तं 'वराहाय सुभद्राय नारसिंहायेशितात्मने, वामनायसर्वोद्वहाय त्रिविक्रमायसर्वविद्येश्वराये' त्यष्टदिक्षु न्यस्य, पीठादधः परितः पूर्वात् 'इन्द्राय अग्नये यमाय निर्ऋतये वरुणाय वायवे कुबेराय ईशानाये' ति तत्तद्देशे तत्तन्नाम्ना प्रणवादि नमोऽन्तं पुष्पन्यासं ध्रुवे स्थिते करोति ।

आसीने प्रसारितपादस्य परितः, शयानेप्यनंतोर्ध्वे, पादपार्श्वे कुर्यात् । देव्योश्च नाममन्त्रैः

कौतुकपीठे प्राच्यादि 'मित्रं अत्रिं शिवं विश्व' मित्युत्तरान्तं आग्नेयादि 'सनातनं सनंदनं सनत्कुमारं सनक' मित्यैशानांतं च एकादशोपचारैरष्टो पचारैर्वा नाम्ना बहिर्मुखानभ्यर्च्य, दक्षिणे मार्कंडे, (यं देवेक्षणं, वामे भृगुं तथा, भित्तिपार्श्वे) उत्तरे भृगुं तदुत्तरपार्श्वे ब्रह्माणं, शंकरं च द्वारे द्वारे धात्रादि द्वारदेवान् द्वारपालान् श्रीभूतवींशाऽमितान्यथोक्ते देशे पूर्ववदर्चयति ॥

आवाहनपाद्याऽऽचमनस्नानोदकार्थाश्चतस्रः, प्रणिध्योर्द्धेच एकैकं वा, गृहीत्वा, साक्षतका (कु) शकूर्चान् विक्षिप्य, अद्भिः प्रणवेन पूरयित्वा, कुडुबसंपूर्णाऽर्घ्यपात्राणि सौवर्णराजततांम्रमृण्मयकांस्याऽन्यतमानि पंच, अलाभे, तदेकं वा, तद्देवं चन्द्रमभ्यर्च्य, पात्राणि संशोध्य, तंडुलव्रीहि माषसर्षपमिश्रितं अक्षतं प्राहुः ।

तत्पूर्वंसिद्धार्थकं, तिलं, कुशाग्रं, दधिक्षीरघृतं च, प्रक्षिप्य, गायत्र्या ऽऽधावेन पूरयति, अर्घ्यमेतत् पात्रे पुष्पाण्यादाय, जलेन पिष्टं चन्दनं, गन्धगुग्गुल्वगरुकोष्टचन्दनधनगुळमिश्राणि यथालाभंधूपार्थं, पिचुवर्तियुतं घृतेन तैलेन वा दीपं च, संभारान् संभरति ।

सूतादि प्रतिलोमाः, पतिताः, पाषंडिनोऽपि अर्चनं हविनिवेदनं च वीक्षितुं नैवार्हन्ति । तस्माद्यवनिकया समावृणोति ।

## आवाहनं

स्वस्तिकमेकजानुं वासमासीन उदङ्मुखो पार्श्वेबिंबार्हंतिष्टन्वा, प्रणम्य, आत्मसूक्तं जप्त्वा, बिंबस्य मूर्धनाभिपादेषु क्रमेण 'स्व (सुव) र्भुवर्भू' रितिविन्यस्य, हृदये प्रणवेनाऽऽदिबीजाक्षरं च पादमध्ये पीठे यकारं विन्यस्य प्रणिधिमुद्धृत्य, दीपाद्दीपमिव ध्रुवबेरात् प्रणधिजले

'प्रणवात्माकं विष्णुं रुग्माभं रक्तनेत्राऽऽस्य पाणिपादं चतुर्भुजं शंखचक्रधरं शुकपिंछांबरधरं किरीटकेयूरहार मकटकुंडल कटकांगुलीय कटिसूत्रोदरबंधप्रलम्बयज्ञोपवीतिनं श्रीवत्सांक मेवं सकळं ध्यात्वा; कूर्चेन 'इदंविष्णु रायातुभगवा नित्यावाह्य; तद्व्यामं तोयं प्रणवेनकौतुक-मूर्ध्नि 'विष्णु मावाहयामी' ति संस्राव्य 'पुरुषंसत्यमच्युत मनिरुद्ध' मिति मन्त्रैरावाहयेत् ।

तथा स्नापने चोत्सवे च दक्षिणे श्रियं, वामे मही मावाहयेत् । स्नापनेचोत्सवे चादावेवाऽऽवाहनं नित्यं नैवेति केचित् ।

## उपचाराः

तत्रासीनं देवं ध्यायन् पीठांते 'प्रतद्विष्णुरस्त्वासन' मिति पुष्णं, दर्भं वा आसनं संकल्पयेत् । 'विश्वाधिकाना' (वै०म०प्र०) मिति अभिमुखं स्वागतं ब्रूयात् । 'मनोभिमन्ते' (वै०म०प्र०) त्यर्चनानुमानं याचेत् । 'त्रीणीपद' (वै०म०प्र०) इन्द्रोभिमन्तेति पादयोः शंखाग्रेण कूर्चेन वा पाद्यजलंदध्यात् । 'शन्नोदेवी' (अ०र्व-१-१-१) रिति तथादक्षिणहस्ते तोयमाचमनीयं दद्यात् । 'तद्विष्णोः परमं पद' (ऋ०स०१-२) मिति 'इमास्सु मनस' इति मूर्न्धि भुजयोः शंखचक्रयोः पादयोश्च पुष्पं दद्यात् । 'तद्वि-प्रास' (ऋ०स०१-२-७) इति 'इमे गन्धा' वै०म०प्र०) इति ललाटे गन्धेनोर्ध्वाग्रमालिप्य, बाह्वोर्वक्षसि कंठेनाभेरूर्ध्वे वा तेनाऽलं करोति ।

'परोमात्रया' (ऋ०स० ५-६-२४) बृहस्पतिः, इमेधूपा' (वै०म०प्र०) इति चतुर्दिक्षु धूपयेध्दूपम् । 'बिष्णोः कर्माणि, (ऋ०ऋ०१-२) 'शुभ्राज्योति' (वै०म०प्र०) पार्श्वे दर्शयेद्दीपम् अग्निरिन्द्रे (वै०म०प्र०) त्यभिमृश्यपात्रमुद्धृत्य, 'त्रिर्देव, इंद्रियानिशतक्रतौ' (वै०म०प्र०) इति मधुपर्कवदर्धं निवेदयेत् ।

द्रव्यालाभे तोयं पात्रालाभे अक्षतं कूर्चेन तोयं वा दद्यात् । पूर्व-वदाचमनं दद्यात् । 'आपोहिष्टे (वै०म०प्र०१) ति स्नानायाभ्युक्षणं कृत्वा, 'मित्रस्सुपर्ण' (वै०म०प्र-१) इति प्लोतं 'तेजोवत्सव' इति वस्त्रं, 'भूतोभूते' ष्वित्याभरणं, 'सोमस्यतनूरसी' त्युत्तरीयं, 'अग्निदूत' (ऋ०स०१-१) मित्युपवीतं दद्यात् । तत्तद्द्रव्यं ध्यायन् तत्तदंगेषु पुष्पं वा दद्यात् । पूर्व-वत्पाद्यार्घ्याचमनपुष्पगन्धधूपदीपाचमनानि पंचमूर्त्तिमंत्रै र्द्रव्यानाम संयोज्य 'ददामी'ति दद्यात् ।

यथैकः पुरुषः पञ्चसंज्ञिकः तथा सर्वंमनसापञ्चधासंकल्प्य पञ्चभिर्नामाभिरेव कुर्यात्। देव्यौ स्नानोत्सवबलिबेराणि च एकमूर्त्याऽर्चयेत् । परिषदां नाममंत्रै र्यथालाभमर्चनं स्यात् ।

## हविध्दानं

'अथावनीद' (वै०म प्र०८) मिति प्रोक्ष्य, प्रमुखेमण्डलमुपलिप्य, हविःपात्रं संगृह्य, अधिदेवमादित्य मभ्यर्च्य, संशोध्य, (वै०म०प्र०१) 'देवस्यत्वे' ति घृतेनाऽभिघार्य, गायत्रीं वैष्ण वीं, जपन् स्थाल्यां चतुर्भागंहित्वा, त्रिभागं हविःपात्रे प्रक्षिप्य, मण्डले निधाय, तस्मिन् हविषि, सुगन्धमुत्पूतं गव्यं घृतं 'देवस्त्वे' त्यास्राव्य, 'अहमस्मी' (तै०वा०२-८-८) त्यभिमृश्य, 'तदस्यप्रियं सुभूस्स्वयंभू' (वै०म०प्र०८) रिति हविर्निवेदयेत् । देवीभ्यांस्नापनोत्सवबलिबेरेभ्यो निवेदयेत् ।

## होमः

ब्राह्ममुत्कुटिकासनं वाआसीनोऽग्निकुण्डे चुल्यां वा अग्निंपरिषिच्य, देवेशाय साज्यचरुं 'अतोदेवाद्यै' मूर्तिमंत्रैश्च जुहुयात् । देव्यादि तदालयगतपरिषद्देवेभ्यस्त्रिकालं जुहुयात् उत्तमे प्रातर्मध्यान्हयो र्देवेशाय देवीभ्यां मुनिभ्यां ब्रह्मेशानाभ्यां मध्यमे च, एतेभ्योमध्यान्हएव अधमे जुहुयात्। पुनश्चाऽग्निं परिषिच्य अशक्तः कुण्डादग्निंसमिध्यारोप्य, लौकिकाग्नौ निधाय जुहुयात् ।

## बलिदानं

शिष्यो नम्रदेहः तत्तद्देशे मणिकादिद्वारपालेभ्यः, श्रीभूताद्यनपायिभ्यो, दिग्देवताभ्यो विमानपालेभ्यो मही भूतान्तं प्रणवादि नमोन्तेन तत्तन्नाम्ना पूर्वमुदकं पुष्पं बलि मुदकं च दद्यात् । तस्य दक्षिणतो भूतयक्षपिशाचनागेभ्यो बलिशेषं दद्यात् ।

देवेशाय 'इदंविष्णु' रिति स्वादुशीतलं वारि पानीयं दत्वा, निवेदितमपनीयमण्डलं संमृत्ज, तथैव आचमनं 'विचक्रमे' इति मुखवासं दत्वा, विधिना बलिमाराध्य, बलिबेरयुतमालयं प्रदक्षिणं कारयेत् ।

## प्रणामः

विष्णुसूक्तेन 'मस्तिष्कं संपुटं प्रह्वांगं पंचांगंदंडांग' मिति पञ्चप्रणामान् कुर्यात् ।

मस्तकेऽञ्जलौ न्यस्ते समस्तिष्कः, हृदयेंजलिपुटंन्यसेत्, ससंपुटः, पाणीव्यत्यस्यहृदयेन्यस्याऽऽनतगात्रो भवेत् सप्रह्वांगः, 'पादांगुलिभ्यां-जानुभ्यांवाऽऽसीनः साञ्जलि' भूमौ ललाटं निदध्यात्। सपंचांगः पादै हस्तौ प्रसार्य साञ्जलिर्भूत्वा अधो मुखो दंडवच्छयितः सदंडांगः, प्रणामः।

रत्नंसुवर्णमुख वा संवादक्षिणां दद्यात्। पुरुषसूक्ते नैकाक्षरादिना च संस्तूय अष्टाक्षरेण पुष्पाऽञ्जलिंद दाति। 'सूर्यस्त्वे' ति स्त्वेकवाटौ बन्धयति।

मध्याह्ने सायान्हे च पूर्ववदुद्धाटयति। द्वारार्चित पुष्पाप्यपोह्या ऽभ्युक्ष्य, ध्रुवस्यपादपीठे न्यस्तानिपुष्पाण्यनुद्धृत्य, उपरिपूर्ववत्पुष्पन्यासं कुर्यात्। निशान्ते तानि निर्माल्यानि भवन्ति। तथैव धात्रादि द्वार-देवांश्चाभ्यर्च्य, कौतुकादि बिंबे अर्चितानि पुष्पाण्यादाय तत्पीठपार्श्वे निधाय, आसनाद्यैरर्चयेत्। उत्तमे पाद्याद्यैरुपचारैरर्चयेत्। मध्यमे रात्रौस्नानाद्यैरुप-वीतान्तैर्विनाऽन्यैः। अधमे पाद्याद्यर्घ्या चमनान्तैर्हविषि लब्धे पाद्यादि-हविरन्तैः अर्धयामे पाद्यादिदीपान्तै र्हविरन्तैरित्येके।

अर्धयामे पुष्पन्यास-होमबलिदानबल्युध्दरणानि न कुर्वीत। अंत्य वेलायां तत्तन्मंत्रेषु तत्तन्मूर्त्तिमंत्रं संयोज्यार्चयेत्।

नवषठ्-पंचमूर्त्तिविधाने विष्णुमादिमूर्त्तिं पूर्ववदर्चयेत्। पुरुषमूर्त्तेरा-पोहिष्टेत्याचमनं, हिरण्यगर्भ इति अर्घ्यदानं, हविर्निवेदनं च। सत्यमूर्त्तेः 'योगे योग' इत्याचमनम्, 'इदमापः शिवा' इत्यर्घ्यदानम्, 'इहपुष्टि' मिति हविर्निवेदनं च। अच्युतमूर्तेः 'समानेवृक्ष' इत्याचमनं, 'नारायणायविद्महे' इतिअर्घ्यदानं, 'समावर्त्ती' ति हविर्निवेदनं च। अनिरुध्दमूर्त्तेः 'पवित्र' इत्याचमनं, 'कयानश्चित्रो' इति अर्घ्यदानं, 'त्रीणिपदे' ति हविर्निवेदनं चकुर्यात्। शयानस्याऽऽदिमूर्त्तेरिव मंत्रेषु तत्तन्मूर्त्ति मंत्रं संयोजयेत्। नरनारायणनारसिंह्मवराहाणाम्स्तत्तन्मूर्त्ति मन्त्रं संयोज्याऽर्चयेत्। ध्रुवार्चनायां पूर्ववत् ध्रुवकौतुकयोः पुष्पन्यासविधानेन पुष्पन्यासं कृत्वा द्विकालमेककालं वा स्नापयित्वाअभ्यर्च्यआवाहनविसर्गौ नकुर्यात्। एष विशेषो अन्यत्सर्वंसमानम् अन्येषां देवानामर्चने मंत्र एव विशेषोभवतीत्याह मरीचिः॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे नित्यार्चनाविधानं नाम एकचत्वरिंशः पटलः ॥४१॥

# अथ द्विचत्वारिंशः पटलः

## बलिविधिः

### बलिपात्रलक्षणम्

अथ बलिविधिं वक्ष्ये-सौवर्णं रजतं, कास्यं वा, बलिपात्रं आचार्यहस्तेन त्रिंशदंगुल विस्तारं, भुवङ्गाऽर्धविस्तारं वा, समवृत्तं, तत्परित एकांगुलोन्नतं, सीमावृत्तं तन्मध्ये पद्मस्यकर्णिकावदष्टांगुलोन्नतं, वृत्तं, तत्परितोद्व्यंगुलायतैरष्टदलैर्युक्तं कारयेत् ।

द्विप्रस्थैःशुद्धैस्तण्डुलैश्चरूंपक्त्वा, पात्रं प्रक्षाल्प, अधिदैवं बलि-रक्षकमभ्यर्च्य, संशोध्य, चरुं प्रक्षिप्य, अभिघार्य, अन्नंसंमर्द्य, कर्णिकाकारे द्वादशाऽङ्गुलं, दशांऽगुल, मष्टाऽङ्गुलं वा, उन्नतं; मूले द्विगुणपरिणाहम्; अग्रे अर्धपरिणाहं एवं बलिं कत्वा, देवाभिमुखे निधाय, पूर्ववत्कौतुकाद्बलौ-देवंध्यात्वा, 'योगेशं परब्रह्माणं, परमात्मानं, भक्तवत्सल' मिति मन्त्रैस्समा ऽऽवाह्माऽऽसनाद्यैरेकादशोपचारैरर्चयेत् । उत्तमे त्रिकालेष्वन्नबलिं, मध्यमे-प्रातर्मध्याह्नयोः अधमे मध्याह्न एव, सायं प्रातः अन्नाभावे अक्षतं कुडुपं यथालाभं वा, पात्रे निधाय अक्षते देव माराध्यार्चयेत् ।

गणिकादेवदासीर्वा आहूय, नृत्त मंडपमध्ये मण्डलमुपलिप्य, अप्सरसश्चावाह्य, अभ्यर्च्य, ताप्सरसस्स्मृत्वा, प्रोक्ष्य, पुष्पं दत्वा, नृत्तगेयं चकारयेत् ।

पश्चाच्छिष्यमाहूय, कटकांगुलीयोष्णीषोत्तरीयाऽऽभरणादिभिरलंकृत्य गरुडंबुध्वा, आराध्य, 'अतोदेवा' दिना देवमनुमान्य, 'उद्यन्त' मिति बलिमुद्धृत्य, 'देवस्यत्वे' ति शिष्यस्य शिरसि स्थापयेत् । व्यजनैर्धूपदीपैर्हे-मादि परिच्छदै र्वितानादिभि र्यथाशक्त्यलंकारै र्भक्तैश्च सहितो गच्छेत् । ततो वाद्यघोष समायुक्तं दिक्ष्वष्टासु नृत्तगेयं च कारयेत् ।

आवरणद्वयाधिके सर्वेषु प्रथमादि प्रत्येकं सकृत्, द्वितीये त्रिः, प्रथमे त्रिरेव वा, प्रथमे सकृत्, द्वितीयेद्वि रित्येके । 'प्रतद्विष्णु' रिति प्रदक्षिणं कारयेत् अन्तः प्रविश्य, भूतवीशान्तरेतिष्ठन् पादौ प्रक्षालयेत् । अर्चको हस्ताभ्यां बलिमादाय, देवाऽभिमुखे न्यस्य, कौतुके देवमोंकारेण समारोप-येत् । बल्यग्रमादाय विष्वक्सेनाय दत्वा, तच्छेषं भूतपीठे सोदकं क्षिपेत् ।

## नित्योत्भवः

नित्योत्सवमिच्छन् बलिबेरमाराध्य, हविर्निवेद्य, शिष्यस्यशिरसि स्थापयित्वा, बल्यग्रतो नयेत् । अथवा शिबिकायां गरुडं बुध्वाऽऽराध्य, देवं समारोप्य, पूर्वोक्त गुणसंपन्नैश्शिष्यैर्वाहयित्वा, सर्वालंकारसंयुक्तं, बलिनासहपूर्ववत्प्रद क्षिणं कारयेत् । पश्चादभ्यन्तरं प्रविश्य, अलंकृते मंटपे पीठे देवं संन्यस्य पाद्याद्यर्घ्यान्तमभ्यर्च्य, नीराजनं कृत्वा, नृत्तगेयवाद्यैर्विनोदं कारयित्वा, पूर्ववत्पादुकार्चनं कृत्वा, अभ्यन्तरे देवंसंस्थापयेत्, एवं नित्योत्सवं त्रिसंध्यं सायं प्रातर्वा कुर्यात् ।

नित्योत्सवेन महोत्सवफलं लभेत, भगवान् प्रीतो भवेत् । राज्ञोराष्ट्रस्यबलवृद्धिर्भवति । बलिभ्रमणकाले ये सेवन्ते ते सर्वे पदेपदे यज्ञफलं लभेरन् । नवषट्पंचमूर्तिविमाने विष्णो रादिमूर्त्तेर्वा, बलिमाचरेत् ।

## उपचाराः

अथार्चनांगोपचारान् वक्ष्ये - उपचारो विग्रहश्चैकार्थौभवतः, आसन, स्वागता, ऽनुमान, पाद्या, ऽऽचमन, पुष्प, गन्ध, धूप, दीपा, ऽर्घ्या, ऽऽचमन, स्नान, प्लोत, वस्त्रो, त्तरीय, यज्ञोपवीत, पाद्या, ऽऽचमन, पुष्प, गन्ध, धूप, दीपा, चमन, हविः, पानीया, ऽऽचमन, मुखवास, बलि, प्रणाम, प्रदिक्षणाः पुष्पांजलिसहितास्तुतिश्चेतिद्वात्रिंशदुपचाराः एतेनृत्तगेय संयुक्ता उत्तमोत्तममित्याहुः ॥

## उपचारभेदाः

मुखवासान्ताः प्रणामदक्षिणायुतानवविंशत्युपचाराः; मुखवासांताः दक्षिणायुताः अष्टाविंशत्युपचाराः, अर्घ्याचमनांताः प्रणामदक्षिणायुताः त्रयोदशोपचाराः । अर्घ्याचमनांताः एकादशो पचाराः पाद्यद्यर्घ्याचमनांताः अष्टोपचाराः, पुष्पाद्यर्घ्याचमनांताः षडुपचाराः, पुष्पदानं प्रणामश्चद्वा-वुपचारौ, प्रणामः एकोपचारः ।

त्रयोदशविग्रहानाम अदौप्रधानमावाहनं, अन्तेविसर्गश्च, आस्नपनं च कुर्यात् । सर्वत्रैकोपचारः द्वावुपचारौ च, होमे षडुपचारान्, स्नपने-अष्टोपचारान्, हविषिहीने त्रयोदशोपचारान्, अष्टोपचारान्वा, हविषि लब्धे अष्टाविंशत्युपचारान् नवविंश त्युपचारान् वा, विमानार्चनायामेव द्वात्रिं-

च वर्जयेत्। शुद्धे देशेकटेषु वस्त्रेषुवा धान्यानि आस्तीर्यशोषयेत्। उलूखलमुसलौप्रक्षाल्य, उलूखले हरिणीं, मुसले विष्णु मभ्यर्च्य, उलूखले धान्यानिप्रक्षिप्य, धान्येषु सोममभ्यर्च्य, आचार्यः 'अतो देवा' दिना किंचि दवघातंकृत्वा, ततः शुद्धाभिः स्त्रीभिः पुरुषैर्वा स्वेदरोमादीन् परिहृत्य, अवघातं कारयेत् 'निरस्त' मिति शूर्पे प्रक्षिप्य, तुषाश्मकणादीन् संशोध्य, तण्डुलान् शुद्धान् 'आपोहिष्ठे' ति प्रोक्ष्य, शुद्धेपात्रे 'देवस्यत्वे' तिगृह्णाति। विष्णोः द्रोणहंविरुत्तमं, द्रोणार्धं मध्यमं, आढकमधमं। देव्योराढकं तदर्धं वा, परिवाराणां द्विप्रस्थैः, प्रस्थाधिकै र्वा तंडुलैः प्रोक्तम्॥

## माषादि लक्षणम्

अष्ठतिलं माषं अष्टमाषं शाणं, विंशतिशाणं निष्कं, तिलाष्टकं शाणं, तदष्टकं माषमिति भृगुः। दशनिष्कं पलं, अष्टनिष्कमिति केचित्। चतुष्पलं कुडुबं, चतुष्कुडुबं प्रस्थं, चतुष्प्रस्थ माढकं, चतुराढकं द्रोणं भवति।

## हविर्निर्वापः

लोहमयीं मृण्मयीं वा स्थालीं गृण्हीयात्। मृण्मयींपक्षे अतीते वि सर्जयेत्। मासेऽतीते इति केचित्। 'प्रजास्थाली' (व०म०३) मिति स्थालीं प्रक्षाल्य, 'देवस्यत्वे' ति तंडुलान् प्रक्षिप्य, शुद्धाभिरद्भिः 'आप उन्दं' त्विति चतुःप्रक्षाल्य, 'विष्णवे जुष्ट' मिति चुल्यां स्थालीमारोप्य, इन्धनैर्निर्बिर्धूमैस्समेनाऽग्निना 'वाचस्पतये पवस्वे' (वै०म०प्र०३) ति पचेत्। उपदंशान्, कदळी चूतपनस नाळिकेर तिन्त्रिणी कारवल्लीत्रय व्याघ्र शिंबिभेदबृहतीभेद सिंहीव्याघ्रनखी कर्कन्धूर्वारक कुंभाडकूश्मांड कृतबंधनाऽलर्ककार्कोटकानि सूरणकंद क्षुद्रकंद महाकंद वल्लीकन्द श्रृंगिबेरोत्पलकं दपिंडि शकुटकंदादीनि च मरीचि जीरक सर्षपाणि मुद्गाऽऽढककुलत्थतिल्वमाषमसूरकादीनि शाकेषुजीवन्ती रथरसी रक्तबाष्पाणि च अन्यानिहविष्याणीति मन्वाद्यैरुक्तानि यथा लाभमाहरेत्।

कोशातकीं पटोलीं अलाबूं च विशेषेण परिवर्जयेत्। कदल्यादिष्वेकंद्वौत्रींश्चतुरोधिकान्वा दोषविहीनान् प्रक्षाल्य, यथायोगं सुगंधंरससंयुक्तं सुपचेत्।

आढक तण्डुलस्योपदंशं प्रत्येकं षट्पलं, पञ्चपलं, चतुष्पलं वा

मुद्गसारं प्रस्थप्रस्थार्धं कुडुबं वा घृतंकुडुबं तदर्धं, गुलमेकपलं, दधिप्रस्थं-पादहीनं, अर्धंवा क्रमुकफलानि षोडश, द्वादशाष्ट, षट्, चत्वारि, द्वेवा, तत्त्रिगुणानि द्विगुणानि वा तांबूलपत्राणि, मातुलिंगैलालवंगकर्पूरादि यथालाभं भवेत्, आढकतण्डुलाद्यधिकेष्येवं वर्धयेत् ।

## प्रभूतमहाहविषो लक्षणम्

द्विद्रोणादि षट्द्रोणान्तंप्रभूतं, शतप्रस्थादि सहस्रप्रस्थान्तं-महाद्धविरित्याचक्षते ।

## षड्विध हविर्लक्षणम्

तण्डुलैः केवलैः पक्वंशुद्धान्नं, तण्डुलतुल्यैः अर्धैर्वा मुद्गसारैर्युक्तं मौद्गिकं, तंडुलत्रिगुणेनपयसा तदर्धजलेन तंडुलार्धमुद्गसारै र्नालिकेर-फलसारैश्च पक्वंपायसं; तंडुलार्धतिलचूर्णैर्युक्तंकृसरं, तंडुलाधिकतोयेन त्रिगुणेनपयसा अष्टभागैःपंचभागैर्मुद्गसारै स्तंडुलार्धेनघृतेन गुलेन च युक्तं गौल्यं, तण्डुलार्धैर्यवसारैः पक्वंयावकमिति षड्विधं भवति ।

## वर्ज्यहविः

द्रोणार्धाधिकमेकपात्रेनपचेत् मासातीते मृद्भांडे पचनं न कुर्यात् । अपक्वं, स्रावितं, गंधदुष्टं, नासिकाऽऽस्यवायूपहतं, आघ्रातं, तुषकेशादि संयुक्तं, विवृतं द्विजादिभ्योन्यजातिदृष्टंस्वेदस्पृष्टं, लंघितं, यामातीतं, पात्राऽन्तरगतं, शीतं, हविरुपदंशं च वर्जनीयम् । अन्यपात्रगतं पुनः पाकार्ह-मुपदंशादि न वर्जनीयम् ॥

## हविरानयानादि

स्थालीबाह्यमाद्भिः संशोध्य, ऊर्ध्वपुंड्रंकृत्वा, वारुण मंत्रैर्जलसेकं कृत्वा, दक्षिणोत्तरपाणिभ्यां हविः प्रणवे नोद्धृत्य, शखध्वनिसमन्वितमानीय, आलयस्योत्तरेपार्श्वे विष्णुगायात्र्यानिधाय विधिवन्निवेदयेत ॥

## हविष्षु उत्तरोत्तरश्रैष्ठ्यं निवेदितान्नविनियोगश्च

शुद्धान्नान्मौद्गिकंमुख्यं तस्मात्कृसरं, ततः पायसं, ततो यावकं, तत्माद्गौल्यम्, श्रेष्ठंहविःश्रेष्ठफलंस्यात्, तस्मिन्नधिकेप्यधिकम्, नित्य-मेवंहविर्दानेफलमनन्तं प्राप्नोति । विधिनैवभक्तियुक्तो येनकामेन वा

विष्णोर्देवेशस्ययोहविर्दद्यात् तत्सर्वं संपूर्णं असंशयं लभेत। तत्तत् स्थाली शोषमाचार्यायदद्यात्, अर्चकायवा, देवस्य निवेदितमन्नादिसर्व मांचार्याय दद्यात्। तन्नान्यैःग्रहीतव्यम्, अन्यथा चेद्भगवान् क्रुद्धो भवेत्, हविर्देवोन-गुण्हाति, सर्वं निष्फलं स्यात्।

देवेशस्य निवेदितं सर्वं शुद्धंहि तत्सर्वेषांसुरमुनिमनुजानां भोज्यं, यथागुरोरुच्छिष्टं पुत्रभृत्यानां भोज्यं तथा सर्वेषां गुरोर्विष्णोरुच्छिष्टं देवा-नांमुनीनां च निवेदनीयम् तस्मा द्वैश्वदेवबलिहरणे च योग्यं स्यात्, मनुष्येषु द्विजातीनां भोज्यमेव, तस्मादाचार्यादयो विष्णो निवेदितभोजनादेव सर्वपाप विनिर्मुक्ताः पूतकायास्सर्वकर्मस्वधिकारिणो भवेयुः, शूद्रादिषु च वैष्णवानां भोक्तव्यं, अन्यदेवानां निवेदितं तदर्चकानां तद्भक्तानां च भोज्यं, द्विजैर्भुक्तंचेच्चांद्रायणं प्रायश्चित्तं भवेदित्याह मरीचिः॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे पुष्पहविर्दानं नाम त्रिचत्वारिंशः पटलः॥४३॥

## अथ चतुश्चत्वारिंशः पटलः

### नवषट्पंचमूर्त्यर्चना

अथ नवषट्पञ्चमूर्त्यर्चनाविशेषं वक्ष्ये-अर्चकाः स्नात्वा, आलय माविश्य, पूर्ववत् कवाटोद्घाटनादीनि कुर्यात्। द्वितीयतले विष्णुं पूर्व-वदभ्यर्च्य, अधस्तले प्राच्यां पुरुषं पूर्ववत्, तद्दक्षिणे 'श्रियं कमलामानंदां-पुरुषप्रिया' मिति श्रियं, वामे 'मेदिनीं धरणीं उर्वीं सर्वाधारा'मिति मेदिनीं, पूर्ववदर्चयेत्। ब्रह्मेशौच, 'भृगुंमुनिवरंशुद्धंअग्निवर्णं' इति भृगुं, 'पुराणं भक्ति-मंतं भार्गवं चिरजीविन' मिति पुराणं, प्रथमद्वारदक्षिणे तुहणं, वामे बलिं, द्वितीयद्वारदक्षिणे तीर्थं वामे किष्किंधं च, पूर्ववदर्चयेत्।

दक्षिणे सत्यंपूर्ववत् तद्दक्षिणे 'धृतिं दक्षसुतां सत्यपत्नींर मा' मिति धृतिं, वामे पौष्णीं वरदामुर्वीं पृथिवी'मिति पौष्णीं, ब्रह्मोशौ 'धातृणाधं पूतकायं ब्रह्मसंभवं वाग्देवीपति' मिति धातृणाधं, 'पुण्यं विशुद्दं विश्वं वरिष्ट' मितिपुण्यंच, प्रथमद्वारदक्षिणे शंखनिधिं, वामेपद्मनिधिं, द्वितीयद्वार दक्षिणे 'नासत्यं दिव्यंविवस्वत्पुत्रं अश्विन' मितिना सत्यं, वामे

'दस्त्रंपुत्रंसर्वज्ञंदेवसुन्दर' मिति दस्नं च, पूर्ववदर्चयेत् ।

पश्चिमे अच्युतं पूर्ववत् दक्षिणे 'पवित्रीं इंदिरांलक्ष्मीं अच्युतप्रिया' मिति पवित्रीं, वामे 'क्षौर्णी वरांगीं वरदांमही' मितिक्षौर्णी, ब्रह्मशंकरौ, 'भृगुंतपोनिधिंवेदरूपं महाब्र (तद्युति) प्रदम्' इति भृगुं, 'मार्कंडेयंगुरुंदीप्तं-पुण्यभागिन' मिति मार्कंडेयं, प्रथमद्वारदक्षिणे चक्रचूलिनं, वामेशंखचूलिनं, द्वितीयद्वारदक्षिणे कु(गु)हं, वामे जांबवश्च पूर्ववदर्चयेत् ।

उत्तरे अनिरुद्धं पूर्ववत्, नागराजं ब्रह्मेशौ भृगुमार्कंडेयौ च पूर्ववत् । प्रथमद्वारदक्षिणे शंखनिधिं, वामे पद्मनिधिं, पूर्ववद्वितीयद्वारदक्षिणे 'विद्युतं निभं अरुणानुजं घोररूपिण' मिति विद्युतं वामे 'अप्सरसोधिपं शुद्धं श्वेताभं भयानक' मिति अप्सरोधिपं च पूर्ववदर्चयेत् ।

द्वितीयतले दक्षिणे 'नरं पार्थं गुडाकेशं श्वेतवाहन' मिति'नरं, नारायणं कृष्णं शौरिं भक्तवत्सल' मिति नारायणम्, आदित्यं पूर्ववत्, 'प्रजापतिं पितामहं हेमवर्णम्, अजानन' मिति प्रजापतिम् ।

पश्चिमे नारसिंहं ब्रह्माणं शंकरं च पूर्ववत् ।

उत्तरे वाराहं पूर्ववत्, 'महींगांपृथिवीमुर्वी' मिति महीम् इन्द्रं वरुणं पूर्ववत् ।

तृतीयतले 'शयनम् अनादिनिधनम् अनंतमहिमानम् अत्यंताद्भुतम्' इत्यनन्तशयनं, पूजकस्थाने महीमार्कंडेयौ च पूर्ववत् नाभिपद्मे ब्रह्माणं-पञ्चायुधाँ श्च पूर्ववत्, दक्षिणे कर्किणं, वामे सिद्धिं च, प्रथमद्वार दक्षिणे यमुनां, वामे गंगां, द्वितीयद्वारदक्षिणे सुरं, वामे सुंदरं च, पूर्ववदर्चयेत्, अन्यत्सर्वंसमानम् ।

षण्मूर्त्तिविधानं चेन्नरनारसिंहवाराहान् विना अन्यत्सर्वं पूर्ववदर्चयेत् ।

पञ्चमूर्त्तिविधानं विष्णवादि पञ्चमूर्त्तीः पूर्ववदर्चयेत् । अत्रविशेषो-वक्ष्यतेपुष्पन्यासकाले विष्णोरादिमूर्त्तेः पादमध्ये 'विष्णवे नम' इति, परितः प्रागादि चतुर्दिक्षु 'विष्णवे महाविष्णवे सदाविष्णवे व्यापिन' इति च न्यसेत्, अथवा विष्णवादि पञ्चमूर्त्तिनामभिर्न्यसेत् ।

आग्नेयादि कोणेषु पूर्ववत्कपिलादि नामभिर्न्यसेत्, एवं प्रथमावरणे अन्ययोः पूर्ववत्, अन्येषां ध्रुवाणां पादमध्ये तत्तत्प्रधानमूर्तिनाम्ना सन्यसेत्, परितः चतुर्दिक्षुतत्तन्नामाभि न्यसेत्, नारायणस्य परितश्चाऽऽवरणत्रयदेवानां

नामभिर्न्यसेत्, नरस्य तन्नामाभिर्न्यसेत्, आवाहने तद्ध्रुवबेरात्तत्त-त्कौतुकादिषु समावाहयेत्, अर्चने तत्तन्मं त्रान्ते तत्तन्मूर्त्तिभिस्तत्तद्द्रव्यना-मभिस्संयोज्य, अर्चयेत् ।

अशक्तानामेकतलप्रासादे, द्वितले वा, विमानेषण्मूर्त्यर्चनं चेत्, आदि-मूर्त्तेर्ध्रुवबेरंपरितश्चाऽऽवरणत्रयं ध्रुवबेरदेवानांनामभिः पुष्पन्यासं कृत्वा, पुरुषादीनां चतुर्णां कौतुकादीनां पूर्ववत् कौतुकोक्तप्रकारेण पुष्पन्यासं कृत्वा, आदिमूर्त्तेर्ध्रुवबेरादावाह्यार्चयेत् ।

अनंतशयनस्य कौतुके, ध्रुवबेरस्य आवरणत्रय देवानां कौतुकस्या-वरणत्रयदेवानां च नामभिः पुष्पन्यासं कृत्वा, आवाहनविसर्गौविना एक-बेरार्चनोक्तविधानेन अर्चयेत् । पुरुषादीनप्यावाहन विसर्गौ विना एक-बेरार्चनोक्तमार्गेणाऽर्च्येयेदिति केचित् । पञ्चमूर्त्तिविधानं चे दुपरितल कौतुकं विना विष्ण्वादि पंचमूर्त्तीः पूर्ववदर्चयेत् ।

## पञ्चमूर्त्यर्चनाविधिः

पञ्चमूर्त्यर्चनाविशेषं वक्ष्ये - अर्चकाः परिचारकाश्च विधिनास्नात्वा आचम्य संध्यामुपास्य, देवादीनद्भिस्तर्पयित्वा, ब्रह्मयज्ञं च कृत्वा, देवालयं-गत्वा, 'विष्णोर्नुक' मिति शनैः प्रदक्षिणं कृत्वा, देवालयं गत्वा, हिरण्यपाणि' मिति कवाटमुद्घाट्य अभ्यंतरं प्रविश्य, देवंप्रणम्य, दीपान् संदीप्य, शिष्या 'धारा' स्वित्याधावं गृण्हीयुः अर्चकाः सर्वासां मूर्त्तीनां निर्माल्यमादाय, विष्वक्सेनमर्चयेयुः ।

गर्भालयं, पुरुषादीनां स्थानानि अलीन्द्रं च प्रदक्षिणक्रमेण 'अवधूत' मिति संमार्जनं कृत्वा, अद्भिरभ्युक्ष्य, उपलेपनं कृत्वा, अर्चनापात्रंहविः पात्राणि च प्रक्षाल्य, विधिनाशुद्धान्नपायसकृसरगौल्ययावकान् सर्वालाभे यथालाभं शुद्धान्नं वा पचेयुः। अर्चनाद्रव्याणि पृथक् पृथक् संगृह्य विष्णुगायत्र्याध्रुवस्थानं प्रोक्ष्य, पुष्पन्यासं कृत्वा, श्रीभूमीब्रह्मशंकरौ धात्रादि ब्रह्मपर्यन्तान् परिवारांश्च समभ्यर्च्य, मुखमंटपद्वारवामे स्नानपीठे विष्ण्वादि पञ्चकौतुकानि क्रमेण संस्थाप्य, पाद्याचमनमुखवासांश्च दत्वा, तैलाभ्यंजनम् अन्यदप्युचितं कृत्वा, आम्लाद्यै स्संशौध्य, विष्णुमूर्तिम् 'इषेत्वोर्जेत्वा' दिना शुद्धौदकै स्संस्नाप्य, चन्दनोदकैरभिषिच्य, 'पुरुषं सहस्रशीर्षा'द्यैः, सत्यं

विष्णोर्नुकाद्यैः अच्युतं 'अतो देवाद्यैः' अनिरुद्धं 'एकाक्षराद्यै' स्संस्नाप्य, तत्तत्स्थानं संशोध्य, तत्तत्पीठे संस्थापयेत् ।

## विष्णोः

एवं कर्तुमशक्तश्चेत्पुरुषादिकौतुकानि विष्णुपञ्चक दिनेषु एवं संस्नापयेत्, विष्णोरादिमूर्त्तेः दक्षिणे मार्कंडेयं, वामेभृगुं च, अभ्यर्च्य, पूर्व त्पुष्पन्यासं कुर्यात्, आवाहनपाद्याऽऽचमन स्नानार्थाश्चतस्त्रःप्रणिधीः संगृह्य साक्षतंकुशकूर्चं वा निक्षिप्य, अद्भिः प्रणवे न पूरयित्वा देवस्यदक्षिण-पार्श्वे पूर्ववदासीनः तद्विंबार्हस्तिष्ठन्वा आत्मसूक्तं जप्त्वा मंत्रन्यासा-क्षरन्यासौ कृत्वा, प्रणिधिमुद्धृत्य, ध्रुवात्प्रणिधिजले देवं भक्त्या पूर्ववत् ध्यात्वा, आवाह्यतद्व्यामंतोयं कूर्चेनाऽऽदाय 'आयातु भगवा' निति कौतुकबिम्बस्यमूर्ध्नि 'विष्णुमावाहयामी' त्यावाह्य तथा स्नपनोत्सव बलिबेरेषु समावाह्य दक्षिणेश्रियं वामेहरिर्णीं च आवाहयेत् । 'प्रतद्विष्णु' रिति पुष्पासनं दत्वा 'विश्वाऽधिकाना' (वै०म०प्र०८) मिति स्वागतं, 'मनोऽभिमन्ते' (वै०म०प्र०८) ति अनुमानं, 'त्रीणिपदे' ति पाद्यं, 'शन्नोदेवी' त्याचमनं, 'तद्विष्णो' रिति पुष्पं, 'तद्विप्रासे' ति गन्धं, 'परोमात्रये' ति धूपं, 'विष्णोः कर्मणी' ति दीपं, 'त्रिर्देव' इत्यर्घ्यं, पूर्ववदाचमनीयम्, 'आपोहिष्ठे' ति स्नातायाऽभ्युक्षणं, 'मित्रस्सुपर्ण' इति प्लोतं, 'तेजोवत्सव' इति वस्त्रं, 'भूतो भूते' ष्वित्याभरणं, 'सोमस्यतनूरसी' त्युत्तरीयम्, 'अग्निंदूत' मित्युपवीतं, पूर्ववत्पाद्याऽऽचमनादीनि दत्वा, 'तदस्यप्रिय' मिति शुद्धोदनं निवेद्य, द्वारपालादिभ्यो बलिंनिर्वाप्य, होमंहुत्वा, पूर्ववत्पानीयाचमनमुखवासं दद्यात् । एतान् सर्वान् मन्त्रान्ते चतुर्मूर्त्तिमन्त्रैः पञ्चमूर्त्ति मन्त्रैर्वा संयोज्य, ददाति मस्तिष्कप्रणामंकुर्यात् ।

## पुरुषस्य

अलीन्द्रे द्वारदक्षिणे पुरुषमर्चयेत् । पूर्ववत्पुष्पन्यासं कृत्वा, ब्रह्मशंकरौ पूजकमुनी द्वारदेवान् द्वारपालाँश्च अभ्यर्च्य, ध्रुवबेरादेवीभ्यां सहैव आवाह्य, आसनादीन् पूर्ववद्दत्वा, 'योगे योग' इत्याचमनम्, 'आपोहिष्ठे' ति स्नानम्, 'इदमापः शिवा' ('हिरणयगर्भ') इत्यर्घ्यं 'इहपुष्टि' मिति कृसरं (पायसं) हवि र्निवेद्य प्रह्वांऽग (संपुट) प्रणामं कुर्यात् । एष विशेषो ऽन्यत्सर्वं समानम् ॥

## सत्यस्य

दक्षिणे सत्यमर्चयेत्। पूर्ववत् पुष्पन्यासं कृत्वा, परिषद्देवान् ध्रुवबेरात् देवीभ्यां सहैवाऽऽवाह्य आसनादीनि पूर्ववद्दत्वा 'योगे योगे' त्विति आचमनम्, 'इदमापः शिवा' इत्यर्घ्यम्, 'इहपुष्टि' रिति कृसरं (पायसं) हविर्निवेद्य संपुट (प्रह्वांग) प्रणामं कुर्यात्। एष विशेषोऽन्यत्सर्वं समानम्।

## अच्युतस्य

पश्चिमे अच्युतमर्चयेत्। पूर्ववत्पुष्पन्यासं कृत्वा, परिषद्देवानभ्यर्च्य, देवीभ्यां सहैवाऽऽवाह्य, आसनादीनि पूर्ववद्दत्वा, 'समाने वृक्ष' इत्याचमनं, 'नारायणायविद्महे' इत्यर्घ्यम्, 'समाववर्त्ती' ति गौल्यं हविर्निवेद्य पञ्चांग-प्रणामं कुर्यात्। एष विशेषोऽन्यत्सर्वं समानम्।

## अनिरुद्धस्य

उत्तरे अनिरुद्धमर्चयेत्, पूर्ववत्पुष्पन्यासं कृत्वा, परिषद्देवानभ्यर्च्य, ध्रुवबेराद्देवीभ्यां सहैवाऽऽवाह्य, आसनादीन् पूर्ववत् दत्वा, 'पवित्रन्त' (ऋ०स०७-३८) इत्याचमनं, 'कयानाश्चित्र' (वै०म०८) इत्यर्घ्यं, 'त्रीणि पदे' ति यावकं हविर्निवेद्य, दण्डप्रणामं कुर्यात्। एष विशेषोऽन्यत्सर्वं समम्।

उपरितलेचैकबेरोक्तविधिना पुष्पन्यासं कृत्वा, मंन्त्रान्तेशयनादि नाम भिर्द्रव्यनामभिस्संयोज्याऽर्चयेदेषविशेषोऽन्यत्सर्वंस मानम्।

स्नपनोत्सवबलिबेराणि षोडशोपचारैरभ्यर्च्ययेत्, अथवा ता नेकादशोपचारैरभ्यर्च्य हविर्निवेदयेत्।

परिषद्देवानष्टोपचारैरभ्यर्च्य हविर्निवेदयेत्।

विधिना बलिमाराध्य बलिबेरेण सहैव आलयप्रदक्षिणं कुर्यात्।

अर्धयामे चार्चनांते ध्रुवबेरे देवं प्रणवेनारोपयेत्।

एकतलप्रासादे पञ्चमूर्त्यर्चनं चेदुपरितलार्चनं विना पञ्चमूर्त्ती रर्चयेत्।

द्वारेषु यत्रकवाटोऽस्ति तत्रादीनर्चयेत्। गर्भालयात् द्वारदक्षिणे बलिंदं, वामे तुहणं, अलीन्द्रद्वारदक्षिणे मणिकं, वामे प्रभावर्ती, मुखमंटपद्वारदक्षिणे तापसम् उत्तरेसिद्धिदं, सोपानमध्ये श्रीभूतं बहिरा ननं, देवाभिमुखे गरुडम्।

प्रथमावरणे चंद्रादीन् तत्तत्स्थाने, इन्द्राग्न्योर्मध्ये गुहम्, यमनीलयो-र्मध्ये दुर्गां, नीलवरुणयो र्मध्येबुधं, वरुणोदानयो र्मध्ये बृहस्पतिं, सोमोदान-योर्मध्ये ब्रह्माणं, सोमेशानयोर्मध्ये विष्वक्सेनम्, ईशानेंद्रयोर्मध्ये भास्करं, विमानं परितः प्रागादि चतुर्दिक्षु न्यक्षविवस्व न्मित्रक्षत्रैंश्च ।

प्रथमद्वारदक्षिणे किष्किंधम् उत्तरेप्रजापतिं ।

द्वितीयद्वारदक्षिणे विघ्नेशम्, उत्तरे नागराजं, देवाभिमुखे चक्रध्वज-शंखयूथाधिपाऽक्षहंतॄन् बहिर्मुखान् ।

तृतीयावरणद्वारदक्षिणे चक्रम्, उत्तरे शंखं, पुष्पसंचयस्थाने पुष्परक्षकं, स्नानोदकपानीयसंचयस्थाने वरुणं पचनागारे हवीरक्षकम् ।

चतुर्थावरणद्वारे चंद्रादित्यौ च एतान् पंचाशद्देवानर्चयेदित्येके ।

इति श्रीवैखानसे मरीचिप्रोक्तो विमानार्चनाकल्पे नवषट्पंचमूर्त्यर्चना विधिर्नाम चतुश्चत्वारिंशः पटलः॥४४॥

# अथ पंचचत्वारिंशः पटलः

## एकबेरार्चनाविधिः

अथैकबेरार्चनविधिं वक्ष्ये-प्रभाते स्नात्वा, आलय **प्रदक्षिणं प्रणामंच** कृत्वा, 'निरस्त' मिति कवाटमुद्घाट्य, दीपानुद्दीप्य, शिष्येण 'धारा-स्वि'त्युदकंगृहीत्वा, देवस्य निर्माल्यमादाय, विष्वक्सेनं समाराध्य, गर्भालयादिषु सर्वत्र संमार्जनं कृत्वा, अद्भिरभ्युक्ष्य, उपलिप्य, अर्चना-पात्राणि हविः पात्राणि च प्रक्षाल्य, हवींषिपाचयित्वा, पुष्पगन्धाद्य-र्चनद्रव्याणि संगृह्य, 'प्रतद्विष्णु' रिति देवस्यपुष्पासनं दत्वा, 'विश्वाधिकाना' मिति स्वागतं, 'मनोऽभिमन्ते' त्यनुमानं, 'त्रीणिपदे' ति पाद्यं, 'शन्नोदेवी' रित्याचमनं दत्वा, अतोदेवादिना तैलाभ्यञ्जनं कृत्वा, 'परिलिखित' मिति आम्लादिना संशोध्य, 'वारीश्चतस्र' इति वारिणा (सं)स्नापयेत् । 'इषेत्वा, यज्ञस्य, शुदध्व' मिति त्रिभिस्त्रिरभिषेचयेत् । सहस्रधारा यदि स्यात् वस्त्र-माल्यादिना गन्धाद्यैरलंकृत्य, पाद्याद्यर्घ्यान्तमभ्यर्च्य, सहस्रधारयाभिषे चयेत्, 'मित्रस्सुपर्ण' इति प्लोतेनविमृज्य, 'विष्णोर्नुक' मिति वस्त्राद्यैरलंकृत्य, तथैवाचमनंदत्वा, देवस्यपादयोर्मध्ये 'विष्णवे नम' इति पुष्पंदद्यात् । प्रागादि

चतुर्दिक्षु पुरुषाद्यावरणत्रयदेवानां तत्तन्नाम्ना प्रणवादि नमोन्तेन पुष्पन्यासं करोति । गर्भालयगतान् देवान् धात्रादीन् द्वारदेवान् द्वारपालान् अन्यपरिषदश्च तत्तन्नाममंत्रेणाऽभ्यर्च्य, अभ्यन्तरंप्रविश्य, देवं प्रणम्य, 'तद्विष्णो' रिति पुष्पं, 'तद्विप्रास' इति गन्धं, 'परोमात्रये' ति धूपं, 'विष्णोः कर्माणी' ति दीपं, 'त्रिर्देव' इत्यर्घ्यं, तथाऽऽचमनं दत्वा, 'तदस्यप्रिय' मिति हविर्निवेद्य, द्वारपालादिभ्यो बलिंनिर्वाप्य, होमं हुत्वा, पूर्ववत्पानीयाचमनमुखवासान् दत्वा, विधिना बलिमाराध्य, बलिबेरेण सहैवआलयं प्रदक्षिणंकृत्वा, अष्टाक्षरमंत्रेण पुष्पांजलिं दद्यात् । आवाहनविसर्गौविना अन्यत्सर्वं समान मिति विज्ञायते ।

## नवविधार्चनम्

अथ नवविधार्चनाविधिं वक्ष्ये - देवस्यहविर्द्रोणं, देव्योस्तदर्धं, पुरुषादीनां चतुर्णांद्रोणार्धं तद्देवीनां तदर्धं, नरनारायणनारसिंहवराहाणांद्रोणार्धम्, अनन्तशयनस्यद्रोणं, तदर्धं वा, उत्सवस्यद्रोणार्थं तद्देव्योस्तदर्धं, स्नपनबलिबेरयोर्द्रोणं, तदर्धं वा, अवताराणां द्रोणार्धं तदर्धंवा, पूजनमन्योर्ब्रह्मेशानयोर्वीशशैषिकयोश्च आढकम्, अन्येषांपरिवाराणां होमस्यचाऽऽढकार्धम्, देवेशस्य देव्योश्चप्रातर्मौद्गिकं, मध्याह्नेगौल्यं, रात्रौपायसं, अर्धयामेचाऽऽढकद्वयं हविरपूपसंयुक्तं, त्रिकालमाढकद्वयं, मंत्रहविः, कर्पूरसहिततांबूलं, नित्याऽग्निकुंडेऽमूर्ता राधनं, त्रिकालमन्नबलियुक्त, कर्पूरसहितान्, षोडशाजस्र दीपान्, त्रिगुणान् संध्यादीपान्, प्रातर्मध्याह्नयोर्द्विशतं, रात्रौपंचशतंश्रद्धादीपान् कर्पूरागरुसहितंधूपं, जाती चंपकोत्पलादिसुगंधिपुष्पाढ्य, द्वात्रिंशद्विग्रहैरर्चनं, देवगणिकाभिर्देवदासीर्भक्तैश्च (कृत) नृत्तगेयसंयुक्तं, नर्तकगायक वांशिकमौरजदार्दविकाद्यैस्संयुक्तं, प्रातः प्रबोधनघोषयुतं, स्नानकाले हविर्दाने बलिदान पटोद्धरणे बलभ्रमणे च कालेशंखभेर्यादि घोषणं नाडिकाभेरी ताडनं, सप्तप्राकार संयुक्तं, सर्वपरिषद्देवतार्चन मुत्तमोत्तमम् ॥

इंद्रादिलोकपालानाम्, अन्येषां परिवाराणां हविर्निवेदनं, विना बलिदान, द्विसप्ताजस्रदीपान् तत् त्रिगणान्त्सन्ध्यादीपान्, प्रातर्मध्याह्नयोः शतपञ्चाशत्, रात्रौ चतुःशतं श्रद्धादीपान्, पूजावेलायां मन्त्रहविर्निवेदनं, द्विकालहोमं द्विकालान्नबलियुक्तं षट्प्राकारस्थ देवार्चनं पूर्ववन्नृत्तगेयवाद्ययुक्तमुत्तममध्यमम् ।

पूजकमुन्योर्वीशशैषिकयोश्चहविर्विना द्वादशाजस्रदीपान् तत्त्रिगुणान् संध्यादीपान् पूजावेलानिवेदनं, द्विकालहोमं, तथैवाऽन्नबलियुक्तं, पञ्च-प्राकारस्थदेवार्चनं, पूर्ववन्नृत्तगेय वाद्यैर्युक्तमुत्तमाधमम् ।

पूजकमुन्योरवताराणां च द्विकाल निवेदनं, द्विपञ्चाजस्रदीपान्, तत्त्रि-गुणान् संध्यादीपान्, प्रातर्मध्याह्नयोश्शतं, रात्रौत्रिशतं, संध्यादीपान्, देव-दासीभिर्भक्तैश्च(कृत) नृत्तगेयवाद्य संयुक्तं, प्रातर्होमं, मध्याह्नेअन्नबलियुतं, पञ्चप्राकारस्थ देवार्चनं मध्यमोत्तमम् ।

अवताराणामेककालनिवेदनं, स्नापनोत्सवबलिबेराणाम्, आढ-कहविर्निवेदनम्, अष्टाजस्रदीपान्, तत्त्रिगुणान् संध्यादीपान्, प्रातर्म-ध्यह्नयोरशीतिं, रात्रौ द्विशतं, श्रद्धादीपान्, चतुष्प्राकारस्थदेवार्चनं नृत्त-गेयवाद्यैर्युक्तं मध्यम मध्यमम् । कौतुकस्य हविर्द्रोणं तस्यार्धं तद्देव्योः

यथालाभं मौद्गिकगौल्यपायसाऽपूपानां निवेदनं, षडजस्र दीपान्, तत्त्रिगुणान्, संध्यादीपान्, प्रातर्मध्याह्नयोष्षष्टिं, रात्रौ शतपंचाशत् श्रद्धादीपान्, अन्यत्सर्वं पूर्ववन्मध्यमाधमम् ।

देवेशस्य द्रोणार्धं हविः अर्धयामेचाऽऽढकं देवस्यार्धंदेव्योः स्नापनोत्सवबलिबेराणां एककालनिवेदनं, सायंप्रातः पूजावेलानिवेदनं, चतुरोऽजस्रदीपान्, तत्त्रिगुणान् संध्यादीपान्, प्रातर्मध्याह्नयोश्चत्वारिंशत्, रात्रौशतं, श्रद्धादीपान्; त्रिप्राकारस्थ देवार्चनं, नृत्तगेयवाद्यैर्युक्तम्, अधमो-त्तमम् ।

देवेशस्याऽऽढकं हविः, देव्योस्तदर्धं, त्रिकालं द्विकालं वा; स्नाप-नोत्सवबलिबेराणामेककालनिवेदनम् एककालेपूजावेलानिवेदनं, गौल्या-दीनि विना मध्याह्ने अन्नबलिहोमौ द्वावजस्रदीपौ तत्त्रिगुणान् संध्यादीपान् प्रातर्मध्याह्नयोर्दश, रात्रौविंशतिं श्रद्धादीपान् नृत्तगेयविहीनं वाद्ययुतं, द्विप्राकारस्थदेवार्चनम्, अधममध्यमम् ।

देवेशस्य द्विकालमेककालं वा, आढकंहविः तदर्धं मध्यान्हे देव्योर्य-थालाभंव्यंजनैर्युक्तं, एकमजस्रदीपं, तद्द्विगुणान् संध्यादीपान् यथालाभं-श्रद्धादीपान् अन्यत्सर्वं विनैकप्राकारस्थ देवार्चनम्, अधमाधममाहुः ।

उत्कृष्टे चोत्कृष्टं कर्त्तव्यम्, अन्यथा महत्तरो दोषो भवति, एकस्मि न्नालये देवेशादि देवानां एकाहस्योक्तकाले नित्यंहविरर्थं तण्डुलं एक-

कालस्य दशभारं, यथाभारोपदंशैर्युक्तमुत्तमोत्तमम् । तथाऽष्टभारमुत्तम-मध्यमम्, सप्तभार मुत्तमाधमम्, षड्भारंमध्यमोत्तमम्, पञ्चभारंमध्यम मध्यमम्, चतुर्भारंमध्यमाधमम्, त्रिभारमधमोत्तमम्, द्विभारमधम-मध्यमम्, तथैकभारमधमाधममित्येके ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे नवविधार्चना विधिर्नाम पंचचत्वारिंशः पटलः ॥४५॥

# अथ षट्चत्वारिंशः पटलः

## विशेषपूजाविधानम्

अथ मार्गशीर्षादिमासेषु मासनक्षत्रेषु विष्णुपञ्चदिने विषुवदयने संक्रमणेषु ग्रहणे अन्यस्मिन्पुण्य नक्षत्रे राज्ञः यजमानस्यवा, जन्मर्क्षेपि विशेषपूजां कुर्यात् ।

सर्वत्राऽऽलयंमृष्टसिक्तोपलेपनाद्यैस्संशोध्य, पैष्ट्या भूमिमलंकृत्य, वितानध्वजदर्भमालास्तंभवेष्टनाद्यैरलंकृत्य, द्वारेषु तोरण कदलीक्रमु-कांकुरोदकुंभाद्यैरलंकृत्य, ग्रामवीथिं च संशोध्य, प्रातस्संध्यार्चनान्ते चोत्सवबिंबमासाद्य, अभ्यर्च्य, निवेद्य, अग्निकुंडे चुल्यां वा, अग्निंपरिषिच्य, आज्यमिश्रचरुणा तत्तिथिवारनक्षत्रदेवत्यं, वैष्णवं, श्रीभूमि देवत्यं, ब्राह्मं, रौद्रं, तदालयगतपरिषद्देवत्यं च, हुत्वा, ग्राम वीथ्यां बलिंनिर्वाप्य, ऐकाह-कोत्सवोक्तमार्गेण उत्सवंकृत्वा आस्थाने अर्चास्थाने वा, द्रोणद्वयाद-हीनैस्तंडुलै र्यथालाभोपदंशैर्युक्तं, हविर्निवेदयेत्, एतदुत्तमम् ।

स्नपनोक्तक्रमेणाऽष्टशताऽष्टचत्वारिंशच्चतुर्विंशत् द्वादशकलशैस्सं-स्नाप्य, अभ्यर्च्य, तथैवहविर्निवेदयेत् मध्यमम् ।

प्रातर्मध्याह्ने वार्चनावसाने देवं शुद्धस्नपनविधानेन संस्नाप्याभ्यर्च्य निवेद्य होमं जुहुयात् एतदधमम् ।

## मार्गशीर्षद्वादशीपूजा

मार्गशिर शुद्धद्वादशीमुद्दिश्य एकादश्यां आचार्यो यजमानश्च त्रिषणवणस्नानं कृत्वा, आचम्य, संध्यामुपास्य, देवादीनद्भिस्तर्पयित्वा, ब्रह्मयज्ञं च कृत्वा, आलयमाविश्य, प्रदक्षिणं प्राणायामं च कृत्वा, देवाभिमुखे

समासीनोध्यायन् अष्टाक्षरमंत्रं यथोक्तविधिना अन्यामृचं वैष्णवीं यथाकामं जप्त्वा, वेदाध्ययनं च कारयेत्। अथवा वैष्णवीं गाथां (कथां) वा श्रावयेत्। मध्याह्ने साये च स्नानादीनि कृत्वा, रात्रौसर्व भोगरहितो देवंध्यायन्नासीत, शयीत वा, द्वादश्यां प्रभाते स्नात्वा, देवेशस्य महतींपूजां कृत्वा, गौल्यं हविर्निवेद्य, पानीयाचमनमुखवासं दत्वा, आचार्यो हस्ताभ्यांपुष्पमादाय 'सहस्रशीर्ष, मेकाक्षरं, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं च, जत्प्वा; प्रतिमंत्रं पुष्पांजलिं बहुशो दद्यात्। तथैवार्चकाः परिचारकाश्च दक्षिणपश्चिमोत्तरेषु स्थित्वा पुष्पांजलिं दद्युः। तत्कालेचतुर्दिक्षु वेदानध्यापयेत्। यजमानो नृत्तगेय वाद्यैर्विनोदं कारयित्वा, स्तोत्रैर्जयशद्वैश्च, संस्थूय आचार्याय दक्षिणां दत्वा, वैष्णवान् संपूज्य अश्नीयात्।

अस्मिन्मासे नित्यंगौल्यंहवि र्निवेदयेदिति केचित्। एतेन संवत्सरेय-त्न्यूनं तत्सर्वं पूर्णस्यात्। संवत्सरार्चनफलं लभेत्।

## पौषमासपूजा

पौषे मासे पुण्यनक्षत्रे क्षीरं गव्यं देवेशाय निवेदयेत्। सोपि संवत्सर फलं लभेत्।

तस्मिन्मासे ऋक्षपर्वणिदेवेशस्योत्सवस्नपनादीनि कारयेत्।

## माघमासपूजा

माघमासे देवाय अगरुकोष्टाद्यैर्धूपं दद्यात्। सोपि संवत्सरं धूपदान फलं लभेत्।

## पूनर्वसुपूजा

अस्मिन्मासे पुनर्वसौ राघवस्योत्सवं, स्नपनादीनि कारयेत् तदर्थं पूर्ववदंकुरार्पणं कृत्वा, पूर्वरात्रौ प्रतिसरोत्सवं कारयित्वा, सौवर्णं, राजतं, ताम्रं, वा प्रतिसरं कृत्वा, सौवर्णे रजते ताम्रे कांस्येवा पात्रे शालितंडुलानि प्रक्षिप्य, नववस्त्रेणाच्छाद्य, उपरि प्रतिसरंसन्यस्य, तस्मिन् शेषमभ्यर्च्य, शांतं, गरुडं, हनूमन्तं वा, अलंकृत्य यानमारोप्य, सर्वालंकारैर्नृत्तगेयवाद्यैर्धूपदीपैश्च, संयुक्तं, ग्राममालयं वा प्रदक्षिणीकृत्य, शयनस्थानेपश्चशयनानि वासांसि वा आस्तीर्य, देवमारोप्य, अभ्यर्च्य, पुण्याहान्ते पूर्ववत्प्रतिसरं बध्वा, शाययेत्। देवेनसह देवीं शाययेत्। लक्ष्मणभरतादीन् पृथगेव शाययेत्। प्रभाते स्नात्वा देवमुत्थाप्य, अलंकृत्य, ग्राममालयं सर्वालंकारसंयुक्तः, प्रदक्षिणं

कृत्वा, आस्थानमंटपे संस्थाप्य, स्नपनोक्तविधिना देवेशस्य, देव्याश्च, भरतादीनां पृथगेवस्नपनं कुर्यात् । अथवा देवेशस्यस्नपनं कृत्वा, अन्यांश्च शुद्धोदकैरभिषेचयेत् । अथवा सर्वान् शुद्धस्नपनविधिना संस्नापयेत् । नृत्तगेयवाद्यैर्विनोदं कारयेत् । महाहविः, प्रभूतं वा, निवेद्याऽपूपादीनि पक्त्वापक्वभक्ष्याणि निवेद्याऽलंकृत्य, प्रदक्षिणीकृत्य, अर्चास्थाने न्यसेत् । एवमुत्सवं कुर्यात् । सोपि महोत्सवफलं लभेत् । राज्ञो विजयो, बलवृद्धिश्च, ग्रामस्यच समृद्धिर्भवति ॥

## फाल्गुनमासपूजा

फाल्गुने मासि चन्दनादीन्, गन्धान्नित्यं यो दद्यात् ससंवत्सरगन्धदानफलं लब्ध्वा, सर्वैश्वर्यमाप्नोति ॥

## फाल्गुने उत्तरफल्गुन्या लक्ष्मीपूजा

तस्मिन्मासे चोत्तरफल्गुन्यां लक्ष्मी प्रादुर्भूता तस्यां देवीभ्यां सह देवेशं सप्तविंशति भेदैरभ्यर्च्य उत्सवस्नपनादीनि कृत्वा, प्रभूतं हविर्निवेदयेत् । अशक्तश्चेत् शुध्दोदकैरभिषिच्य यथाशक्ति हविर्निवेदयेत् ॥

## चैत्रमासपूजा

चैत्रमासे सुगन्धपुष्पैर्देवेशमलंकृत्य, संवत्सरपुष्पदानफलं लभेत् । तस्मिन्मासे चैत्र्यां पौर्णमास्यां देवेशं द्वात्रिंशद्विग्रहैरभ्यर्च्य उत्सवस्नपनं च कृत्वा, प्रभूतंहविर्निवेद्य, कदल्याम्रपनसादीनि सुपक्वानि बहूनि निवेद्य, सुगन्धपुष्पैर्देवेशमलंकृत्य, पुष्पदामभिः प्रपामलंकृत्य, तस्यांदेवेशंसंस्नाप्य, नृत्तगेयवाद्यैर्विनोदं कारयेत् । देवाभिमुखे धान्यपीठयोर्मधुमाधवौ समावाह्या-ऽर्चयेत् । वसंतकालावधिर्यावत् तावन्नित्यमेवं कुर्यात् ।

## वैशाखमासपूजा

वैशाखे मासि पानीयं नादेयं तटाकं कौपं नादंवा प्रभाते नवघटे स्वच्छं स्वादुतोयं संगृह्य, उत्पूय, आदित्यरश्मौ चंद्रकिरणे च, निधाय, द्वितीये हनि सुगंधवासिते नवेघटे संपूर्य, चन्दनो शीरैलादिवासितं वायुशीतं नवेकरके संपूर्य, देवेशाययो दद्यात् ससंवत्सरपानीयदानफलं लभेत् ॥

## रेवतीनक्षत्रे महीदेवीसहित देवपूजा

तस्मिन्मासि रेवत्यां महीदेवी प्रादुर्भूता, तस्यांदेवीभ्यांसह देवेशं सप्तविंशतिदिनैरभ्यर्च्य, उत्सवस्नपनादीनि कृत्वा प्रभूतं हविर्निवेदयेत् ।

## विशाखायांपूजा

विशाखानक्षत्रे देवं विशेषतोऽभ्यर्च्य, आम्रफलानि बहूनि पयसा सहपाचयित्वा, प्रनिवेद्य, प्रभूतं हविर्निवेदयेदित्येके ॥

## ज्येष्ठमासपूजा

ज्येष्ठमासि स्नानतोयम् अमृतवत् क्षौमं, सूक्ष्मं कार्पास तंतुकृतं वावस्त्रं, देवेशाय योदद्यात्, सोप्येकहायन स्नानतोयदानफलं वस्त्रदान फलं च लब्ध्वा, चिरायुर्भवति ॥

## आषाढपूजा

आषाढे मासि विधिना अर्घ्यद्रव्याणि संयोज्य, यो दद्यत्; ससंवत्सराऽर्घ्यदानफलं लभेत् ॥

## श्रावणमासपूजा

अथ श्रावणे घृतदधि च निवेद्य, स संवत्सर निवेदन फलं लभेत् ।

तस्मिन्मासे कृष्णाष्टमी रोहिणीयुक्ता, वियुक्ता वा, जयन्तीति कीर्थ्यते । तस्यां कृष्णार्चनं कुर्यात् । अंकुरार्पणंकृत्वा, तद्रात्रावर्चनावसाने कृष्णमलं कृत्य, आस्थानमंटपे संस्थाप्य, परितः प्रावरणं कृत्वा, नृत्तगेयवाद्यै र्विनोदं कारयित्वा, स्तोत्रैर्जयशद्वैश्च संस्तूय, (स्तुत्य) पटमुद्धृत्य, पुष्पाण्यवकीर्य, वस्त्रमाल्यादीनि, विमोच्य, धौतवस्त्रेणाऽऽछाद्य, पाद्याद्यैरभ्यर्च्य, तैलाभ्यञ्चनं कृत्वा, शुद्धस्नपनविधिना संस्नाप्य, गोक्षीरं नवनीतं च, 'शन्नो देवी' रिति निवेद्य, तांबूलं प्रदाय, पुष्पांजलिं दद्यात् ।

निवेदितंक्षीरम् अप्रजाः स्त्रियःपिबन्ति, ताःपुत्रवत्यो भवेयुः । तस्मिन्काले पूर्ववत्प्रतिसरं बध्वा, शयने पंचशयनानि वासांसिवाऽऽस्तीर्य, प्रतिसरंबध्वा, (देवं) शाययीत । प्रभाते स्नात्वा, देवमुत्थाप्य, अष्टोपचारैरभ्यर्च्य, अलंकृत्य, उत्सवोक्तक्रमेण ग्राममालयं वा प्रदक्षिणं कारयेत् ।

उत्सवे देवेशं ये सेवंन्ते, तेषां भक्तानां ब्राह्मणानां शिरस्सु हरिद्राचूर्णंतैलं च, विनिक्षिपेत्। आलयमाविश्य, आस्थानमंटपे संस्थाप्य, स्नपनोक्तविधिना शुद्धस्नपनविधिनावा स्नापयेत् । महाहविः प्रभूतं वा निवेद्याऽलंकृत्य, आलयंप्रदक्षिणीकृत्याऽर्चास्थाने संस्थापयेत्। एतेन उत्सवेन सर्वप्रजावृद्धिः विजयः कीर्त्तिश्च, भवति । इष्टान् कामानवाप्नोति । विष्णुलोके महीयते

## प्रोष्ठपदपूजा

प्रोष्ठपदे मासि अपूपादीनि भक्ष्याणि यो निवेदयति ससंवत्सरनिवेदन फलं लभेत् ॥

## आश्वयुजपूजा

आश्वयुजिमासि नित्यं मुखवासं यो दद्यात् ससंवत्सरमुखवास दान फलं लभेत ॥

## कार्तिकमासपूजा

कात्तिकि मासि देवेशस्य यो दीपं दद्यात्, ससंवत्सरदीप दानफलं लभेत् ॥

## कृत्तिकादीपोत्सवः

ततः तस्मिन्मासे कृत्तिकानक्षत्रयुक्ते वियुक्ते वा पर्वणि दीपंकुर्यात्। देवालयं संशोध्य, पैष्ट्या भूमिमलंकृत्य, देवंविशेषतोऽभ्यर्च्य, उत्सव-स्नपनादीनि पूर्ववत्कारयेत्। सायाह्ने बहुदीपार्थं घृते तैलंवाऽऽहृत्य अस्तं-गतेर्के देवस्योभयोः पार्श्वयोः गव्यं घृतमादाय, कर्पूरवर्त्तिका युक्तान् दीपानु-द्दीप्य, तथा मुखमण्टपे तद्द्वारे च दीपमालां कारयेत्, प्रथमावरणे द्वितीये तृतीये चतुर्दिक्षु, विदिक्षु च, दीपकूटान् कृत्वा, दीपानुद्दीप्य, दीपपात्रे महादीपं, उज्वाल्य, अधिदेवमाराध्य पश्चिमे दीपमंटपे संस्थाप्य, 'शुभ्राज्योति' (वे०म०प्र०८) रिति दण्डाग्रे दीपं संन्यसेत् । देवं चित्रकक्ष्याद्यैरलंकृत्य, अर्चावसाने अपूपानि पृथुकानिबहूनि निवेद्य, अन्यानि भक्ष्याणि निवेद्य, गुळेनमिश्रितानि देवेशाय निवेद्य, महाहविः प्रभूतं वा निवेदयेत् । एवं यः कुरुते स कीर्त्ति श्री विजयान् इष्टान् कामाँश्चाऽवाप्य, विष्णोर्लो केमहीयते इत्याहमरीचः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे मासविशेष-पूजाविधिर्नाम षट्चत्वारिंशः पटलः ॥४६॥

# अथ सप्तचत्वारिंशः पटलः

## शुद्धस्नपनविधिः

अथ शुद्धस्नपनविधिं वक्ष्ये - नित्यार्चनायां स्नपने चोत्सवे अन्यर्क्षेषु, पुण्यर्क्षेषु च, शुद्धस्नपनं समाचरेत् । स्नपनद्रव्याणि संभरति, देवागारं प्रविश्य, देवस्यपादयोः पुष्पां जलिं दत्वा, 'परंरंह' (वै०म०प्र०८) इति हस्ताभ्यांदेवमादाय अलंकृते मंटपेपीठे 'प्रतद्विष्णु' रिति संस्थाप्य, पात्रे परिच्छदादिपरिवृतं राजवदुपचारं कारयित्वा, 'त्रीणिपदा' इति, 'इंद्रोऽभिमन्ते' ति देवस्य पादौ प्रक्षाल्य, 'विष्णुर्मारक्ष' त्विति धौतेन विमृज्य, 'विष्णवे नम' इति पुष्पांजलिं दत्वा, 'शन्नोदेवी' रित्याचमनं ददाति । अष्टाक्षरेण मुखंपाणी च धौतेन विमृज्य, 'घृतात्परी'ति मुखवासं, प्रदाय, विविधैःस्तोत्रैर्नृत्तगेयवाद्यैश्च विनोदं कारयेत् । मुख्यंगौणं च ज्ञात्वा, देवेशं प्रणम्य, वस्त्राभरण गंधमाल्याभरणादीनि विमोच्य, 'वसोः पवित्र' मित्यनेन वाससाऽऽच्छाद्य, मुखवासंनिवेद्य तत्काले वैष्णवैर्मंत्रैर्जयशद्वैश्च स्तुत्वा, देवेशं प्रणम्य, कार्यं विज्ञापयेत् ।

पूजकः स्वयमेव श्रावयेत् । तद्वाक्यं विष्णोर्वाक्यमिति स्मृत्वा, सर्वसमाचरेत् । पुनःपुनः मुखवासं निवेद्य, विष्णुगायत्र्याधौतेन वस्त्रेण देवस्यस्कंधं समाछाद्य, अभावे नव वस्त्रेण, 'अतो देवा' इत्यलकान्विकीर्य 'इदं विष्णु' रिति अलकशोधनं कृत्वा, तैले सोममभ्यर्च्य, 'त्रीणिपदे' ति तैलं शिरसि संस्राव्य, 'सोमं राजान' मिति मर्दयित्वा, 'विष्णोः कर्माणी' त्यावर्त्याऽऽवर्त्य करोति । अलकान् संबध्य, 'तद्विष्णोःपर'मिति परिमिलैः पुष्पमाल्यैरलंकृत्य, करौप्रक्षाल्य, स्कंधाद्वस्त्रंविमोच्य, 'तद्विप्रास' इत्यंगे अभ्यंजनं कृत्वा, तच्छेषंभक्तेभ्यःप्रदद्यात् । 'विष्णोर्नुक' मिति शालिपिष्टेन देवेशं परिमृज्य, 'तदस्यप्रिय' मिति वस्त्रेणार्द्रेणाविमृज्य, शकुनसूक्तेन देवमादाय, 'प्रतद्विष्णुस्तपत' इति स्नानपीठे, देवंसंस्थाप्य, पूर्ववत्पादौप्रक्षाल्य, सौवर्णैस्साधनैश्चूतपत्र सिराभिर्वा 'परोमात्रया विचक्रम' इति दन्तधावनं तालुशोधनं च, भावयति । पूर्ववदाचमनं दद्यात् ।

एकादश्यां, पर्वणि, नवम्यां, अष्टम्यां च, वजयेत् । तासु कुर्याच्चेत्, राजशत्रु परिपालनं ग्रामयजमानयोर्भयप्रदं भवति । दूर्वाक्षतपुष्पाणि

देवस्य मूर्धादिपादपर्यन्तं, 'त्रिदव' इति संधौसंधौसंयोज्य, पादयोः प्रक्षिपेत्। वस्त्रादीनि विमोच्य, 'परिलिखित' मिति आम्लेन संशोध्य, सूक्ष्मसिकताभिः 'विष्णवे नम' इति यथा बिंबशुद्धिस्तथाशोधयित्वा, 'वारीश्वतस्त्र' इति शुद्धोदकैरभिषिच्य, पूर्ववद्धौतेन वस्त्रेणाऽऽच्छाद्य, पाद्याचमनं दत्वा, कर्पूरादि परिमलैर्युक्तेन हरिद्रापिण्डेन 'सिनीवाली' ति देवस्य सर्वांगमालिप्य, पूर्ववच्छुद्धोदकैरभिषेचयेत्।

पुनस्संशोध्य, आचमनंदत्वा, वस्त्रमाल्याद्यैर्विभूष्य, 'नमो वरुणः शुद्ध' इति क्षीरेण उष्णोदकैर्वा अभिषिच्य, 'भूरानिलय' इति गंधतोयैः पुनस्संस्नाप्य पूर्ववद्वस्त्रमाल्यादिभिरलंकृत्य, 'अग्निंदूत' मिति उपवीतं, 'सोमस्यतनूरसी' त्युत्तरीयं च, दद्यात्। 'इदं ब्रह्मपुनीमह' इति देवस्य हस्तयोः पवित्रं, संयोज्य, 'तद्विप्रास' इति चन्दनेन सर्वांगमालिप्य, पाद्यार्घ्यामभ्यर्च्य, देवेशंप्रणम्य, सहस्त्रधारामभ्यर्च्य, पूर्ववत्सहस्त्रधारयाभिषेचयेत्। अलाभे षोडशादि चतुरन्तं यथालाभं कुंभोदकैः 'वसोः पवित्र'मिति, पुरुषसूक्तेन वा, अभिषेचयेत्। तत्तत्काले चतुर्दिक्षु वेदानध्यापयेत्। स्तोत्रैःजयशब्दैः नृत्तगेयवाद्यश्च घोषयत्। पुनःशुद्धोदकैरभिषिच्य, वस्त्रमाल्यादीनि विमोच्य, अंगंप्रति 'मित्रस्सुपर्ण'इति प्लोतेन विमृज्य, धातैवस्त्राणोऽऽछाद्य, पाद्याचमनं दत्वा, पुष्पांजलिं दत्वा, शकुनसूक्तेन देवमुद्धृत्य, पूर्ववन्मंटपे पीठे सन्यस्य, वस्त्राभरणगन्धमाल्याद्यैरलंकृत्य, पाद्याद्यर्घ्यान्तमभ्यर्च्य, दूर्वाक्षतगन्धपुष्पाण्येकपात्रे संगृह्य देवस्यपुरतः संस्थाप्य, सोममभ्यर्च्य, हस्ताभ्यां गृहीत्वा, विष्णुगायत्र्या मकुटोपरि त्रिःप्रदक्षिणमावर्त्य, पुरतःनिक्षिपेत्। पश्चाद्रक्षादीपविधानेन रक्षादीपं कारयेत्। तत्काले 'देवस्यत्वे' त्यादर्शं दर्शयित्वा, अष्टाक्षरेण देवस्यछत्रचामर परिच्छदादीनि योजयित्वा विनोदमपि कारयेत्।

शकुनसूक्तेन देवमुद्धृत्य, हविर्निवेदनस्थाने भूरसीत्या दिनाप्रतिष्ठाप्य आसनाद्यैरुपचारैरभ्यर्च्य, पानीयाचमनमुखवासं दत्वा, देवेश मुद्धृत्य, पूर्ववन्मंटपे पीठे सन्यस्य, वस्त्रमाल्यादीनि विमोच्य, अन्यैर्वस्त्रमाल्याद्यैरलं कृत्य, अपूपादीनि भक्ष्याणि भोज्यानि विविधानि पक्वान्यपक्वानि च विष्णुगायत्र्या अष्टाक्षरेण वा निवेदयेत्। पूर्ववत्पाद्याच मनमुखवासौ दत्वा, यानमारोप्य, आलयं प्रदक्षिणीकृत्य, देवागारं प्रविश्य, पूर्वस्थाने न्यसेत्। अर्चनंचेज्जीवस्थाने प्रतिष्ठाप्यार्चयेत्॥

### आग्रयणविधिः

अथ देवेशस्याग्रयणविधिं वक्ष्ये - शुभे मुहुर्त्ते कर्त्तुरनुकूलेनक्षत्रे शाल्यादीन्व्रीहीन् प्रियंग्वादि धान्यानि वा आहृत्य आलयमलंकृत्य, शुचौदेशे सर्वोपदंशान् पयोदधि घृतगुलान् दीपार्थं तैलं च, कदलीचूतपनसनालिकेर-पूगफलानि मरीचादीकर्पूर हरिद्राकदलीशाकान् वितत तांबूलकदलीपत्राणि, नवानि वस्त्राणि, विविधानि पुष्पाणि च, संगृह्य; आचार्योयजमानश्च वैष्ण-वैस्सह; सर्ववाद्यसमायुक्तं सर्वालंकारसंयुक्तं, अमितं चक्रं वा पुरस्कृत्य, ग्रामंप्रदक्षिणीकृत्य, आलयंप्रविश्य, अभिमुखे शाल्यादीन् सन्यस्याऽभ्यर्च्य, देवमानम्य, धान्यसंग्रहणंकृत्वा, हविष्पाकोक्तविधिना धान्यानि संशोध्य, अवघातं कृत्वा, संशोध्य, तंडुलान्द्विस्त्रिश्चतुर्वाद्भिस्संक्षाल्य, नालिकेर-गुलमरीचजीरकैर्मिश्रीकृत्य, निधाय, पश्चाद्धवींष्यपि बहूनि सर्वेपदंशांश्च पाचयित्वा, देवेशं संस्नाप्य, नववस्त्रपुष्पाद्यैरलंकृत्य, आस्थाने अर्चास्था-नेवा स्थाप्य, अष्टोपचारै रभ्यर्च्य, पात्राणिसंशोध्य, अधिदेवमाराध्य, पुनःप्रक्षाल्य, अभिपाच्यतंडुलान् प्रक्षिप्य, 'देवस्यत्वे' ति घृतेनाभिघार्य, 'अतो देवा'दिना अभिमृश्य 'आप्यायता' मिति निवेदयेत् ।

आचमनमुखवासं च दत्वा, यथाविधि प्रभूतं हविर्निवेदनं च कृत्वा, नित्याग्निकुंडेचुल्यां वा वैष्णवं, श्रीभूमि देवत्यं, तदालयगतपरिषद्देवानां मूर्त्तिमत्रांश्च, हुत्वा, परिषद्देवेभ्यो निवेद्यशक्तश्चेद्बलिदानं कारयित्वा, देवस्य निवेदित तंडुलान्भक्ताः ब्राह्मणादयः प्राश्नीयुः, एवं आग्रयणं विष्णोर्यः-कारेयत् । सोपि धनधान्यसमृद्धिमाप्नोति इति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे शुद्धस्नपना ऽऽग्रयणविधिर्नाम सप्तचत्वारिंशः पटलः ॥४७॥

## अथ अष्टचत्वारिंशः पटलः

अथ देवेशस्यस्नपनविधिं वक्ष्ये - प्रतिष्ठान्ते चोत्सवांते अयने-विषुव्यतीपाते अन्यसंक्रमणेष्वद्धांते युगांते राहुसंप्लवे गुरुशुक्रोदये मासर्क्षेषु विष्णुपंचदिनेषु राज्ञोग्रामस्ययजमानस्य च जन्मर्क्षे अनावृष्ट्यां महाव्याधि-कोपे अन्यस्मिन् काम्ये च देवेशस्य स्नपनं कारयेत् ।

यद्दिने कर्त्तुमुद्योगः तद्दिनात्पूर्वं नवमे सप्तमे पंचमे तृतीये वा अह्नि अंकुरार्पणं कुर्यात् । अंकुरार्पणादूर्ध्वं द्रव्याण्याहरेत् ।

नदीसस्य क्षेत्रतटाक दर्भमूलगजदंतोद्धृतगोविषाणोद्धत कुलीरवास वल्मीकेषुअष्टौमृदोयथालाभं वा गृण्हीयात् ।

हिमवन्मेरुविंध्यविडूर वेदपर्वतमहेंद्रमहाहरिश्चंद्रशतश्रृंगान् एतान्-कुलपर्वतान् अष्टौ यथाक्रमेण धूमश्वेतपीतरक्तश्यामनीलपिंगलकृष्णवर्णान् द्वादशांऽगुलोत्सेधान् पञ्चांगुलविशालान् अग्रेत्र्यंगुलविस्तृतान् चतुरश्रान् याज्ञित्कैर्वृक्षैः मृदा वा कारयेत् ।

शालिव्रीहियवमुद्गमाषप्रियंगु तिलतिल्वसर्षपाण्यष्टैधान्यानि सर्वालाभे यथालाभं वा आहृत्य, अंकुरार्पणोक्तधान्यानां अंकुरांश्च, तदभावे दूर्वाग्राणिवा आहरेत् ।

श्री रूपो दकुंभभेरीदर्पणमत्स्ययुग्मांऽकुश शंखा वर्त्तानि अष्टमंगलानि यथाक्रमेण हेमार्क बिंबफलश्वेतपीतरक्तशंखातिरक्तवर्णान् अष्टांगुलोत्सेधान् चतुरंगुलोच्छ्यपीठयुतान् कारयेत् ।

एवं पंचप्राग्द्रव्याणि चास्तीर्य, पञ्चगव्यघृतमधुदधिक्षीरगंधोदक अक्षतोदकफलोदककुशोदकरत्नोदकजप्योदकसर्षपोदकसर्वोषध्युदकानि द्वादश प्रधानानि षोडशांशं कृत्वा, 'शुक्रमसी' त्येकांशं घृतं, 'दधिक्रावण्ण' इति द्व्यंशंदधि, 'आप्यायस्वे' ति त्रिगुणांशं क्षीरं, 'शन्नो देवी' रिति वेदांशं गोमयं, सावित्र्यारसांशंगोमूत्रं, एवं योजयेत् एवं पञ्चगव्यम् ।

घृतमनतीतपंचदशाहं, पुष्पद्रावणिकं, फलद्रावणिकं वा, मधु, तदलाभेनालिकेरजलं, मृण्मयपात्रे नग्राह्यं गव्यं, नशुक्तंदधि, सद्यो-दुग्धंक्षीरंश्रेष्टं, पञ्चगव्यादीनि प्रत्येकमाढकंतदर्धं यथालाभं वा संगृह्य, शेषं जलेन पूरयेत् ।

जलपिष्ट चंदनादि गंधद्रव्ययुतं गंधोदकं माषयवसर्षपव्रीहि तंडुलैर्युक्तं जलं अक्षतोदकं, कदलीपूगपनसनालिकेरमातुलिंगाद्यैः फलैर्यथालाभैर्युक्तं फलोदकं, चंदनाद्यमष्टांशादहीनं प्रक्षिपेत् । कुशैस्सहतंकुशोदकं, नवरत्नैः पंचरत्नैर्वाऽलाभे सुवर्णेन वा संयुक्तं रत्नोदकं, अतोदेवादिभिः षड्भिर्मंत्रैः प्रणवशतेनाऽभिमंत्रितं जप्योदकं ओषधयः फलपाकांताः सर्वैः त्रिभिरधिकैर्वा संयुक्तं सैर्वौषध्युदकं ।

एद्द्वादशप्राधानद्रव्यसमीपे शुद्धोदक पूर्णान् कलशान् उपस्नानान् बिल्वपत्रकरवीरनंद्यावर्तपद्मकुमुदानि पुण्यपुष्पाणि। जातीफल कर्पूरोशीरम-सूरदमनकमुद्गचणकानांचूर्णम्। अश्वत्थवटमधूकखदिरवञ्जुलाऽसनानांत्वक्-चूर्णकषायम्। नदीतटाककूपपल्वलेषु तीर्थोदकानि ।

सिंहिनकुलव्याघ्रनन्दादित्यसाहयपाठ सहदेवीनां दूर्वावनौषधि हरिद्राणां चूर्णम् सुवर्णं च षड्भाग तण्डुलयुतहरेणु स्थैणेयक पत्राऽगरुश्यामाककचोर चैरुवालमांसिचन्दनैलालवंगकर्पूरोशीरस्थिरानार-दसावन कुस्तुरूणां चूर्णं सर्वगंधानां चूर्णं। पत्काशाऽपामार्ग भूर्जपत्र नंद्यावर्त करवीर पद्मकुशपत्राणांमूलगंधान्। जातीहिंगुलिक मनः शिलांऽजन गोरोचनधातूंश्च, पुण्यपुष्पाणि नानाद्रव्याणि प्रत्येकं समस्तं अर्धं यथालाभं वा, गृण्हीयात्॥

नवं सूक्ष्ममहतंप्लोतंवस्त्र, मुत्तरीयं च सौवर्णाभरणानि मणि मुक्तामयं च यज्ञोपवीतं सौवर्णं तांतवंवाऽऽहृत्य ।

स्नानार्थान् संभारांश्च संभृत्य, आढकपूर्णकलशान् तद्विगुणपूर्ण-कलशान् तद्विगुणपूर्णकुंभान् तद्विगुणपूर्णघटान् तत्षड्गुण पूर्णामदधीर्नीं, प्रस्थपूर्णांश्चरावान् कलशानां पिधानानि यथोचितानि अन्यानि भांडानि खंडस्पुटितकाळरहितानिनवानि च आहरेत्।

अथ देवालयाऽभिमुखे पश्चिमे चोत्तरे च ऐशान्यां वा, यथोक्तं स्नपनागारं मंटप, कूटं वा, प्रपां वा, कृत्वा; सर्वत्रवितानध्वजदर्भ-मालातरंगस्तंबवेष्टनाद्यैः, द्वारेषु तोरणपूर्णकुंभाद्यैरलंकृत्य; परितःप्रावरणं कृत्वा; अभ्यंतरं गोमयेनो पलिप्य; पिष्टतो ययुतेन सूत्रेण पञ्चविंशतिभागं कृत्वा; तन्मध्ये चैकपदे स्नानवेदिं लोहोपलेष्टकादारु मृत्तिकानामन्यतमेन तद्वेरपीठाद्बहिः प्रतिदिक्भाग मष्टांगुलं, तालं वा, यथोचिताऽऽयामविस्तारां, समचतुरश्रां, द्विमेखलां, लोहजां षडंगुलोत्सेधां; लोहजाद्विगुणांशिलां शिलाद्विगुणामैष्टकां; ऐष्टिकाद्विगुणां दारवीं, दारवीद्विगुणांमृण्मयीं; लोहजोत्सेधां, पादुकादिकरणैर्युक्तां, वियुक्तां गोमुखे रसांऽगुलाऽऽयतवारि-मार्गयुतां, मध्येगोलकाऽवगाढयुतां; तद्विगुणविस्तारां च; कारयति ।

तां वेदिं वस्त्रेणाच्छाद्य; कदल्यादि पत्रैराच्छाद्य; पोरतः कुशकूर्चा-न्विन्यस्य; तां परितोऽष्टौपदान् शय्यादेशं हित्वा; तद्बहिः षोडशभागेषु प्रागादि चतुर्दिक्षु चत्वारि पदानि द्वारार्थंत्यजेत्। शेषेषु द्वादशभागेषु

द्वादशप्रधान द्रव्यन्यासार्थं व्रीहिभि स्तंडुलैर्वा गोलकोन्नतां, यथालाभोन्नतां वा वेदिं कृत्वा; बहिरिंद्रादि देवानां तत्तत्स्थाने द्वादशांगुलविस्तृतानि पीठानि कृत्वा; पश्चिमद्वारवामे पंङ्तीशस्य, उत्तरद्वारदक्षिणे विष्वक्सेनस्य च, पीठं कृत्वा, वेद्योपरिष्टादीशानांतं जयादीनर्चयेत् ।

धान्यवेदिं गायत्र्या प्रोक्ष्य; 'सुमित्रान' (तै०आ०४) इति पङ्-तिस्थलमुल्लिख्य; 'हिरण्यपाण' मिति प्रागग्रानुत्तराग्रान्वा दर्भानास्तीर्य; कलशानाहृत्य; त्रिगुणैकेनवासूत्रेण यवान्तर, मंगुल्यन्तरं वा, परिवेष्ट्याऽ; द्भिःप्रक्षाल्य; 'धारास्वि'त्युदकं गृहीत्वा; 'इदमापःशिवा' इत्युत्पवनं कुर्यात् । रात्रौ चेदग्निसन्निधौ जलंगृण्हीयात् ।

एकैकप्रधाना एकैकोपस्नानाश्चेति चतुर्विंशति कलशैः स्नपन मधमाधमम् ।

एतद्वारिप्रचूर्णसहितमित्येके । एकैकप्रधाना, त्रिस्त्रिरुपस्नानाश्चे-त्यष्टचत्वारिंशत्कलशैः प्राक्करणैरनुकरणैश्चमहितं अधममध्यमम् ।

द्विद्विप्रधानाः सप्तसप्तोपस्नानाश्चे, ति प्राक्करणै रनुकरणैस्सा-मान्यद्रवैश्च संयुक्त मष्टोत्तरशतकलशैः स्नपनमधमोत्तमम् । एकैक-प्रधानाष्टोपस्नानाश्चेति केचित् ।

शताष्टद्विगुणंमध्यमाधमम्, त्रिगुणंमध्यममध्यमं; चतुर्गुणंमध्यमो-त्तमम् ।

पञ्चगुणमुत्तमाधमं; षड्गुणमुत्तममध्यमं, सप्तगुणमुत्तमोत्तमम् । चत्वारिंशद्वयाधिकसहस्त्रकलशैस्स्नपनमुत्तमोत्तममित्येके ।

गन्धोदकेरुपस्नानकलशानापूर्य; सप्तभिः पञ्चभि स्त्रिभिर्वादर्भैः कूर्चान् कृत्वा; कलशेषु प्रक्षिप्य; पिधानै रपिधाय; सोपस्नानान् द्वादश प्रधानान् द्वादशवस्त्रैरावेष्टयेत्, उत्तमम् ।

अष्टवस्त्रैरावेष्टयेन्मध्यमम् । सोपस्नानान् द्वादशप्रधानान् अष्टवस्त्रैरा-वेष्टयेन्मध्यमं, सोपस्नान् द्वादशप्रधानांश्चतुर्वस्त्रैरावेष्टयेदधमम् । चतुर्व-स्त्रैरावेष्टयेदधमम् । द्रव्याधिदेवान् तत्तत्पार्श्वे चैकादशविग्रहै, रष्टविग्रहैर्वा ऽर्चयेत् ।

'प्रणवादिनमोन्तै' स्तन्तन्नाममन्त्रैः पूर्वंतोयं, ततः पुष्पं; पश्चात्तोयं च समर्पयेत् । षट् त्रयोविग्रहाः सर्वत्र सर्वेषामर्चनार्हा इत्येके ।

## अशक्तौ नवविधस्नपनविधिः

अथ विभवहीनादशक्तस्य स्नपनं नवधाभवति। प्रमुखे चतुरश्रामेव-पङ्क्तिं कृत्वा; मध्ये पञ्चगव्यं, उत्तरे तस्योपस्नानं, दक्षिणे गंधोदकं, पूर्वेतस्योपस्नानं, पश्चिमे हरिद्राचूर्णम् एतैः पञ्चभिः कलशैः स्नपनमधमाधमम् ॥

मध्ये पञ्चगव्यं, दक्षिणे गंधोदकं, उत्तरे कुशोदकं, तत्तत्पूर्वेतत्तदुप-स्नानं, पश्चिमे हरिद्राचूर्णम्, इत्येतैस्सप्तभिः कलशैः स्नपनमधममध्यमम् ॥

पूर्ववत्पञ्चगव्यगन्धोदककुशोदकान्, तदुपस्नानांश्च, विन्यस्य; पश्चिमे अक्षतोदकं, वायव्ये तस्योपस्नानं, नैऋते हरिद्राचूर्णम् एतैर्नवभिः कलशैः स्नपनमधमोत्तमम् ॥

पूर्ववन्नवकलशान्विन्यस्य पूर्वेजप्योदकं न्यसेत्। एतैर्दशकलशैः मध्यमाधमम् ॥

पूर्ववन्नवकलशान्विन्यस्य; पूर्वे मधु, तदुत्तरे तस्योपस्नानं, दद्दक्षिणे जप्योदकं, एतैर्द्वाशभिः कलशैस्स्नपनं मध्यममध्यमम् ॥

प्रमुखे दक्षिणोत्तरं दंडवत्पंक्तिं कृत्वा; दक्षिणाद्युत्तरान्तं पञ्चगव्य-घृतमधुदधिगन्धोदकाऽक्षतोदककुशोदकान्विन्यस्य; तत्पूर्वे तदुपस्नानं-विन्यस्य; एतैः चतुर्दशभिः कलशैः स्नपनं मध्यमोत्तमम्।

एतैस्सह क्षीर, तदुपस्नानं च, विन्यस्य; एतैष्षोडशभिः कलशैः स्नपनमुत्तमाधमम् ॥

एतैस्सह दधि, तस्योपस्नानं च विन्यस्य, एतैरष्टादशभिः कलशैः स्नपनमुत्तममध्यमम्।

एतैस्सह सर्वौषध्युदकं च, तदुपस्नानं च, विन्यस्य; एतैः विंशति कलशैः स्नपनमुत्तमोत्तममिति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे स्नपनद्रव्यस्य उत्तमोत्तमादिनवविधिर्नाम अष्टचत्वरिंशः पटलः ॥४८॥

# अथ एकोनपंचाशत्तमः पटलः

अथ आचार्यो यजमानयुतो द्रव्यदेवाराधनार्थमेकं, कलशोद्धरणार्थंद्वौ, चत्वारो वा अभिषेकार्थमेकं, होमार्थमेकं, होतारमेकं, वरयित्वा; पूजयेत्। आचार्यः पूर्वरात्रौ देवेशं विशेषतोभ्यर्च्य; पूर्ववत् शयनस्थाने शयनंसंकल्प्य; तस्मिन् स्नापनंबिंबं, तदलाभे चोत्सवं, तदलाभे कौतुकं, समारोप्य; पूर्ववत्प्रतिसरंबध्वा; शाययित्वा; प्रभाते स्नात्वा आलयमाविशेत्।

यजमानः आचार्यादीन्वस्त्रोत्तरीयाद्यैरलंकृत्याऽभिपूजयेत्। आचार्योऽभ्यंतरं प्रविश्य; देवेशं प्रणम्य; उत्थाप्य; पाद्याद्यर्घ्यान्तमभ्यर्च्य; मुखवासं निवेदयेत्। अथवा तत्काले शयनं संकल्प्य; देवमारोप्य प्रतिसरंबध्वा, यामंमुहूर्त्तं वा; शाययेत्। आसन्ने काले शयनंविना कौतुकंबंधयेदिति केचित्। शकुनसूक्ततोयधारापुरस्सरं वाद्यघोषसमायुक्तं, देवमानीय्य, स्नानवेद्यां प्राङ्मुखमालयद्वारदिङ्मुखं वा 'परं रंह' इति स्थापयित्वा; पाद्याचमनं प्रदाय; यजमानस्य यदुपचारः इष्टस्तंदत्वा; त्रयोदशोपचारै रभ्यर्च्य; प्राच्यामाहवनीयाग्निकुण्डं कृत्वा; आघारं हुत्वा; वैष्णवं जुहुयात्।

हौत्रंप्रशंस्यदेवेशंद्रव्यदेवांश्चतत्तन्मूर्त्तिमंत्रैरावाह्य; आवाहनक्रमेण-निर्वाप्य स्वाहाकारं कृत्वा; द्रव्यंप्रतिद्रव्याधिदेवत्यंवैष्णवं च हुत्वा; पश्चात् स्नापयेत्।

अभिमुखे दक्षिणे वा आसीनस्तद्बिंबार्हंतिष्ठन्वा देवमानम्य; प्राणायामं कृत्वा; ईशानेंद्रयोर्मध्ये नादेयाद्यमृद एकस्मिन्पात्रे गृहीत्वा; 'उदुत्य' मिति सन्यस्य; तासुमेदिनीमभ्यर्च्य; 'एकाक्षर' मिति मृदास्नापयेत्।

'इन्द्रादीशानपर्यन्तं द्वार वामपार्श्वेषु अष्टकोणेषु च, 'इदं विष्णु' रिति हिमवदादीन् पर्वतान् सन्यस्य; तेष्वग्निमभ्यर्च्य; 'विश्वेनिमग्न' इति पर्वतेन प्रदक्षिणं, प्रणामं च, कारयेत्।

यमपावकयोर्मध्ये 'शुक्रन्त' इति शाल्यादीनि धान्यानि एकस्मिन् पात्रे संगृह्य; संन्यसेत्। तेषु वायुमभ्यर्च्य; 'प्राणप्रसूति' रिति स्नापयेत्। यमानिलयोर्मध्ये अभ्यन्तरे 'सोमओषधीना' (वै०म०प्र०२) मिति अंकुरान् सन्यस्य; तेषु तार्क्ष्यमभ्यर्च्य; 'वितत्यबाण' (वै०म०प्र०९) मिति देवमाराधयेत्।

द्वारदक्षिणपार्श्वेषु, कोणेषु च, 'शसानी (वै०म०प्र०६) ति

श्रीवत्सादीन् मंगलान् सन्यस्य; तेष्विन्द्रमभ्यर्च्य; 'त्वं वज्रभृ' (वै०म०प्र०१) दिति मंगलैः प्रदक्षिणं प्रणामं चकारयेत्। ऐशान्यां सोपस्नानं पञ्चगव्यं 'त्र्यंबक' (वै०म०प्र०३) मिति तस्मिन्शर्वम्, उपस्नाने विश्वान्देवान् समभ्यर्च्य, 'वसोःपीवत्र' मिति पञ्चगव्येन स्नापयेत्। 'वारीश्चतस्र' इति सर्वोपस्नानैरभिषेचयेत्।

पूर्ववत् द्वारोत्तरपदे घृतं 'घृतप्रतीक' (वै०म०प्र०१) इति सन्यस्य; तस्मिन् सामवेदमभ्यर्च्य; उपस्नाने अप्सरसश्चाभ्यर्च्य; 'अग्नआयाही' ति घृतेन स्नापयेत्। पूर्वद्वारदक्षिणे 'यन्मधुन' (वै०म०प्र०३-) इति मधु सन्यस्य; तस्मिन् ऋग्वेदम्, उपस्नाने प्राणानावाह्य, अभ्यर्च्य, 'अग्निमील' इति मधुना स्नापयेत्।

आग्नेय्यां 'दधिक्रावण्णे'ति दधिं संन्यस्य तस्मिन् यजुर्वेदम्, उपस्नाने रुद्रमभ्यर्च्य, 'इषेत्वोर्जेत्वे' ति दध्ना स्नापयेत्।

दक्षिणद्वारपूर्वे 'शन्नो देवी' रिति क्षीरं संन्यस्च, तस्मिन्नथर्ववेदम्, उपस्नाने अश्विनावभ्यर्च्य; 'शन्नो देवी' रिति क्षीरेण स्नापयेत्।

दक्षिणद्वारपश्चिमे 'सोमं राजान' मिति गन्धोदकं विन्यस्य; तस्मिन् ऋतूनभ्यर्च्य; उपस्नाने मरुतोऽभ्यर्च्य, 'अभित्वाशूर' इति गन्धोदकेन स्नापयेत्।

नैर्ऋत्याम्, 'इमा ओषधय' इति अक्षतोदकं सन्यस्य, तस्मिन्-काश्यपम्, उपस्नाने बृहस्पतिं चाऽभ्यर्च्य; 'इमा ओषधय' इति अक्षतो-दकेन स्नापयेत्।

पश्चिमद्वारदक्षिणे 'सोमंराजान' मिति फलोदकं सन्यस्य, तस्मिन् सोमम्, उपस्नाने नागराजमभ्यर्च्य; (जप)देवस्चेत्वे' ति फलोदकेन स्नापयेत्।

पश्चिमद्वरोत्तरे 'यतस्त्वमासा' दिति कुशोदकं सन्यस्य, तस्मि-न्मुनीन्, उपस्नाने तक्षकमभ्यर्च्य; 'चत्वारिवा' गिति कुशोदकेन स्नापयेत्।

वायव्याम् 'अतोदेवा' इति रत्नोदकं सन्यस्य; तस्मिन्विष्णुम् उपस्नाने गंधर्वानभ्यर्च्य; 'नारायणायविद्महे' इति रत्नोदकेन स्नापयेत्।

उत्तरद्वारपश्चिमे 'ब्रह्मा देवाना' मिति जप्योदकं सन्यस्य, तस्मिन् पवित्रम्, उपस्नाने विद्याधरान्अभ्यर्च्य, 'पूतस्त' इति जप्योदकेन स्नापयेत्।

उत्तरद्वारपूर्वे 'चित्रंदेवाना' मिति सर्वौषध्युदकं सन्यस्य, तस्मिन्नादित्यम्, उपस्नाने अप्सरसश्च आवाह्य अभ्यर्च्य, चत्वारिशृंगेति सर्वौषध्युदकेन स्नापयेत् ।

पंचगव्यादिद्रव्याणामन्तरे चोष्णोदकेन स्नापयेत् ।

तत्तद्द्रव्यान्तेपूर्ववस्त्रंविसृज्य अन्यद्वस्त्रंपरिधाप्य अष्टोपचारैरभ्यर्च्यः करकोदकेन तत्तद्द्रव्यंप्रणवेनप्रोक्ष्य; आदाय; देवं सकृत्प्रदक्षिणं कारयित्वा; अभिषेकं कुर्यात् ।

यमनीलयोरन्तरे 'इमास्सुमनस' इति पुण्यपुष्पाण्येकस्मिन्पात्रेसंगृह्य; विन्यस्य; तेषु धातारमभ्यर्च्य; धाताविधातेति देवमाराधयेत् ।

नीलवरुणयोरन्तरे 'वन्ध्योन एष' इति जातीफलचूर्णंविन्यस्य; तस्मिन्चक्रमभ्यर्च्य; 'ऋचो यजूंषी' (वैं०म०प्र०१) ति चूर्णेन स्नापयेत् ।

वरुणोदानयोरन्तरे 'एतेशत' मिति अश्वत्थादि कषायचूर्णं 'वारीश्वतस्र' इति नादेयादि तीर्थतोयं च विन्यस्य, कषायेषुव रुणंतीर्थेषु सुब्रह्मण्यं चाभ्यर्च्य; 'स एषदेव' इति कषायेणोद्वर्त्य 'ससर्ववेत्ते' ति तीर्थोदकैः स्नापयेत् ।

सोमोदानयोर्मध्ये 'रुद्रमन्य'मिति सिंहादि वनौषधीः विन्यस्य; तेषु रुद्रमभ्यर्च्य, 'सामैश्शतांग' मिति वनौषधिभिर्मार्जयेत् ।

नीलपंक्तीशयोर्मध्ये 'सिनीवाली' ति हरिद्राचूर्णं सन्यस्य; तस्मिन् देवसनाभिमभ्यर्च्य, अतो देवादिना हरिद्राचूर्णेन स्नापयेत् । 'इमे गंधा' इति ईशसोमयोर्मध्ये हरेणु पूर्वं सर्वगंधचूर्णं सन्यस्य; तस्मिन्निंद्रमभ्यर्च्य; 'त्वंस्त्री' ति सर्वगन्धेनोद्वर्तयेत् ।

आपोहिष्ठाद्यैरुष्णोदकैस्संस्नाप्य; आचमनंदत्वा; 'नारायणायविद्महे' इति ऐशान्यांप्लोतवस्त्रोत्तरीयाभरण यज्ञोपवीतं शान्तस्यपश्चिमे पालाशादि मूलगन्धान् तस्यपूर्वे जातिहिंगुलिकादि धातूंश्च सन्यस्य; प्लोते वस्त्रेत्वष्टारं, मूलगन्धे ब्रह्माणं, धातुषु दुर्गां, भूषणे षण्मुखं च, आराध्य; श्वभ्रस्य-दक्षिणेपार्श्वे पीठंसन्यस्य; तत्रदेवं संस्थाप्य, 'मित्रस्सुपर्ण' इति प्लोतेन विमृज्य; 'तेजोवत्से' ति वस्त्रं, 'सोमस्यतनूरसी' ति उत्तरीयं, 'भूतोभूतेष्वि' त्याभरणं दत्वा; पुष्पादिभिरलंकृत्य; 'अग्निंदूत' मिति उपवीतं दत्वा; 'त्वं भूर्भुव' इति मूलगन्धान् स्पर्शयित्वा; 'बुद्धिमता' मिति धातुभिरलंकृत्य;

पाद्याद्यैरर्चयेत् । प्रणवपूर्वंगायत्र्यैव मृदादि द्रव्याणां न्यासंकृत्वा, तत्तदधिदैवं समाराध्य; पवमानाद्यैर्देवं संस्नापयेदित्येके ॥

ध्रुवार्चाबेरस्नपनंचेन्मुखमंटपे देवालयाभिमुखे स्नपनालयं कृत्वा; अलंकृत्य; पूर्ववत्पञ्चविंशतिभागं कृत्वा; तन्मध्ये द्रोणद्वयपूर्णकुंभं सूत्रेण-वेष्टयित्वा; वस्त्रेणाऽऽवेष्ट्य; अद्भिरापूर्य; सुवर्णंनिक्षिप्य; तस्मिन्सर्वतीर्थ-जलमभ्यर्च्य; निधाय; तं परितः पूर्ववन्मृदादि द्रव्याणां न्यासं कृत्वा; अधिदेवमाराध्य; देवेशंपरितः पीठोर्ध्वे पूर्ववज्जयादीनभ्यर्च्य; कलशानादाय; अभ्यंतरं प्रविश्य; तथैवस्नापयेत् ।

तत्तत्कुंभोदकेन अतोदेवादिभिस्संस्नाप्य अलंकुर्यात् । एष विशेषोऽन्यत्सर्वं समानम् । अथवा बिंबमादाय; कनिक्रदादिना आलयं-प्रदक्षिणीकृत्य; आस्थाने संस्थाप्य; शुद्धस्नपनविधिना संस्नाप्यप्रभूतंनिवेद-येत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकलपे स्नपनविधिर्नाम एकोनपंचाशत्तमः पटलः ॥४९॥

# अथ पंचाशत्तमः पटलः

अथोत्सवचक्रम् सौवर्णं राजतं ताम्रं आयसं दारवं वा कृत्वा; मानांऽगुलेन, मात्रांगुलेन वा; ध्रुवबेरस्य, कौतुकस्यवा, देहलब्धांगुलेनवा; षोडशांऽगुलं, द्वादशांऽगुल, मष्टांगुलं वा; समवृत्तं; तस्यापरपट्टविस्तारं त्र्यंगुलं, द्व्यंगुलम्, एकांगुलं वा; तन्मध्यघनमेकांगुलम्, आरकूटस्य-विस्तारं त्र्यंगुलं, द्व्यंगुलं वा, पद्मं; सविशेषमरायामम् अरणिवेणुपत्रसमानि, चतुरश्राणि वा, चतुर्विंशत्यर मुत्तमं, विंशत्यरंमध्यमं, षोडशारमधमम् । तन्मूर्न्धिपार्श्वयोश्च ज्वालायामंत्र्यंगुलं, प्रभाज्वालासमज्वालावा, तत्पट्टमध्ये वल्लीसमचतुर्लेखायुश्चीत, तस्याधस्तात्पलकाः कुंभतापीश्वयुगांगविस्ता-रोछ्याः षण्मात्रायता, उभयोः पार्श्वयोः द्वौसिंहौ चक्रमुद्वहन्तौ वा कारयेत् । दन्त द्रव्येण सहजिमेवकुर्यात् । अथवा चन्दनेन वृक्षेण वा कुर्यात् ।

दण्डायामं चक्रायामात् त्रिगुणं, द्विगुणं, समं वा; षोडशांऽगुलं, द्वादशांगुलं, नवांगुलं वा, मूलनाहं; तदष्टांऽशोनमग्रनाहो; मूलादूर्ध्वं क्रमात् कृशदंडादधस्तात्पीठं चतुरंगुलोन्नतम्, अष्टांगुलोन्नतविस्तारायामं, चतुरश्रं,

वृत्तं वा, पद्माकारंअष्टदलैरावृतं कृत्वा; सुदृढं संयोजयेत्। अत्राऽनुक्तं सर्वंशिल्पिशास्त्रोक्तविधिना कारयेत्।

अथवा नवतालेन चक्रं मानांगुलेन सप्तांगुलं, नवांगुल, मेकादशांगुलं वा, द्विभुजं, प्रांजलीकृत्यस्थितं, किरीटाद्याभरणान्वितं, त्रिभागैकभागं, पीठं, तस्योपरिभागे चक्रविस्तारं मानांगुलेन द्वादशांगुलमुत्तमं; नवांगुलंमध्यमं; षडंगुलमधमम्। अन्यत्सर्वं पूर्ववत्। तस्यशिरश्चक्रंसंयोज्य सुदृढंकुर्यात्॥

## चक्रप्रतिष्ठा

अथ चक्रस्यप्रतिष्ठां वक्ष्ये-शुभे कर्त्तुरनुकूले नक्षत्रे कुर्यात्। तद्दिनात्पूर्वमंकुरानर्पयित्वा, तच्चक्रंसंशोध्य, वास्तुहोमं हुत्वा, पर्यग्निपञ्चगव्याभ्यां संशोध्य, पुण्याहं कृत्वा, जले गव्ये कुशोदके च प्रत्येकमधिवासयेत्। प्रतिमाचेत् पूर्ववदक्षिमोचनं तन्मन्त्रेणकारयेत्।

अधिवास्य, आलयाभिमुखे यागशालां कृत्वा, तोरणाद्यैरलंकृत्य; तन्मध्ये शय्यावेदिं चक्रस्याऽध्यर्धविस्तारांतत्तृतीयां (तुरीयां) शोत्सेधां चतुरश्रां कृत्वा; तत्प्राच्या मौपासनाग्निकुण्डं, तत्प्राच्यां स्नपनश्वभ्रं च कृत्वा; पूर्वेद्युरपराह्ने अधिवासगतं चक्रमादाय; शुद्धोदकैस्संस्नाप्य; आलयमावेश्य; यज्ञालयात्पश्चिमेविष्टरे प्राङ्मुखं संस्थाप्य; आघारं हुत्वा; चतुराढक संपूर्णं खण्डस्फुटितकालरहितं कुंभं संगृह्य; तन्तुनापरिवेष्ट्य; अद्भिः प्रक्षाल्य अद्भिरापूर्य; वस्त्राभ्यां वेष्टयित्वा; पञ्चरत्नानि सुवर्णं वा पञ्चायुधांश्च विक्षिप्य; चक्रस्याऽभिमुखे धान्यपीठे सन्यस्य; आचार्यश्चोत्तराभिमुखोत्व चक्रंध्यायन्, कुंभांभसि समावाह्य; तच्चक्रं कुंभं च समादाय स्नपनश्वभ्र प्रतिष्ठाप्य; सप्तभिः कलशैः तथैवाऽभिषिच्य; वस्त्रद्यैरलंकृत्य; शय्यावेद्यां धान्योपरि पञ्चशयनानि पञ्चवस्त्राण्यास्तीर्य; कुंभं चक्रं च समारोप्य; तदैवप्रतिसरं बध्वा; तन्मंत्रेणशाययित्वा उत्तराछादनं कृत्वा; तथैवहौत्रप्रशंस्य; चक्रादि पञ्चायुधान् मूर्त्तिमन्त्रैस्समावाह्य; आवाहन क्रमेण जुष्टाकार स्वाहाकारौ कृत्वा; वैष्णवं सौदर्शनं चक्रगायत्रीं च, अष्टोत्तरशतमावृत्याहुत्वा, रात्रिशेषं व्यपोह्य; प्रभाते स्नात्वा; आलयमाविश्य; चक्रमुत्थाप्य; अभ्यर्च्य, मुहुर्त्ते समनुप्राप्ते यजमान आचार्यादिभ्यो दक्षिणांदद्यात्, कुंभं चक्रं च समादाय; आलयंप्रदक्षिणीकृत्य; अभ्यंतरे मुखमंटपे

वा दक्षिणपार्श्वे कृते पीठे रत्नं सुवर्णं वानिक्षिप्य; तन्मन्त्रेण प्रतिष्ठाप्य; तद्बीजाक्षरं सन्यस्य; कुंभस्थांशक्तिं कूर्चेनाऽऽदाय; तन्मन्त्रेण तन्मूर्त्तिमन्त्रैरावाह्य; आसनाद्यैरभ्यर्च्य, हविर्निवेदयेत् । एवं यः कुरुते भक्त्यारिपून् सर्वान् जित्वा; इष्टान्कामानवाप्य; विष्णुलोकेमहीयते इति विज्ञायते ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे चक्रलक्षण-चक्रप्रतिष्ठाविधिर्नाम पंचाशत्तमः पटलः ॥५०॥

# अथ एकपंचाशत्तमः पटलः

## ब्रह्मोत्सवविधिः तत् त्रैविध्यम्

अथदेवेशस्योत्सवविधिं व्याख्यास्यामः त्रिविध उत्सवः, नित्योत्सवः, शान्त्युत्सवः श्रद्धोत्सव इति ।

द्वादशमासेषु एकस्मिन्मासेअब्दंप्रति तत्काले नित्यं संकल्प्य, यः क्रियते स नित्योत्सवः, भयप्रददुर्भिक्षव्याधिग्रहपीडाद्यशुभशांत्यर्थं संकल्प्य यः क्रियते स शांत्युत्सवः । श्रद्धाविंत्तेयदायुक्ते तदा यः सम्यक् क्रियते सश्रद्धोत्सवः भवेत् ।

## उत्सवदिनसंख्यातत्कालश्च

नवाहं, सप्ताहं, पञ्चाहं वा प्युत्सवः राज्ञो राष्ट्रस्यग्रामस्यय-जमानस्यवा, जन्मर्क्षे प्रतिष्ठादिने विष्णुपञ्चदिनेषु मासनक्षत्रे विषुवे अयने वा अवभृधं संकल्प्य, तत्पूर्वे च ऊत्सवदिनं निश्चित्य; तद्दिनं त्रिगुणं द्विगुणंवाकृत्वा; तदादावुत्सवादौ वा सायंध्वजारोहणं कारयेत् ।

## ध्वजदण्डलक्षणम्

ध्वजदण्डमृजुं कृमिकोटररहित मनुद्वेजिनं विमान(स्य)समं पादाधिक मर्धाधिकं पादहीनं अर्धहीनं वा चतुर्विंशत्यंगुलपरिणाहं, यथालाभपरिणाहं वा, वेणुजाति चंपक क्रमुकं वा अन्यं शुभवृक्षसारं वा; गृह्णीयात् । आगस्त्यंवेति केचित् ॥

## ध्वजपटलक्षणादि

ध्वजपटमहतं शुद्धं दृढं शुक्लं कार्पासतंतुनाकृतं, चतुर्दशत्रयो-

दशद्वादशैकादशनवाऽष्टसप्तषड्ढस्तानमन्यतमायामं सप्तषट्पंचचतुस्ताल-विस्तृतं वस्त्रद्वयं संयोज्य, एकंवेति केचित्। केशादीन् परिहृत्य, जलेन-पेषयित्वा, अग्रेणाऽग्रं पुछेनपुछंकृत्वा, ऊर्ध्वभागे तत्पटविस्तारार्धाऽऽयतं शूर्पाकारमग्रं, कृत्वा, पटस्याधोभागे तद्विस्ताराऽर्धाऽऽयतविस्तारौ पादौ मध्यादाप्रान्तं क्रमात् कृशौयुक्तितः कृत्वा, अग्रादधः पादोर्ध्वे च तिर्यग्यष्टिं वैणवीम्अन्यैः शुभैर्वृक्षैर्वा, तत्पटविस्तारायामा मंगुलाग्रपरिणाहां योजयेत्।

## ध्वजपटे लेख्यगरुडलक्षणम्

एवं कृतध्वजपटमध्ये गरुडं मूलबेरस्य बाहुसमं कर्णान्तं स्तनान्तं नाभ्यन्तं शुद्धद्वारसमं पादाधिक मर्धाधिकं पादहीन मर्धहीनं वा गर्भगेहस्याऽर्धं त्रिपादं समं वा एतेष्विष्टमानेन नवतालविभागेनवा-वामपादंसमाकुंच्य; अपक्षीणं दक्षिणं किंचित्प्रसार्यस्थितं; द्विभुजंप्राञ्जलिं पक्षद्वययुतं सुवर्णवर्णं ललाटे ताम्रचूडं नासाग्रं श्यामवर्णं करपादतलं रक्ताभं नखदशनं शंखाभं एवं पंचवर्णयुतं सर्वाभरणभूषितं सुमुखा-ख्योरगारूढदक्षिणभुजं कौबेरमकुटोज्वलं शुकश्यामवाससं समेखल किंकिणीजालयुतं हारांगदनूपुरकिरीटसहितं जवेनब्रह्मलोकाद्देवानुत्सवार्थ-माह्वयं तं च लेखयेत् ।

तस्योर्ध्वेचोभयोः पार्श्वयोश्चक्रशंखौदीपधरौ चामरे उपरिछत्रम् अष्टमंगलान् धूपदीपपात्रे घंटां चंद्रसूर्यौ सनकसनत्कुमारौ च अन्या-निवर्णचिह्नानि अधस्तात्पूर्णकुंभांकुरांश्च लेखयेत्। अन्यत्र पटं सर्वं कृष्णेन परिपूरयेत् ।

ध्वजदंडायामं षड्भागं पञ्चभागं चतुर्भागं वा कृत्वा एकांशां वैणवीं यष्टिं संगृह्य; दंडाग्रयज्ञोक्तवृक्षै रन्यैश्शुभैर्वा द्वितालायामानि तद्दण्डार्ह-विस्ताराणि मध्ये छिद्रयुतानि यष्ट्याधाराणि त्रीणि समाहृत्य; अचलानि संयोजयेत् ।

तेषामग्रे यष्टियोजनार्थं सुषिरं कृत्वा दंडाग्रे यमं यमद्वयं वा वैणवमधिकं यंत्र वलयं कृत्वा तत्रैकमाधारं तदर्ध श्चक्रं तयोर्मध्ये चैकं क्रमेण संयोज्यतद्यचग्रे द्विभागं त्रिभागं वा हित्वा यन्त्रवलयं ताम्रेणा-ऽऽयसेनवा कृत्वा संयोज्य ध्वजदंडद्विगुणायामां अंगुलाग्रपरिणाहां त्रिवृतां तन्तुना रज्जुं कृत्वा, संयोजयेत् । दण्डं प्रक्षाल्य; दर्भमालया वेष्टयेत् ।

यूथाधिपाऽक्षहन्तयोःपृष्टे चक्रस्यपृष्ठ्यवा षट्तालं पञ्चतालं चतुस्तालं वा व्यापोह्य; पञ्चतालं चतुस्तालंत्रितालं वा अवटं खनित्वा, मध्ये प्राग्दक्षिण पश्चिमोत्तरेषु पंचरत्नानि विक्षिप्य; शाल्यादि धान्यं निधाय; तदवटे ध्वजारोहणकालात्पूर्वं शकुनसूक्तं जपन् ध्वजदण्डं संस्थाप्य; वाद्यघोषयुतं ध्वजाग्र यष्टिः यत्र विमानं तद्दिग्गता यथा भवति तथा संस्थापयेत्।

तन्मूले प्रतिदिक् द्वादशांगुलविस्तारोत्सेधं त्रिवेदि सहितं पीठं कारयेत् ।

अथवा द्वित्रिहस्तायतविस्तारां एकहस्तोत्सेधां एकवेदिं कृत्वा तदूर्ध्वे अष्टदलैरावृतं पद्मं कारयित्वा, आलयाभिमुखे मंटपं प्रपां वा वितानध्वजाद्यैरलं कृत्य; प्राच्यां ध्वजपटविस्ताराधिकाऽऽयामं तस्यार्ध-विस्तारं ध्वजस्यपश्चिमे चतुर्विंशत्यंगुलायामं चक्रस्योत्तरे तथैव विष्वक्सेनस्य धान्यैस्त्रिवेदिसहितं पीठं कृत्वा; वायव्यां ऐशान्यांवा कुंडमौपासनं कृत्वा; आघारं हुत्वा; अग्नेः पश्चिमस्यां धान्यपीठे प्राङ्मुखं ध्वजं संस्थाप्य, वास्तुहोमं हुत्वा; पर्यग्नि पञ्चगव्याभ्यां संशोध्य; 'दभ्यः स्वाहे'त्यादि गारुडं ध्वाजं वैष्णवं च हुत्वा, तत्तन्मंत्रेणाऽक्षिमोचनं कृत्वा, गवादि दर्शनद्रव्याणि दर्शयित्वा, 'आपोहिष्ठा मयोभुवा'दिनाऽभ्युक्ष्य; पश्चाच्चतुराढकसंपूर्णं कालविहीनं कुंभं तन्तुना परिवेष्ट्य, प्रक्षाल्य, अद्भिरापूर्य, वस्त्रयुग्मेनावेष्ट्य, 'इदमापःशिवा' इत्यभिमृश्य, अक्षतान् स्वर्णं कूर्चं च विक्षिप्य; गरुडस्याऽभिमुखे धान्यपीठे सन्यस्य, गरुडंध्यायन् कुंभेऽभसि सामावाह्य, कुंभं गरुडं च तथा स्नानायाऽभ्युक्ष्य; तथैव प्रतिसरं बध्वा; धान्योपरि पंचवस्त्राण्यास्तीर्य; शयनं संकल्प्य; अग्निं प्रज्वाल्य हौत्रं प्रशंस्य; ध्वजं गारुडं वैष्णवं च हुत्वा; तद्बीजाक्षरं तस्य हृदये न्यस्य; कुंभस्थां शक्तिं कूर्चेनादाय; गरुडं ध्यायन् मूर्त्तिमंत्रैरावाह्य; आनम्य, तन्मंटपे कृते धान्यपीठे ध्वजंपश्चिमाभिमुखं प्रस्थाप्य, पश्चिमेप्राङ्मुखं चक्रं उत्तरे दक्षिणामुखं शान्तं च, संस्थाप्य, गरुडं गरुगायत्र्या शान्तचक्रौ तत्तन्मंत्रेण आसनाद्यैरेकादशोपचारैरष्टोपचारैर्वाभ्यर्च्य; मुद्गान्नं गरुडस्य अन्ययोः शुद्धान्नं निवेद्य; पानीयाचमनमुखवासं दत्वा; पुण्याहं वाचयित्वा; आग्नेय्यां धान्योपरिन्यस्तभेर्यां 'भूतीशं महाभुजं विष्णुभक्तं गदाधर' मिति भूतेशमावाह्य, अभ्यर्च्य, हविर्निवेद्य; वस्त्राद्यैर्वादकमलंकृत्य; आचार्य-प्राङ्मुख उदङ्मुखो वा 'उपश्वासय पृथिवी' मिति भेरीसूक्तं जप्त्वा

यष्टिमादाय; दक्षिणेन हस्तेन 'भूर्भुवस्व' रिति वदन् त्रिस्संताडयेत्। पश्चाद्वादकस्सर्वं वाद्यसमायुक्तां बेरी संताडयेत् ।

पश्चादाचार्यो द्रोणै र्द्रोणार्धैराढकैस्तदर्धं वा तंडुलैःपक्वमन्नं कटाहे-प्रक्षिप्य; पक्वैश्चमुद्गनिष्पावतिलतिल्वापूपसक्तुलाजैःयुक्तं यथालाभैर्वा युतं प्रभूतं बलिमाहृत्य; शिष्येन वाहयित्व; वाद्यघोषणपूर्वमेवध्वजं रथे शिविकायां वाऽऽरोप्य अनुचक्रवीशशान्तान्नयेत् । अथवा शिरसाधारयेत् ।

अन्नबलिं अर्ध्यबलिं पुष्पबलिं बलिबेरमारोप्य; आचार्यः पुरतो-गच्छेत् । तदालयगतद्वारपालेभ्यो लोकपालेभ्यः विमानपालेभ्योऽन-पायिभ्यश्च बलिंदत्वा, ग्रामं गत्वा इन्द्रादि क्रमेण बलिं दद्यात् । पश्चिम-विमानं चेद्वरुणादि क्रमेण बलिं दद्यात् । यस्यां दिशि विमानं तद्दिक्पालक-पूर्वमेव बलिंदत्वा; उत्सवं घोषयेत् । ग्रामे 'यज्ञस्यधोषदसी' त्यादियथाकामं तद्दिग्देवत्यमंत्रांश्च घोषयेत् । अन्यत्र गद्यैः पद्यैस्तद्देशभाषयाऽन्ययागाधया च घोषयेत् । 'सर्वे देवास्सर्वादिव्यः सर्वे ऋषयःसर्वा ऋषिपन्त्यः, सर्वेपितरः सर्वाःपितृपत्न्यः, सिद्धविद्याधर गरुड गन्धर्व यक्षकिन्नरनागभूताऽसुरराक्ष-साद्यष्टादशगणास्सर्वेप्यायां' त्वित्युक्त्वा; घोषयेत् ।

एवं ग्रामं प्रदक्षिणीकृत्य, शकुनसूक्तंजपन् आलयंप्रदक्षिणीकृत्य, विष्वक्सेनानपयिनौ स्वेस्वे देशे प्रतिष्ठाप्य, ध्वजस्थानमविश्य, ध्वजं यानादवरोप्य, पाद्याद्यैरभ्यर्च्य, अनुमान्य, यंत्ररज्जुंसमादाय, ध्वजंघंटायुतं 'स्वस्तिदा विशस्पति' रिति बध्नीयात् । आचार्यः प्राङ्मुख उदङ्मुखो वास्थित्वा, दंडाग्रे 'सुपर्णोसी' ति यंत्रेण संयोजयेत् । 'भूरसी' त्यादिनामंत्रेण ध्वजदंडस्य मूलं हस्ताभ्या मवलंब्य, 'ध्वजं प्रतिष्ठापयामी' ति प्रतिष्ठाप्य, आसनाद्यैरभ्यर्च्य, पुण्याहं वाचयित्वा, ब्रह्मघोषं च कृत्वा, मुद्गान्नं निवेद्य, पानीयाचमनमुखवासं निवेदयेत् ।

ध्वजस्थ गरुडस्य निवेदितमन्नं पिंडं कृत्वा 'यास्त्रीपुत्रकाम्या-अश्नीयात्, सा बलारोग्यायुष्मन्तं पुत्रं प्रसूयेत । यावत् ध्वजारोहणं तावद्त्रिवित्रिकालं द्विकाल मेककालं वा निवेदयेत् । जयमत्यछ्रितं धन्यं ध्वज' मिति चतुर्भिर्नाममंत्रै रहरहस्त्रिसंध्यं सप्तविंशति विग्रहैरर्चयेदित्या हमरीचिः ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे ध्वजारोहण-विधिर्नाम एकपंचाशः पटलः ॥५१॥

# अथ द्विपञ्चाशत्तमः पटलः

अथ उत्सवारंभः- यजमानस्सर्वदोषशान्त्यर्थं विष्णोरुत्सवं कारयेत् । आलयाभिमुखेऽन्यस्मिन् शुभ्रे देशे वा आस्थानमंटपं कूटं वा पञ्चहस्तादि भेदेन प्राङ्मुखं दक्षिणामुखं आलयद्वार दिङ्मुखं वा परिकल्प्य, तत्प्रमुखेद्वा त्रिंशत्स्तंभादिशतस्तंभान्तैः स्तंभैर्युक्तं नृत्तमंटपं कूटं प्रपां वा कृत्वा, प्रपायां मध्ये वर्ष निवारणं कूटं युक्तितः कारयेत् ।

तत्सर्वं वितानध्वजपताक मुक्तादामस्तंभ वेष्टन तरंग दर्भमालाद्यैरलंकृत्य; द्वारेषु तोरणपूर्ण कुंभ दर्भमालाक्रमुकदीपांकरैरलंकुर्यात् । शिबिका रथरंग डोला यंत्र मुखमंटप गज तुरग गरुड सिंह व्याल हंस भ्रमणादीनि यानानिशक्तितः कारयेत् । मालादीप यंत्रदीप हस्तादि दीप शूलदीपादीन्, भेरीपटह मर्दल गोमुख ताल काहल मुरज शंख जर्झर मंजुल दर्दुर शंख श्रृंग धारा वीणा वेणु झल्लरीश्च शक्तितःकारयेत् ।

छत्राणि नानाविधानि पिंछान्यनेकविधानि व्यजनानि चामराणि विविधान् ध्वजान् पताकाँश्च वितान तरंग स्तंभवेष्टनान्याहृत्य; यथोक्तं समित्पुष्प दर्भ होमद्रव्य बलिद्रव्यपुष्प गंध धूप दीपार्घ्य द्रव्यं हविर्द्रव्यं नववस्त्रतन्तु हेमरत्न धान्यतंडुलघृतदधिक्षीराणि दीपार्थं घृतं तैलं वा आहरेत् । हविरर्थं तंडुलं, बहूपदंशगुलफलसहितंभक्तानां ब्राह्मणादीनां भोजनार्थानि यानि द्रव्याणि तानिसर्वाणि च संभरति। नर्तकान् गायकान् भक्तान् परिचारकाँश्च यत्नेनाऽऽह्वयेत् ।

आचार्यो यजमानयुतः पूर्वेद्युरेव पूर्वाह्ले देवेशस्य द्विगुणार्चनार्थं कुंभदेवाराधनार्थं होमार्थं बलिदानार्थमास्थानार्चनार्थंच पञ्च पदार्थान् पञ्च परिचारकाँश्च वरयेत् । तद्ग्रामवासिनस्सर्वे अनन्यतत्पराश्च अलंकृता हर्षयुता भवेयुः ।

तद्ग्रामवीथीश्च संशोध्य; गृहद्वाराणि दीपांकुरोदकुंभाद्यैरलंकृत्य; देवालयं मृष्टसिक्तोपलेपनाद्यै स्संशोध्य; पैष्ट्याभूमिमलंकृत्य; लाजाऽक्षत कुसुमान्यवकीर्य; उत्सवं यद्दिने कर्तुमुद्योगः तद्दिनात्पूर्वंनवमेसप्तमे पंचमेतृतीये वाह्नि अंकुरार्पणं कुर्यात् ।

उत्सवादि दिने प्रभाते स्नात्वा आचार्यो यजमानयुतः प्रथमदिनोत्सवाद्यवभृथान्तं हविष्याशी अनन्यतत्परो नववस्त्रोत्तरीयाभरणयुतः पुरुष-

सूक्तपूर्वमरुणनारायणाद्यष्टाक्षरपारायणं कुर्यात्। तद्दिनेष्वाशौचं न भवेत्।

ततो देवालयं प्रविश्य; देवं प्रणम्य; उत्सवबिंबदेव्यौ च तदलाभे स्नापनं तदलाभे कौतुकं वा आहृत्यमध्याह्नार्चनांते स्नपनोक्तविधानेन यथाशक्तिकलशैः स्नापयित्वा; अथवा शुद्धोदकैरभिषिच्य; हविर्निवेदयेत्। तदालयगतदेवेभ्यः सर्वेभ्यः परिवारदेवेभ्यश्चयावत्तीर्थान्तं तावत्त्रिकालं द्विगुणं हविर्निवेदयेत्। परिवारदेवानां बिंबाभावे तत्तत्पीठे तथैवाभ्यर्च्य; एक कालं वा हविर्निवेदयेत्।

सायाह्ने यजमानेन आचार्यः शिष्यै स्सार्धं वस्त्रो त्तरीयाभरणैरलंकृतः, चक्रवीशशांतान् सप्तविंशति विग्रहैरभ्यर्च्य; अलंकृत्य; यानमारोप्य; शिरसाधारयन् तीर्थांकुरार्थं मृत्संग्रहणार्थं भक्तानांब्राह्मणानांशिरोभिः पालिकादीन्धारयन् वस्त्रमाल्यालंकृतं खनित्रं चाऽऽनीय; सर्ववाद्यसमायुक्तं सर्वालंकारसंयुतं 'विष्णुर्मांरक्ष' त्विति अग्रतोगच्छेत्।

आलयाद् ग्रामाद्वा प्राचीमुदीची मैशानीं वा दिशां गत्वा; संशोध्य, उपलिप्य; तस्मिन् भूलोकवद्वर्त्तुलमुल्लिख्य; तन्मध्ये महींदेवीं ध्रुवबेरस्य बाहुसमांस्तनांतां वा ऊर्ध्ववक्त्रामैशान्यांन्यस्तमौलिकां नैऋत्यांन्यस्तपादां दक्षिणमाकुंच्य, वामंप्रसार्यशयानां, द्विभुजां धृतोत्पलदक्षिणहस्तां ऊरुप्रसारितवामहस्तां यथालाभाभरणांऽबरान्वितां नवतालमानेनकल्पयित्वा; 'आपोहिष्ठाद्यैरभ्युक्ष्य' एकादशोपचारैरभ्यर्च्य; तामनुमान्य; ललाटे बाह्वोस्तनयोर्वा मेदिनीमिति मंत्रेण 'त्वांखनामी' ति आचार्यः प्राङ्मुखं उदङ्मुखोवा खनित्वा; हेमादिपात्रे मृदंगृहीत्वा; वस्त्रैराछाद्य; तत्क्रमेण ग्रामं प्रदक्षिणीकृत्य; देवालयं प्रविश्य; अंकुरार्पणस्थाने मृदंसन्यस्य; विधिना अंकुरार्पणं कारयेत्॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे उत्सवद्रव्य मृत्संग्रहणविधिर्नाम द्विपंचाशत्तमः पटलः॥५२॥

# अथ त्रयः पंचाशत्तमः पटलः

## उत्सवविधिः

पश्चादालयाभिमुखे दक्षिणे आग्नेयां वा यागशालां षोडशस्तंभसंयुक्तां पंचहस्तादहीनां चतुर्द्वारयुतां एकद्वारयुतां वा मंटपं कूटं वाकारयति। तां तोरणपूर्णकुंभवितानध्वजदर्भमालाद्यैरलंकृत्य; तन्मध्ये अष्टताऽऽलायत-विस्तारां चतुरश्रां द्वितालोत्सेधां कुंभवेदिं च कृत्वा; तत्प्राच्यां पूर्व-वत्सभ्याग्निकुंडं कृत्वा; उपलिप्य; पैष्ट्याभूमिमलंकृत्य; वेद्यां द्व्यं-गुलोत्सेधानि अंगुलोत्सेधानि वा धान्यान्यास्तीर्य; नवभागं विभज्य; पुष्पदर्भाक्षतानवकीर्य; दीपांकुराष्टमंगलपंचायुधानि परितो विन्यस्य।

खंडस्फुटित कालरहितान् नवान् नवकुंभान् समाहृत्य; एकं द्रोणद्वयपूर्णं प्रधानकुंभं अन्यान्द्रोणपूर्णान् संगृह्य; 'इन्द्रं नरो न' इति तन्तुना यवांतरं अंगुल्यन्तरं वा परिवेष्ट्य; 'शुचीवो हव्या' इति प्रक्षाल्य; नादेयं तोयं दिवासंगृह्य; 'धारा' स्विति वस्त्रेणोत्पूय, उशीरादि गन्धैर्वासयित्वा; 'इद मापःशिवा' इति कुंभान् संपूर्य अक्षतं कूर्चं च निक्षिप्य; पृथक् पृथग्वस्त्रयुग्मेनाऽऽवेष्ट्य; नवरत्नानि विष्णुगायत्र्या मध्यादि कुंभेषु संन्यस्य; रत्नाऽलाभे सुवर्णं निक्षिप्य; प्रधानकुंभे पंचायुधानि च सौवर्णानि निक्षिप्य; तत्क्रमेण वेद्यां विष्णुसूक्तेन कुंभान् समारोप्य; तान् पिधानैरपिधाय।

सभ्याऽग्निकुंडेत्वाघारं हुत्वा, आचार्यस्तद्वेद्यां दक्षिणे चोत्तराऽभि-मुखस्तिष्ठन् प्राणायामं कृत्वा, समाहितो देवं ध्यायन् तन्मध्ये प्रधानकुंभे देवेशं विष्णुं देव्यै च, प्राच्यां पुरुषं, दक्षिणस्यां सत्यं, प्रतीच्यामच्युतं उदीच्यामनिरुद्धं, आग्नेय्यांकपिलं नैर्ऋत्यां यज्ञं, वायव्यां नारायणं; ऐशान्यां पुण्यं च समावाह्य; पाद्याद्यैरभ्यर्च्य; अग्निंप्रज्वाल्य; पश्चादौत्सवं बिंबमासाद्य; अष्टोपचारैरभ्यर्च्य; पुण्याहंवाचयित्वा; हेमादि पात्रे तंडुलोपरिन्यस्तं सौवर्णं तां तवं प्रतिसर पूर्ववद्बद्ध्वा; यस्यदेवस्य यजनार्थं प्रतिसरबंधःकृतः तस्य हविः प्रतिषिद्धं तस्माद्रात्रावुत्सवांते स्नानकाले प्रतिसरं विमोच्य स्नापयित्वा; अभ्यर्च्य; हविर्निवेदयेत्।

पश्चाद्यज्ञशालामागत्य; अग्निंप्रज्वाल्य; परिषिच्य; हौत्रं प्रशंस्य; अतो देवाद्यैः विष्णोर्नुकाद्यैः सहस्रशीर्षाद्यैः देवादि तदालयगतपरिषद्देवानां मूर्त्ति-मंत्रैश्च हुत्वा; उत्सवाधि दैवत्यं तिथिवारनक्षत्र दैवत्यं च, क्रमाज्जुहुयात्।

उत्सवाऽधिदेवत्यं स्रुवेणाज्येन तिथि दैवत्यमुपभृतासाज्येन पक्केन वारदैवत्यमाज्येन अग्निहोत्रहवण्या नक्षत्रदेवत्यमाज्येन जुहुयात्। सर्वालाभे तत्तत्स्मृत्वा स्रुवेण होतव्यम्। यावत्संख्याऽऽहुतिः तावत्स मिद्धोमं चरुहोमं च कुर्यात् ।

## होतव्यसमिदादि

प्रथमदिने पालाशं, द्वितीये बैल्वं, तृतीये शमिं, चतुर्थे नैयग्रोधं, पंचमे औदुंबरं, षष्ठे चाश्वत्थं, सप्तमे खादिरं, अष्टमे प्लाक्षं, नवमे पालाशं इध्मं जुहुयात्। एतेषामलाभे पालाशमश्वत्थं वा जुहुयात्। आज्यालाभे आज्यमिश्रचरुणाहोतव्यं। दधिक्षीराज्यमिश्रंलाजमुपजुह्वाऽऽदाय वैष्णवेन जुहुयात् ॥

## द्विगुणार्चनाद्यर्थं पद्मादि संग्रहः

देवस्य द्विगुणार्चनार्थं कुंभदेवाराधनार्थं, होमार्थं, आस्थानाऽर्चनार्थं, बलिदानार्थं च, प्रथमदिने पद्मं; द्वितीये बिल्वपत्रं; तृतीये करवीरं; चतुर्थे कुमुदं; पञ्चमे नन्द्यावर्त्तं; षष्ठे तुलसीं; सप्तमे स्थलारविन्दम्, अष्टमे विष्णुक्रान्तं, नवमे पंकजम्, एतेषामलाभे करवीरं, तुलसीं वा आहरेत् ॥

त्रिगुणीकृतनवाह्निकत्रिंशद्दिनाद्यधिकदिने नवाह्निकोक्तसमित्पुष्प-बलिवाहनादीनि पूर्ववत् ।

## कुंभस्थ देवपूजनम् बलिहरणक्रमश्च

कुंभस्थान्देवान् एकादशोपचारैर्वा अभ्यर्च्य; द्विकालं हविर्निवेदयेत्। तद्वेद्यां पश्चिमे विष्टरे देवेशं दक्षिणे चक्रं, उत्तरे विष्वक्सेनं च संस्थाप्य; अभ्यर्च्य; पश्चिमे देवाभिमुखे धान्यपीठे बलिरक्षकंच, आराध्य; मुखवासं-प्रदाय; देवेशमभ्यर्च्य; हविर्निवेद्य; विधिना अन्नबलिं अर्घ्यबलिं पुष्पबलिं वाआराध्य; चक्रमग्रे, वीशं शान्तं बलिबेरं च क्रमेणनयेत् ।

पूर्ववद्बेराभावे चक्रादीन् पात्रेषु समावाह्य; अभ्यर्च्य; नयेत्। अथवा चक्रं बलिबेरं च नयेत्। पूर्ववत्प्रभूतं बलिमाहृत्य; शिष्येण वाहयित्वा; पुष्पगन्धधूपदीपाऽक्षतयुतं बलिदाता अग्रतो गच्छेत्। पूर्ववद्द्वारपालादिभ्यः बलिंदत्वा; ग्रामस्य बाह्यवीथ्यां, महत्वे अभ्यन्तरवीथ्यां वा, प्रदक्षिणवशेन

दिक्पालानांमध्ये ब्रह्मणश्च बलिनिर्वापं कारयेत्। ग्राममध्ये विमानं चेत् मध्यादिनवदिक्षुबलिं दद्यात् । पश्चिमादि विमानेषु ब्रह्मबलिं विना दद्यादित्येके ।

यत्रवास्तुविन्यासविशेषो नास्ति, तत्राऽष्टदिक्षु, नवदिक्षुवा, बलिंक्षिपेत्। पौराणिकी श्रेणी चेत् चतुष्कोणेषु संधिषु सर्वत्र क्षिपेत्। दण्डकश्चेत् पश्चिमे वरुणनिर्ऋतिवायुभ्यो मध्येब्रह्मयमकुबेरेभ्यो पूर्वे इंद्रानलेशेभ्यो दद्यात्। दक्षिणोत्तरंचेत् दक्षिणे यमनिर्ऋति पावकेभ्यो मध्ये ब्रह्मवरुणेन्द्रेभ्यः उत्तरेकुबेरपवनेशेभ्यो बलिं दद्यात्। नदीतीराद्रि स्थाने (षु) आवरणाद्बहिरष्टदिक्षु क्षिपेत्। अथवा ग्रामो योजनादर्वाक् चेत् तत्रगत्वा बलिमाचरेत्।

तस्मिन् स्थाने दर्भान् विकीर्य; तत्तद्दिगीशाय बलिं दत्वा; प्रागाद्यष्टदिक्षुसर्वेभ्यो देवेभ्यो, भूतेभ्यो, न्यक्षेभ्यो, राक्षसेभ्यः पिशाचेभ्यः, नागेभ्यो, गंधर्वेभ्यो, अष्टादशगणेभ्यश्च, बलिं दद्यात् उत्तमम् ॥

प्रागादि चतर्दिक्षु सर्वेभ्यो भूतेभ्यो यक्षेभ्यो राक्षसेभ्यो बलिंदद्यान्मध्यमम् ।

तन्मध्ये तद्दिगीशाय बलिं दद्यात् अधमम् ।

तत्तन्नाम्नापूर्वमुदकंपुष्पं बलिं उदकं च दद्यात् ।

एवं इन्द्रादीशानान्तं सर्वेषु स्थानेषु एकं विष्टरं निधाय; तस्मिन् बलिनिर्वापं कुर्यादिति केचित्। एवं क्रमात् प्रदक्षिणवशेन बलिं दत्वा; आलयमाविश्य, भूतपीठे बलिशेषं निर्वपेत् । यदि राज धानी चेत् राजवेश्माभिमुखांऽकणंत्रिधाकृत्वा; पश्चिमभागे प्रासादसमीपे वेंन्द्राय, तत्पार्श्वयोर्जयश्रियै शचीदेव्यै च, द्वारपार्श्वश्शंखपद्मनिधिभ्यां च, बलिंदत्वा; सर्वत्र निर्वापणांते 'ये भूता' इत्याकाशे विसृजेत्। अथवा देवेशेन सहाऽग्रतो बलिमेवं क्षिपेत् ॥

## शिबिकादियानोत्सवः

शिबिकादियानं वस्त्रगन्धमाल्याद्यैरलंकृत्य; दवेशं नानावर्णांबरैर्नवैः कौशेयाद्यैः सूक्ष्मकार्पासतन्तुकृतैश्च रत्नयुतमकुटांऽगदमकरकुण्डलकेयूरहारकटिसूत्रोदरबंधनांऽगुलीयकमुक्तादामप्रलंबयज्ञोपवीताद्याभरणैःसुगंधमाल्यैर्नानाविधगंधैश्चाऽलं कुर्यात्। अज्ञानादर्थलोभाद्वा देवस्याऽलंकारे

हीने सर्वहानिर्भवेत् यत्नेनालं कुर्यात् ।

वस्त्रं जीर्णस्फुटितमुपयुक्तं वा यो दद्यात् तस्य महत्तरो दोषो भवति ।

नवं मृदुसूक्ष्मं वस्त्रं यो दद्यात् स कुलैस्समभिर्युक्तो विष्णुलोकमवाप्नुयात् । भक्तियुक्तैः शूद्रैरनुलोमैर्वाहयित्वा; न दोषो भवति । तत्प्रतिलोमैर्भक्तियुक्तैर्वाहनं दोषाय भवति । अकिंचन ब्राह्मणैर्वाहनंतन्मुख्यं भवति ।

देवेशं प्रणम्य, 'वेदाह' मिति यानमारोप्य; सौवर्णैः पुष्पैरन्यै र्वा प्रभामंटपमलंकृत्य; योजयेत् । नर्तकगायकवादकाः चामरव्यजनमयूरतालवितानवृंतादिधरा हेमरजतताम्रपरिच्छदढक्कावितानध्वजपताकादिधराः तोयविक्षेपकाश्च जनाः पुरतो गच्छेयुः । छत्रधरा धूपदीपधराः परितो गच्छेयुः । वेदान् जयशद्बान् स्तोत्रादीनि च पठंतोऽनुगच्छेयुः ।

उत्सवे देवेशं ये सेवंते ते सर्वे पदे पदे यज्ञफलं लभेरन्निति भृग्वादयो वदन्ति । तस्मादस्पृश्यस्पर्शनं न दोषाय भवेत् । तद्ग्रामवासिनो जना यानस्थं देवं स्वेषु गृहेषु दीपांकुराद्यैः प्रत्युत्थानं कृत्वा नमस्कुर्युः । कदलीचूतपनसनालिकेराऽपूपलाज पृथुकादीनि ब्राह्मणानीतानि संगृह्याऽमंत्रकं निवेदयेत् । शूद्रानुलोमानीतान्यपक्वानि निवेदयेत् । प्रतिलोमानी तानि तानि सर्वाणि वर्जयेत् । एवंग्रामं प्रदक्षिणीकृत्य शकुनसूक्तेनाऽऽलयमावेश्य आस्थानमंटपे सिंहासने विष्टरे वा देवं संस्थाप्य पाद्याद्यैरभ्यर्च्य मुखवासं दत्वा राजवदुपचारं कृत्वा शुद्धस्नपनविधिना संस्नाप्य अभ्यर्च्य महाहविः प्रभूतं वा निवेद्य पानीयाचमनमुखवासंदत्वा द्वितीयाहः प्रभृति नित्यंसायंप्रातर्नित्यार्चनान्ते द्विगुणार्चनं हविर्निवेदनं कुंभदेवाराधनं होमं बलिदानं च कृत्वा सायंप्रातः एवमेवोत्सवं कारयेत् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे उत्सवविधिर्नाम त्रिपंचाशत्तमः पटलः ॥५३॥

# अथ चतुष्पंचाशत्तमः पटलः

## अशक्तौ

एवं कर्त्तुमशक्तश्चेत् पूर्ववत् द्विगुणार्चनं हविर्निवेदनं कुंभदेवाराधनं होमं बलिदानं च द्विकालंकृत्वा; देवेशं सायाह्ने पूर्ववदलंकृत्य; उत्सवं कारयेदिति ॥

## अतिवातादि दोषे

अतिवाताऽतिवृष्टि शत्रुचोरादिभीत्या संकुलेसति आलये प्रथमावरणे द्वितीयेवा बलिनिर्वापनमुत्सवं कारयेत् ॥

## अवताराणा मुत्सवे विशेषः

अवताराणामुत्सवं यदि कुर्यात् पूर्वेद्युः रात्रिपूजावसाने अभ्यर्च्य हविर्निवेद्य; प्रतिसरंबध्वा; शयनाधिवासं कृत्वा; प्रभाते देवमुत्थाप्य; पाद्याचमनंदत्वा; आस्थानमंटपे सिंहासने विष्टरे वा संस्थाप्य; अभ्यर्च्य; राजवदुपचारं कृत्वा; संस्नाप्य; अभ्यर्च्य; गोभ्यस्तृण मुष्टिं प्रदाय; महाहविः प्रभूतं वा, निवेद्य; पानीयाचमनमुखवासं दत्वा; सायमेवोत्सवं कारयेत्। हिरण्यपशुघृत तंडुल तांबूलादीन्याचार्याय तच्छिष्येभ्यस्सोदकं दद्यात्।

तीर्थदिनात्पूर्वदिने प्रातस्संध्यार्चनान्ते पूर्ववद्धोमाद्यं सर्वंकृत्वा; देवं चित्रर(क) क्ष्यादिना सायुधमलंकृत्य; गजाऽश्वाद्या रूढजनै स्सार्धं मृगयोत्सवं कारयेत्। अथवा अवभृथ दिनात् द्वितीये चतुर्थे वा शान्तमलं कृत्य; मृगयोत्सवं कारयेत्। तद्रात्रौ पूर्ववत्सर्वंकृत्वा; देवंग्रामंप्रदक्षिणंकार यित्वा; अभ्यन्तरंप्रविश्य, संस्नाप्य; अभ्यर्च्य; हविर्निवेद्य; अभ्यन्तरे अन्तर्मंडले शयनस्थानेवा पूर्ववत्प्रतिसरं बध्वा; तथैव शाययित्वा; प्रभाते देवेशमुत्थाप्य; पाद्याद्यैरभ्यर्च्य; तीर्थस्नानकालात्पूर्वं हविर्निवेदयेत् । अन्यत्सर्वं पूर्ववत्कारयेत् ॥

## उत्सवाऽधिदेवत्यकथनम्

उत्सवाधिदेवत्यं तिथिवारनक्षत्रदेवत्यं च क्रमेण वक्ष्ये प्रथमे ब्राह्मं, द्वितीये चाऽऽर्षं तृतीये रौद्रं, चतुर्थे वासवं, पञ्चमे सौम्यं, षष्ठे वैष्णवं,

सप्तमे सर्वदेवत्यं, अष्टमे याम्यं, नवमदिने वारुणं च जुहुयात्।

प्रथमतिथावाग्नेयं, द्वितीयायां प्राजापत्यं, तृतीयायां कौबेरं, चतर्थ्यंवैध्नं, पञ्चम्यां श्रीदेवत्यं, षष्ठ्यांकौमारं, सप्तम्यामादित्यं, अष्टम्यां रौद्रं, नवम्यां दौर्गं, दशम्यां याम्यं, एकादश्यामैन्द्रं, द्वादश्यां वैष्णवं, त्रयोदश्यां मातृदेवत्यं, चतुर्दश्याम् ऐशं, पञ्चदश्यां सौम्यं च जुहुयात्।

सूर्यवारादिषु तत्तद्देवत्यं जुहुयात्।

'अग्नये कृत्तिकाभ्यः स्वाहे' त्यादि तत्तन्नक्षत्रे जुहुयात्। वैष्णवं विष्णुसूक्तं पुरुषसूक्तं तदालयगतपरिषद्देवानां मूर्त्तिमंत्रांश्च आज्यमिश्रचरुणा वैष्णवान्तं सायंप्रातर्जुहोति।

तीर्थदिने प्रातरुत्सवेकृते तत्राऽऽस्थान मंटपे विष्टरे देवं संस्थाप्य, अष्टोपचारै रभ्यर्च्य, अभिमुखे गरुडं दक्षिणे चक्रं उत्तरे विष्वक्सेनं च धान्य पीठे संस्थाप्य, अभ्यर्च्य, देवाभिमुखे गोमयेनोपलिप्य; धान्यान्यास्तीर्य; (ऊर्ध्वे) उलूखलमुसलौ सन्यस्य; वस्त्रेणाऽऽवेष्ट्य; तयोः ब्रह्मेशावभ्यर्च्य; हरिद्रायां लक्ष्मीमभ्यर्च्य; पुष्पादीन् संशोध्य; हरिद्रामुलूखले प्रक्षिप्य; 'अतो देवा' दीन् जप्त्वा; आचार्यः किंचिदवघातं कृत्वा; ततो देवदासीभिर्भक्तैर्वा अवघातं कारयित्वा; चूर्णीकृत्य; कलशान् चतुरो, द्वावेकं वा, पूरयित्वा; देवाभिमुखे धान्योपरि दर्भानास्तीर्य; कलशान् सन्यस्य; वस्त्रेणाऽऽछाद्य; अधिदेवतां शिनीवाली मभ्यर्च्य; देवमाराध्य; सुगन्धि तैले अधिदैवतंविष्णु-मभ्यर्च्य; वैष्णवं मंत्रमुच्चार्य; तनोऽभ्यञ्जनं कृत्वा; 'वेदाह' मिति चूर्णेना ऽभिषिच्य; तच्छिष्टेन चक्रादींश्च अभिषिच्य; तच्चूर्णं चक्रं च समादाय; ग्रामं प्रदक्षिणी कृत्य; चक्रसन्निधौ भक्तानां ब्राह्मणानां शिरस्सु तच्चूर्णं विकिरेत्। तच्चूर्णं किंचिदपि शिरसाधारयेत्तस्याऽशुभानि विनश्यन्ति। बल्युत्सवाद्यनुगता ये सर्वे ते विप्रसमाः तस्मा दस्पर्श्यस्पर्शनं न दोषाय भवेत्॥

मध्याह्ने अवभृथं प्रधानं, (अपराह्ने वा) पूर्वाह्णे देवेश यान मारोप्य; चक्रवीशशान्तान्पुरस्कृत्य; तीर्थस्नानाय गच्छेत्। आलयाभिमुखे विहितम् ऐशान्यां उत्तरे वा तदभावे यथेष्टतटाके नद्यां नदीसंगमे समुद्रे वा तस्माद्ध-नुस्सहस्राभ्यामूर्ध्वं न गच्छेत्।

तत्तीरे प्रपांकृत्वा; अलंकृत्य; यस्यां दिशि जलं तदभिमुखं देवं

प्रतिष्ठाप्य; अभ्यर्च्य; तथैव चक्रादीन् संस्थाप्य; दशकलशाना हृत्य; तंतुनावेष्ट्यसं शोध्य; सिद्धार्थोदकाऽक्षतोदक कुशोदक जप्योदकरत्नोदकैः प्रधानान् पूरयित्वा; उपस्नानान् शुद्धोदकैः पूरयित्वा; देवाभिमुखे धान्यवेद्यां मध्ये सिद्धार्थोदकं, पूर्वे अक्षतोदकं, दक्षिणस्यां कुशोदकं, प्रतीच्यां जप्योदकं, उदीच्यां रत्नोदकं च, सन्यस्य; तत्तद्वामपार्श्वे तत्तदुपस्नान कलशान् सन्यस्य; वस्त्रेणाछाद्य; अधिदेवान् आदित्याऽप्सरः काश्यपबृहस्पतिमुनितक्षकसर्वमंत्रविद्याधरविष्णु गंधर्वान् दशैतान् कलशेषु क्रमेण अभ्यर्च्य; पुण्याहं कृत्वा; देवंपाद्याद्यर्घ्यान्तं अभ्यर्च्य; मध्यमादिपञ्च-कलशोदकैः 'शन्नो देवीः, पूतस्तस्य, इमा ओषधय, अभित्वाशूर, चत्वारि वा' गिति 'वारीश्चतस्त्र' इति सर्वोपस्नानैश्चाऽभ्युक्ष्य; तच्छिष्टोदकैः चक्रं-संस्नाप्य; तच्चक्रं विष्वक्सेनं गरुडं च तीर्थजले निमज्जयेत् । केवलं च क्रंवा निमज्जयेत् । पश्चात्सर्वेजनास्तत्तीर्थे जले देवसन्निधौ स्नानं कुर्युः । ते सर्वे पापविमुक्ताः विष्णुलोकं गच्छन्ति ।

देवं शुद्धोदकैस्संस्नाप्य; प्लोतेन विमृज्य; नव वस्त्रोत्तरीयाभरणै रलंकृत्य; अष्टोपचारै रभ्यर्च्य; वस्त्राद्यैश्चक्रादीनलंकृत्य; अभ्यर्च्य; यानमारोप्य; वीथ्यां लाजाऽक्षतकुसुमान्यवकीर्य; चक्रवीशशान्तादीन् पुरस्कृत्य; आचार्यः शकुनसूक्तं पठन् तोयधारापुरस्सरं अग्रतो गच्छेत् । सर्वालंकारसंयुक्तं सर्ववाद्य समायुक्तं स्तोत्रध्वनिसमायुक्तं आलयं प्रविशेत् । द्वारदेशे देवेशं दीपांकुरोदकुंभैः अर्चकाः प्रत्युत्थानं कुर्युः ।

पश्चादास्थानमंटपे देवं संस्थाप्य; चतुर्दिक्षु चतुर्वेदाध्ययनं-कारयित्वा; स्तोत्रैर्जयशब्दैश्च संस्तूय; अभ्यन्तरे स्वे स्वे स्थाने संस्थाप्य; देव्योः चक्रादींश्च सप्तविंशति भेदैरभ्यर्च्य; विष्णुसूक्तेन पञ्चप्रणामान् कृत्वा; अष्टाक्षरेण पुष्पांजलिं दत्वा; यज्ञालयं गत्वा; अग्निंप्रज्वाल्य; परिस्तीर्य; पूर्णाहुतिं हुत्वा; अग्निंविसृज्य; कुंभवेदिं आसाद्य; कुंभस्थान् देवान् मध्यादि क्रमेण प्रणवेन ध्रुवबेरे समारोपयेत् ॥

बालालयं चेत् कौतुके समारोपयेत् ।

तद्रात्रौ ध्वजावरोहणं कुर्यात् । कलशबलिद्रव्यैर्युक्तमन्नंकटाहे-प्रक्षिपेत् । चक्रादीन्विना पूर्ववदालयगतेभ्यो ग्रामे ब्रह्मादिभ्यश्च वाद्य-घोषसमायुक्तं बलिं दत्वा; संधिस्थान् देवान्विसृज्य; वाद्यघोषं विना तद्ग्रामस्थ देवालयेषु शून्यागारे चैत्यवृक्षमूले मातृदुर्गास्कन्दवि-

ध्नेशशास्त्रादीनां गृहेषु स्मशानसमीपे वापीकूपतटाकाऽऽरामस्थानेषु ग्रामचतुस्सीमसु भूतक्रूरदेवस्थानेषु च एवं बलिं विक्षिप्य अग्निसन्निधौ स्नात्वा; आलयंप्रविश्य; देवं प्रणम्य; ध्वजमंत्रेण ध्वजावरोहणं कृत्वा; तद्रात्रावुत्सवान्तस्नपनं च कारयेत् ॥

तद्दिनात् तृतीयायां पंचम्यां वा रात्र्यामेवं बलिंदत्वाध्वजाऽवरोहणं स्नपनं च कारयेदित्येके ।

## पुष्पयागविधिः

अथ पुष्पयागविधिं वक्ष्ये - प्रतिष्ठान्ते चोत्सवांते विषुवे अयने सूर्य-चंद्रोपरागे युगांते संक्रांत्यां श्रवणे राज्ञोग्रामस्य यजमानस्यच जन्मर्क्षे दुस्वप्नराष्ट्रविभ्रमदुर्भिक्षाऽनावृष्टिपरचक्रभयमहाव्याधिपीडनादि सर्वोपद्रवेषु च विधिनादेवस्य स्नपनंकृत्वा; तदनंतरे द्वितीयेऽहनि पुष्पयागं कुर्यात् ।

प्रतिष्ठोत्सवौविना अन्येषु विधिनाङ्कुरार्पणंकृत्वा; कर्मसमारभेत । ततो देवेशमास्थानमंटपे सर्वालंकारसंयुक्ते धान्यराशौ संस्थाप्य; अभिमुखे धान्यपीठे पुष्पाधिदेव माराध्य; पुष्पाणि सन्यस्य; नववस्त्रोत्तरी-याद्यैर्देवमलंकृत्य; त्रयोदशोपचारैरभ्यर्च्य; देवस्य दक्षिणे औपासनाग्निकुण्डं-कृत्वा; आघारं हुत्वा; हौत्रंप्रशंस्य, देवेशादितदालयगत देवानां आवाहनं, जुष्टाकारस्वाहाकारं कृत्वा; तथैव पुष्पेशस्यकृत्वा; देवस्यवैष्णवं विष्णुसूक्तं पुरुषसूक्तं प्राजात्पत्यंव्याहृतीश्च हुत्वा; पद्मेन बिल्वपत्रेण वा विष्णुगायत्रीमष्टोत्तरशतं हुत्वा; श्रीदेवत्यं श्रीसूक्तं श्रीदेव्याः, पंचभूमि-देवानामपि मंत्रान् मूर्त्तिमंत्रान्वा हुत्वा; पुष्पाधिदेवत्यं वैष्णवान्तं द्वादश-कृत्वो जुहुयात् ।

ऋत्विजस्सर्वे 'दधिक्राव्ण' इति दधिप्राशनं कृत्वा नववस्त्रोत्तरी-यकुंडलादिभिरलंकृताः वाग्यता भवेयुः । शंखडिंडिमकौहलझल्लरीमर्दल-वीणावेणुमृदंगाद्यैः दक्षिणे पुराणवचनैः पश्चिमे स्तोत्रध्वनिभिः उत्तरे सूत्र शिक्षादिभिश्च घोषयेत् । प्रागादि चतुर्दिक्षु चतुर्वेदानध्यापयेत् ।

प्रागादि चतुर्दिक्षु दक्षिणवामयोर्वा आचार्य ऋत्विजश्च परात्परतरं गुह्याद्गुह्यतरं सर्ववेदार्थसारम् (रभूतं) अष्टाक्षरद्वादशाक्षरं विष्णुगायत्रीं वा जपतः पुष्पाऽञ्जलिं पादतो दद्युः अष्टोत्तरशतावसाने पाद्याद्यर्घ्यांत मर्चयेत् । स्तनदघ्नेषु पुष्पेषु पुष्पाण्यधोनयेत् । पुराणम्लान वस्त्रनिक्षिप्तानि

दुर्गंधदुर्मनुष्याधिष्ठितदेशजातानि पुष्पाणि वर्जयेत्। द्व्यहातीतानि पद्मानि पुराणानि त्यक्त्वा अन्यानि पुष्पाण्याहरेत् ।

स्तनदध्नं विंशतिकृत्वो दद्यात् उत्तमम् द्वादश कृत्वोमध्यमम् । अष्टकृत्वो अधमम् ।

एवं कृत्वा महाहविः प्रभूतं वा निवेद्य; पानीयाऽऽचमनं मुखवासं दत्वा; अनुलेपनादीनि कृत्वा; अष्टाक्षरमहामंत्रेण देवं प्रार्थयेत् । वैष्णवं, व्याहृतीश्च हुत्वा; अन्तहोमं जुहुयात् । ग्राम मालयं वा नृत्तगीतवाद्ययुतं प्रदक्षिणं कारयेत् ।

एतेनाऽश्वमेधफलं प्राप्नोति । पुत्रकामः पुत्रान्, धनकामो धनानि, प्रतिष्ठाकामः प्रतिष्ठां, जयार्थीविजयं, श्रीकामः श्रियं, च लभेत। सर्वकामावाप्त्यर्थं, सर्वदोषोपशांत्यर्थं, प्रायाश्चित्तार्थं च एतत् कुर्यात् । एतेनाऽर्चायां न्यूनं संपूर्णं भवति । आचार्यादिभ्यो दक्षिणां दद्यात्। एतं न शुश्रूषवे, नाऽभक्ताय, नाऽसंमताय नाऽसच्छिष्याय, नाऽसत्पत्रायदद्यात् । सुभक्ताय सुशिष्याय सुसंयतायैव दद्यात्। इत्याह मरीचिः ॥

अथातो यजमानः श्रद्धया प्रधानाचार्यपूर्वं पञ्च पदार्थिभ्यः पंचपरिचारकेभ्यश्च यथोक्तदक्षिणां सोदकं देवसन्निधौ दद्यात् । वैष्णवान् संपूज्य; नर्तकान् गायकान् परिचारकान् (अन्याँश्च) यथार्हं पूजयेत् । अत्रो-पयुक्तं सर्वं आचार्यायैव दद्यात् । हरेर्देवेशस्योत्सवे प्रवृत्ते तद्वास्त्वंगानां देवानां उत्सवं न कारयेत् । अन्यदेवोत्सवे प्रवृत्ते सौम्यमूर्त्ते हरि रुत्सेवे न दोषाय भवेत् नराः कल्याणं न कुर्युः ।

एवं यःकुरुते भक्त्या तस्यकायकृतंपापं तत्क्षणादेव नश्यति । दशपूर्वान् दशावरानात्मानं चैकविंशतिकं देवैरप्य(न)भिलक्ष्यं विष्णोः परमपदं नयेत् । तद्ग्रामवासिनां सर्वेषां व्याधयः शांतिं यांति प्रजावृद्धिश्च भवतीति विज्ञायते ।

## एकाहोत्सवः

अथैकाहोत्सवविधिं वक्ष्ये-राज्ञो ग्रामस्य वा यजमानस्यवा जन्मर्क्षे विष्णुपंचदिनेषु वा आरभेत । तद्दिनात्पूर्वं अंकुरानर्पयित्वा; संभारानाहृत्य; पूर्वेद्युर्नित्यार्चनावसाने देवंविशेषतोभ्यर्च्य; हविर्निवेद्य; पूर्ववत्प्रतिसरंबध्वा; तथैव शाययित्वा; देवमुत्थाप्य; प्रातस्संध्यार्चनान्ते नित्याग्निकुण्डे चुल्यां

वा अग्निं परिषिच्य; तीर्थदिन उत्सवाधिदेवत्यं तदालयगतदेवानां मूर्तिमंत्रैश्च आज्येन, आज्यमिश्रचरुणा वा, हुत्वा; पूर्ववद्बलंनिर्वाप्य; देवमलं कृत्य; यानमारोप्य; ग्राम मालयं वा सर्ववाद्यसमायुक्तं सर्वालंकारसंयुक्तं प्रदक्षिणं कारयित्वा; आलयमावेश्य; चूर्णसंस्कारं कृत्वा; चूर्णेन स्नाप्य; देवाभिमुखे तथैव पञ्चकलशान् सोपस्नानान्विन्यस्य; देवमभ्युक्ष्य; तच्छिष्टतोयेन चक्रमभिषिच्य; तच्चक्रमादाय; तीर्थं प्रविश्य; निमज्य; जनानां तीर्थदानं कृत्वा; अन्यद्वस्त्रंपरिधाप्य; आलयमावेश्य; देवं शुद्धोदकैस्संस्नाप्य; गन्धोदकैश्चाऽभिषिच्य; अभ्यर्च्य; महाहविः, प्रभूतं वा, निवेद्य; पानीयाऽऽचमनमुखवासं दत्वा; पूर्वस्थाने संस्थाप्य; अभ्यर्चयेदित्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे एककालोत्सवादिविधिर्नाम चतुष्पंचाशत्तमः पटलः ॥५४॥

# अथ पंचपंचाशत्तमः पटलः

## मत्स्याद्यवतारविधिः

अथ मत्स्याद्यवतारविधिं वक्ष्ये-ग्रामादौ यथोक्ते देशे पूर्वोक्तेषु विमानेषु मत्स्यकूर्मवाराह नारासिंह वामन जामदग्न्य राघव बलभद्रकृष्ण कल्किन इति ।

एतेषां दशावताराणां प्रत्येकं पूर्वोक्तोद्देशमानेन ध्रुवबेरं निश्चित्य; पश्चान्निर्देशमानं कुर्यात् ।

## मत्स्यस्यलक्षणम्

पूर्वं मत्स्यस्य देहलब्धांऽगुलेन भागाधिकं द्वितालं, नासाग्रात्पुच्छपर्यन्तं, नासाग्रान्नेत्रद्वयान्तं चतुरंगुलं, नेत्रात्कर्णंद्विमात्रं, तस्मात्पुच्छमूलं त्रिषडंगुलं, तस्मात्पुच्छाग्रं चतुरंगुलं, कुक्षिपुच्छविस्तारकर्म ग्रहवेदांऽगुलं, तत्तत्त्रिगुणपरिणाहंपुच्छमध्यविष्कंभम्, एकांऽगुलमग्रविस्तारं, षडंगुलं, मात्राद्यर्धमात्रं, पक्षायामविस्तारं, तस्यायामं सप्तांशंकृत्वा, द्व्यंशं त्र्यंशं वा पीठोत्तुंगंसप्तांगुलविस्तारं समवृत्तं पद्माकारम् । अत्रानुक्तं शिल्पशास्त्रोक्तवत् । एवं ध्रुवबेरं कारयेत् ।

कौतुकं विष्णुं चतुर्भुजमेव कारयेत् । तद्रूपं न कारयेत् ।

## अथ प्रतिष्ठा

अथ (अस्य) प्रतिष्ठाविशेषं वक्ष्ये - तदालयाभिमुखे पूर्ववद्यागशालांकृत्वा; तोरणाद्यैरलंकृत्य; पञ्चाग्नीन्पौण्डरीकाग्निं च कारयित्वा; तस्यप्रधानं पौंडरीकाग्निस्तस्मिन् हौत्रशंसनं कृत्वा; 'मत्स्यं विष्णुं भद्रं क्रीडात्मक' मिति चतुर्भिर्मंत्रैरावाह्य; निरूप्य; आज्याहुतीर्हुत्वा; 'यद्वयंसृष्ट' (वै०म०प्र०) मिति मंत्रेणाऽष्टोत्तरशतं हुत्वा; अन्यत्सर्वंप्रतिष्ठोक्तविधिना कारयेत् ।

नित्यार्चनायाध्रुवबेरं मूर्तिमंत्रैरष्टोपचारैरभ्यर्च्य, कौतुकं पूर्वोक्तषोडशोपचारमंत्रैः मूर्त्तिमंत्रान् संयोज्य अर्चयेत् । स्नपनोत्सवादीनिसर्वाणि पूर्वोक्तविधिना कारयेत् ।

## कूर्मस्य लक्षणं

अथ कूर्मस्य लक्षणं वक्ष्ये - देहलब्धांगुऽलेन एकांगुलं शिरोमानं, द्विमात्रंकण्ठं(कर्णं) एकांऽगुलं, त्र्यंगुलं हृदयान्तं, तत्समं नाभ्यन्तं, त्रिमात्रं पृष्ठान्तं, प्रकोष्ठं पाणितलं प्रत्येकमेकांऽगुलं, तथैवोरुजंघापादतलं, तस्याऽऽयामसमं वैपुल्यं, पञ्चवर्णसमायुक्तं, अंतश्वेतनिभं; तस्याऽऽयामं षड्भागंकृत्वा; द्विभागं त्रिभागं वा पीठोत्तुंगं वस्वंगुलविस्तारं पद्माकारं, शेषं युक्त्यैव कारयेत् ॥

## तत्प्रतिष्ठा

तस्य प्रतिष्ठाविशेषं वक्ष्ये - पूर्वोक्तयागशालामध्ये शय्यावेदिं परितः पंचाग्नीन् परिकल्प्य; गार्हपत्ये प्रधानाग्नौ हौत्रशंसनंकृत्वा; 'अकूपारं कूर्मरूपं विष्णुंवसुधाधर' मिति चतुर्भिः मंत्रैरावाह्य; तथैव जुष्टाकार स्वाहाकारौ कृत्वा; 'रायामीश' (वै०म०प्र०७) इति मंत्रेणाऽष्टाधिकशतमावर्त्यजुहुयात् । अन्यत्सर्वंविष्णोरिव समाचरेत् । कूर्मस्य कौतुकंविष्णुंचतुर्भुजमेव कुर्यात् । तद्रूपं नैवकारयेत् ।

नित्यार्चनायां तन्मूर्त्तिमंत्रैर्ध्रुवबेरमष्टोपचारैरभ्यर्च्य कौतुकबिंबं यथोक्तषोडशोपचारमंत्रैः तन्मूर्त्ति मंत्रान् संयोज्याऽर्चयेत् अन्यत्सर्वंसमानमिति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे मत्स्यकूर्मविधिर्नाम पंचपंचाशत्तमः पटलः ॥५५॥

# अथ षट्पंचाशत्तमः पटलः

अथ वराह स्त्रिविधो भवति आदिवाराहःप्रलयवराहो यज्ञवराह इति। एतेषां मुखं वराहस्येव मूर्धादिपादपर्यन्तंमध्यमदशतालेन नयेत्। मूर्ध्नः केशान्तं चतुर्मात्रं, तस्माद्दृगंतंभागं - उष्णातं रुद्रमात्रं कलायुतं कंठं कंठाद्धृदयांतंहृदयात् नाभ्यंतं नाभेर्मेढ्रमूलान्तंत्रयोदशांगुलम् ऊरुत्रयोदशाद्वयं जानुवेदांगुलं जंघोरुसमा तलं भागंतदायामं सप्तदशांगुलं नेत्रं त्र्यंगुलं भ्रूनेत्रतत्सृक्कंभूतांगुलं सृत्क्काद्वेदांगुलं हनु नेत्रांतरं त्रिमात्रं नेत्रायाम द्व्यंगुलं नेत्राच्छ्रोत्रं सप्तांगुलं कर्णतारं द्वियवं त्र्यंगुलं द्विगुणं तदायामम् एकांगुलविस्तारं मुखम् एकांगुलंनेत्रव्यासं नासामूलविस्तारं सप्तांगुलं तन्मध्येशरंगुलं नासाग्रंतालं भागार्धमात्रं श्रोत्रं तथैकांगुलं पुरव्यासं अधरंत्रिकलांगुलं निर्गमं मूलतारं भागंतदर्धं तस्याग्र विस्तारं, दंष्ट्रायामं द्विमात्रं कंठतारं नवांगुलं तथैव बाहुमूलविस्तारं मध्यम दशतालोक्तमार्गेण कारयेत् ॥

## आदिवराहस्य

आदिवराहं चतुर्भुजं शंखचक्रधरं सस्यश्यामनिभं नागेंद्रफणामणिस्थापितदक्षिणपदं रसातलादुत्क्रमणाय कुंचितवामपादं तदूरौमहींदधानं दक्षिणहस्तेन देव्याः पादौ गृण्हन्तं वामहस्तेन तामुपगूहन्तं मुखेनदेवींजिघ्रन्तं कृत्वा; तांमहीं प्रांजलीकृतहस्तां प्रसारितपादां पुष्पांबरधरांश्यामाभां किंचिद्देवंसमीक्ष्य व्रीलाहर्ष संयुक्तां सर्वाभरणसंयुतां देवस्यस्तनांतां नाभ्यंतांवा पंचतालेन मानेन कारयेत् ॥

## प्रलयवराहस्य

अथ वक्ष्ये प्रलयवराहं वामपादंसमाकुंच्य; दक्षिणं प्रसार्य; सिंहासने समासीनं नीलाभं चतुर्भुजं शंखचक्रधर मभयदक्षिणहस्तं ऊरुप्रतिष्ठितवामहस्तं पीतांबरधरं सर्वाभरणभूषितं कारयित्वा; तस्यदक्षिणे देवींमहीं पादंवास माकुंच्य, दक्षिणं प्रसार्य आसीनां श्यामाभां सर्वाभरणभूषितां उत्पलधरवामकरां आसनेनिहितदक्षिणकरां किंचिद्देवं समीक्ष्य विस्मयोत्फुल्ललोचनां कारयेत् ।

## यज्ञवराहस्य

अथ यज्ञवराहं श्वेताभं चतुर्भुजं शंखचक्रधरं वाम पादं समाकुंच्य दक्षिणंप्रसार्य सिंहासने समासीनं पीतांबरधरं सर्वाभरणभूषितं कारयेत् ।

तस्य दक्षिणे देवींश्रियं हेमाभां वामपादं समाकुंच्य दक्षिणंप्रसार्य आसीनां पद्मधरवामहस्तां आसने निहित दक्षिणहस्तां; वामपार्श्वेमहीं-देवींसस्यश्यामनिभां दक्षिणपादमाकुंच्य वामंप्रसार्याऽऽसीनां उत्पलधर-दक्षिणहस्तां आसने निहितवामहस्तां देवंकिंचित्समीक्ष्य विस्मयोत्फुल्ल लोचनांकारयेत् ॥

त्रयाणां वराहाणां तद्रूपंकौतुकं च बिंबं चतुर्भुजं वा कारयेत् ॥

## एषां प्रतिष्ठा

एषां प्रतिष्ठाविशेषं वक्ष्ये-पूर्ववद्यागशालां सर्वालंकार संयुक्तां तन्मध्ये शय्यावेदिं चतुर्दिशं तद्भित्तिसमविस्तारांपादहीनविस्तारां अर्धविस्तारां वा तत्तुरीयांशोत्सेधां तत्परितः पंचाग्नींश्च परिकल्प्य; सभ्ये प्रधानाग्नौ हौत्रशंसनं कृत्वा 'वाराहं वरदं महीधरं वज्रदंष्ट्रिण' मित्यादिवराहस्य; 'गांपृथुगामुर्वी' मिति मह्याः; 'प्रलयवराहं प्रलयहरं भूरिशह्वं जगत्रायक' मिति प्रलयवराहस्य; देव्याः पूर्ववत् । 'यज्ञवराहं देवमयं यज्ञेशं यज्ञवर्धन' मिति यज्ञवराहस्य; श्रीभूम्योः; पूर्ववत् ।

एवमावाहनजुष्टाकारस्वाहाकारांश्च कृत्वा; आदि वराहस्य प्रधानाग्नौ 'क्ष्मोमक' (वै०म०प्र०८) मिति मंत्रेणाऽष्टोत्तरशतं हुत्वा; प्रलयवरहस्य 'स्वयमादि' (वै०म०प्र-८) रित्यष्टोत्तरशतं हुत्वा; यज्ञवराहस्य 'यं यज्ञै' (वै०म०प्र८) रिति मंत्रेणाऽष्टोत्तरशतं जुहुयात् । एष विशेषः अन्यत्सर्वं-समानम् ।

त्रयाणां ध्रुवबेराणि तत्तन्मूर्त्तिमंत्रैरष्टोपचारैरभ्यर्च्य; पश्चात्कौतु-कानितत्तन्नाम संयोज्य; षोडशोपचारैरभ्यर्चयेत् । स्नपनोत्सवादीनि सर्वाणि पूर्वोक्तवत्कारयेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे वराहविधि-प्रतिष्ठानाम षट्पंचाशत्तमः पटलः ॥५६॥

# अथ सप्तपंचाशत्तमः पटलः

## नरसिंहलक्षणं - तद्द्वैविध्यम्

अथ नारसिंहविधिं वक्ष्ये - नारसिंहोद्विविधो गिरिजो स्थूणजश्चेति। तयोर्मुखंसिंहस्येव अन्यन्नराकारम्। तस्य मूर्धादि पादपर्यंतं सविंशतिशतांगुलं, शिरो मात्रात्रयं ततो नेत्रसूत्राऽन्तं षण्मात्रं तस्माद्घोणं चतुर्मात्रं तस्मादास्यं द्विमात्रं अधरंद्व्यंगुलं नेत्राद्भ्रूः मात्राऽऽयता शेषं ललाटान्तं तारं, नवांगुलंदृगंतरम्, अध्यर्धनवांगुल (त्रि) द्विमात्रं नेत्रायामं तस्यार्धविस्तारं कनीनिकाया मविस्तारं यवं पंचद्वयविस्तारायामं सितमंडलम् मध्येज्योतिर्यवं दृष्टिरष्टांशंतारं पार्श्वयोरुपरिष्ठाच्छ्वेतं शेषंयवत्रय मूर्ध्ववर्म तथा यवतारं अधोगतं यवद्वयं ततो भागायते तत्पुच्छानने भ्रुवौ द्वादशांगुलतारं नेत्रात्सूत्रसमं मुखम् आस्यतारं दशांगुलंविवरं चतुरंगुलविस्तारं शेषंवर्त्तुलम् उन्नताश्चत्वारः पुरतोदंता अर्धमात्रविस्तृतायता' जिह्वा षडंगुलायामा द्व्यंगुल विस्तृता भागसृक्कात् कपोलांतं घोणं चतुष्कलं कर्णमूलां तदधस्तात्कपोलं षडंगुलं अपांगात्कर्णमूलांतं पंचांगुलं कलाकर्णमूलं कर्णं त्रिमा त्रार्धायामं चतुर्यवं कलातारं सूकरकर्णवत् रौद्रवक्त्रम् सटायुतं तीक्ष्णेक्षणं अन्यांगायामविस्तारं वराहस्योक्तमार्गेण कारयेत् ॥

## गिरिजस्य लक्षणं

नृसिंहंदेवं सिंहासने पादं दक्षिणंप्रसार्य; वाममाकुंच्य; समासीनं चतुर्भुजं शंखचक्रधरं कुंदेंदुधवलप्रभं रक्तवस्त्रधरं सर्वाभरणभूषितं करण्डिकामकुटयुत, णकरमभयंदानंवा, वामंकट्यवलम्बितमूरुस्थं वा, कारयेत्। तद्दक्षिणे देवीं श्रियं वामपादंसमाकुञ्च्य, दक्षिणं प्रसार्य आसीनां पद्मधरवामहस्ताम्, आसने निहितदक्षिणहस्तां सुवर्णाभां सर्वाभरण भूषिताम्, वामपार्श्वे महींदेवीं दक्षिणं पादमाकुंच्य वामंप्रसार्याऽऽसीनामुत्पलधरदक्षिणहस्तां आसने निहितवामहस्तां सस्यश्यामाभां सर्वाभरणभूषितां कारयेत्। अथवा नृसिंहमासनस्योर्ध्वे वामंपादं प्रसार्यअन्यमाकुंच्य; तज्जानूर्ध्वे दक्षिणहस्तं गजहस्तवत्प्रसार्य; वाममूरौसन्यस्य; आसीनंशंखचक्रधरं देवीभ्यां सहितं रहितं वा कारयेत्।

केवलं नृसिंहं देवं पद्मपीठोपरिष्ठात् द्वौपादौ व्यत्ययेनन्यस्य; उत्कुटिकासनेन आसयित्वा ऊरूमध्ये वस्त्रेणाबध्य; सर्वाभरणसंयुक्तं चतुर्भुजं शंखचक्रधरं अन्यहस्तौ जानूपरिष्ठात्प्रसारितौ च कारयेत् ।

## स्थूणजस्य लक्षणम्

अथ स्थूणजं नारसिंहं सोपाने सिंहासने वामंपादमाकुंच्य; अन्यं-प्रसार्य; समासीनं चतुर्भुजं शंखचक्रधरं अभयदानदक्षिणकरं ऊरुप्रसारित-वामहस्तं ससटस्कन्ध संयुक्तं तीक्ष्णदंष्ट्रेक्षणं भयानकं श्वेताभं रक्तांबरधरं सर्वाभरणसंयुक्तं कारयेत् ॥

तस्यकोपशांत्यर्थं पार्श्वयोर्दक्षिणवामयोः श्रीमत्यौ, प्रह्लादं वंदमानं च कारयेत् । दक्षिणे नारदं वीणाहस्तं भित्तिंपार्श्वे परितःप्रागाद्यैशानान्त मिंद्रादिलोकपालान्वंदमानाँश्च कारयेत् ।

## यानकनरसिंहस्य

अथ यानकं नारसिंहं वीशस्कंधोपरिष्ठात्, शेषोत्संगेसमासीनं तत्फणैः पञ्चभिः छन्नमौलिं चतुर्भुजं शंखचक्रधरं सर्वाभरणभूषितं कारयेत् ।

अथवा अष्ठाभि र्द्विरष्ठाभिर्वा भुजैर्युक्तं भयानकं दैत्यवधानुरूपं नृसिंहं स्थौणं कारयेत् ।

## तत्प्रतिष्ठा

अथ नारसिंहप्रतिष्ठाविशेषं वक्ष्ये-पूर्ववद्यागशालां शय्यावेदिं पंचाग्नींश्च परिकल्प्य; आहवनीये प्रधानाग्नौ हौत्रशंसनं 'नारसिंहं तपोनाथं महाविष्णुं महाबल' मिति गिरिजस्य, देव्योःपूर्ववत् । 'नारसिंहं तपोनाथं भक्तवत्सलं अनंतबल' मिति स्थूणजस्य, देव्योः लोकपालाना मन्येषां च पूर्ववदावाहनं 'सामवेदं शैषिकं द्विजराज' मिति वाहानस्य; 'प्रह्लादं दैत्यपतिं विष्णुभक्तं महाबल' मिति प्रह्लादस्य आवाहनजुष्ठाकारस्वाहा कारान् कृत्वा; 'यो वा नृसिंह' (वै०म०प्र०७) इति मंत्रेणाऽष्टोत्तरशतमावर्त्य हुत्वा; शेषंसर्वं प्रतिष्ठोक्तविधिना कारयेत् । ध्रुवबेरं तन्मूर्त्तिमंत्रैरष्टोपचारैरभ्यर्च्य; कौतुकबेरं पूर्वोक्तषोडशोपचारमंत्रैः तन्नाम संयोज्य; अर्चयेत् । स्नपनोत्सवादीनि विष्णोरिव समाचरेत् ।

## वामनलक्षणम्

अथ वामनं पञ्चतालमितं द्विभुजं छत्रदंडधरं कौपीनवाससं शिखापुस्तकमेखलोपवीतकृष्णाजिनसमायुतं पवित्रपाणिं बालरूपं ब्रह्म-वर्चस्विनं कारयेत् ।

मूर्ध्नः केशांत मात्रार्धं केशान्तात्दृगंतं यवद्वयाधिक त्रिमात्रंतस्मा-त्पुटांतं सयवत्र्यंगुलं तत्समंहन्वन्तंगलं द्वियवाधिकद्विमात्रं तस्माद्हृदयं द्वियवाधिकषण्मात्रं हृदयान्नाभ्यन्तं तत्समं नाभेर्मेढ्रमूलान्तं तत्समं तस्मादूरुस्सूर्यमात्रो जानुद्व्यंगुलंद्वादशांगुलाजंघातलंवलिंद्विमात्रां(त्रं) तला यामं द्वादशांगुलं मुखस्यतारं दशांगुलंयवोनकलांगुलंनेत्रं नेत्राद्भ्रूस्तावत् केशांतंशिरोभागं द्वियवद्विविस्तारं पुरोगतंदृशोस्तारं कारयेत् । षड्भिः षोडशभिः र्यवोनं कोलकं नेत्रांतरं श्रोत्रंदृशौ च द्वियवतारं पंचमात्रं श्रोत्रविस्तृतं कला तत्त्रिगुणायामं नासाग्रंमात्रार्धं विस्तृतानासाग्रविपुलं-मात्राद्वयमर्धं तदर्धंमध्यमूलं त्रियवांगुलमुन्नतनासाग्रं गोजीमूलाद्वि-यवोनद्व्यंगुलतारमधरं तदर्धतद्द्विगुणदीर्घंदीर्घाद्द्विगुणमास्य मुत्तरोष्ठ-विशालं यवद्वयं पालीपंचषड्यवमधरोष्ठमधोहनुष्षड्यवाकला कंठाद्धनु पर्यंतं निर्गम मष्टांगुलविशालं हिक्कातस्मात् द्विसमांगुलं दीर्घदोर्दशांगुलं प्रकोष्ठंमणिबंधात्तलं भागं तस्मान्मध्यांगुली समाधस्वतृतीयवाधिकं नखायामं अंगुलमुन्नतं दीर्घ प्रदेशान्यनामिके कलायते अंगुष्ठकनिष्ठायाम-विस्तृते नवाष्ट समषट्पंचयवंतारक्रमादंगुष्ठादि कनिष्ठांतांगुलीनां कलाद्वयं तस्यविपुलं तस्यबहुलं हव्यवाहनांगुलमग्रतारं त्रिभागात् द्विभागं नखविस्तृतं स्वितातृकं नखायामं त्रिमात्रार्धचतुर्मात्रं षडंगुलं षड्यवं भागं क्रमान्मणिबंधं प्रकोष्ठं कोर्परं बाहुमूलं अष्टादशांगुलं वक्षस्थलस्य विपुलं मुखंमध्यं कलामुखं श्रोणीतारं षोडशांगुलं मुखमंगुलोनमूरुमूलं जानुविशालं समांगुलं जंघातारंपंचार्धांगुलं नलकाविशाल सार्धरुद्राक्षांगुलमग्रविस्तारं पंचांगुलं चतुर्यवंकलायतांगुलं तर्जनीसमायतादीर्घार्धविस्तृतांगुष्ठमंगुलीनां विपुलंशेषं युक्त्यैव कारयेत् ।

## त्रिविक्रमस्य

त्रिविक्रमस्त्रिधाप्रोक्तः लोकेषु त्रिपादन्यासात् भूलोकाक्रमणार्थं जानुमात्रं; अंतरिक्षलोकाक्रमणार्थं नाभिमात्रं; स्वर्गलोकक्रमणार्थंललाटमात्रं

च; ऊर्ध्वपादोभवेत्। एतेषु यथेष्टं रूपं निश्चित्य; पूर्ववच्चतुर्विंशतिताल-विभागेन देव मष्टबाहुं चतुर्बाहुं, अष्टभुजे दक्षिणहस्तैः चक्रशराऽसिधरं, वामहस्तैः शंखशार्ङ्ग हलमुसलधरं; चतुर्भुजे दक्षिणेन चक्रधरं, वामेन-शंखंधरं, अभयदानदक्षिणहस्तं, प्रसारितपादेन प्रसारितवासहस्तं, स्थित-दक्षिणपादं प्रसारितोद्धृतवामपादं श्यामाभं रक्तांबरधरं सर्वाभरणभूषितं तत्पृष्ठेकल्पद्रुमम्, इन्द्र, छत्रम् उभयोः पार्श्वयोः जवन जलेशौ चामरधारिणौ तदूर्ध्वे दक्षिणे दिवाकरम् अदक्षिणे निशाकरं तथासनकसनत्कुमारौ च कृत्वा; प्रसारितपादस्योर्ध्वभागे ब्रह्माणं तत्पादं प्रगृह्यहस्ताभ्यां प्रक्षालयंतं, कृत्वा; तत्स्त्रोतसि गंगां श्वेताभां नाभेरूर्ध्वं शरीरभागां प्रांजलीकृत हस्तां च कारयेत् ।

पादपार्श्वे नमुचिं भ्रममाणं वामपार्श्वे शुक्रं विघ्नकरं तं मुष्टिनाप्रहरंतं गरुडं, दक्षिणे वामनं तत्पार्श्वे बलिंहेमाभं सर्वाभरणभूषितं सपत्नीकम् हर्षेणकराभ्यांहेमकलशमुद्धरंतं तस्योर्ध्वेजांबवंतं भेरीताडनपरंच कारयेत्। (अत्रानुक्तं) भृगूक्तविधिना त्रैविक्रमस्यकौतुकंचतुर्भुजमेव कारयेत् ।

## तयोः प्रतिष्ठा

वामनत्रिविक्रमयोः प्रतिष्ठाविशेषं वक्ष्ये-पूर्वोक्तयागशालामध्ये शय्यावेदिं परितश्चाग्नीन् पौंडरीकाग्निं च कारयेत् । एकाग्निविधिना-कारयेदिति केचित्। एककुंभे समावाह्य; एकवेद्यां शाययेत्। अन्वाहार्ये प्रधानाग्नौ हौत्रशंसनं 'त्रिविक्रमं त्रिलोकेशं' विष्णुं सर्वाधारमिति त्रिविक्रमस्य। 'वामनं वरदं विष्णुं काश्यपम् अदिति प्रिय' मिति वाम। अन्यदेवानां तत्तन्मूर्त्तिमंत्रैरावाहनादीनि कारयेत् । 'योवात्रिमूर्त्ति' (वै०म०प्र०८) रिति मंत्रेणाऽष्टोत्तरशतंहुत्वा; अन्यत्सर्वं हरेरिव कारयेत्। नित्यार्चनायां वामनं त्रिविक्रमं च तत्तन्मूर्त्तिमंत्रैरष्टोपचारैरभ्यर्च्य; कौतुकं पूर्ववत् षोडशोपचारमंत्रैः मूर्तिं मंत्रं संयोज्य अर्चयेत्। स्नपनोत्सवादीनि पूर्ववत्कारयेत्।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे नारसिंह वामन त्रिविक्रमविधिर्नाम सप्तपंचाशत्तमः पटलः ॥५७॥

# अथ अष्टपंचाशत्तमः पटलः

## जामदग्न्यस्य लक्षणम्

जमदग्निरामं मध्यमंदशतालमितं द्विभुजं रक्ताभं श्वेतवस्त्रधरं दक्षिणेनहस्तेन परशुधरम् उद्देश्यवामकरं जटामकुटधरं सोपवीतं सर्वाभरणभूषितं स्थितमेव कारयेत् । कौतुकं तद्रूपं चतुर्भुजं विष्णुं वा कारयेत् ॥

## तत्प्रतिष्ठा

अथ प्रतिष्ठाविशेषं वक्ष्ये - पूर्वोक्तयागशालामध्ये शय्यावेदिंपरितः पश्चाऽग्नींश्च परिकल्पय; आहवनीये प्रधानाग्नौ हौत्रं प्रशंस्य, 'रामं ऋषिसुतं विष्णुं परशुपाणि' मिति आवाह्य आहवनीये आज्याहुतीर्हुत्वाः 'विष्णुर्वरिष्ठ' (वै०म०प्र०८) इति मंत्रेणाऽष्टोत्तरशतमावर्त्यहुत्वा अन्यत्सर्वपूर्ववदाचरेत् । नित्यार्चनायां ध्रुवबेरं तन्मूर्त्तिमंत्रैरष्टो पचारैरभ्यर्च्य, कौतुकं पूर्ववत् षोडशोप चारमंत्रैः संयोज्याऽर्चयेत् । स्नपनोत्सवादीनि विष्णोरिव समाचरेत् ॥

## राघवस्य लक्षणम्

अथ राधवं रामं स विंशतिशतांऽगुलमितं द्विभुजं त्रिनतस्थितं दक्षिणेन हस्तेन शरधरं वामेन चापधरं श्यामाभं रक्तांबरधरं किरीटाद्या-भरणाऽन्वितं कारयेत् । अभंगसमभंगमतिभंगमिति त्रिविधं नतमान-माभंगस्य त्रिमात्रं समभंगस्य वेदांगुलमतिभंगस्य शरांगुलं एतेषां पादांगुष्ठांतरमष्टादशांगुलं विंश्त्यंगुलं क्रमेण तत्त्रिभागैक पाष्ण्र्यंतरमा-पादतलमस्तकं मध्यसूत्रस्य मूर्ध्नः पार्श्वे वामनेत्रसितमंडले वामनासापुटेऽ धराहनोर्वामपार्श्वे सव्यस्तनस्च दक्षिणपार्श्वे नाभेर्दक्षिणे वामोरुदक्षिणपार्श्वे वामांघ्रिपार्श्वे प्रलंबयेत् । एतदाभंगसूत्रं समभंगस्य मुखंत(थो) च्चोक्तं वामस्तनपीठपार्श्वे नाभिमध्ये ऊरुमध्ये पाष्ण्र्य मध्येतु प्रलंबयेत् एतत्समभंगसूत्रं । अतिभंगस्य मुखं पूर्ववन्नाभे र्वामेवामोरुमध्ये पाष्ण्र्यंतरे च लंबयेत् एतदतिभंगसूत्रम् । शेषं पूर्ववत् । अधिकात् हिक्कासूत्रात् स्तनं द्विमात्रं सूत्रा न्नाभि द्विमात्रं सूत्रान्मात्रार्थं जानुनी प्रमते (प्रमिति मति) भंगे अन्यसूत्रनिम्नं युक्तितः कारयेत् ।

दक्षिणहस्तस्य तलाग्रं नाभिदघ्नं श्रोणीदघ्नं वामकोर्परांतरं पार्ष्ण्यंतरसमं वामहस्तं सचापम् उष्णीषद्वयस्योन्नतं तस्य नीव्रं मुखद्वलयं मौलिपार्श्वे धनुस्थितं राघवं कारयेत् ।

सीतां देवस्य बाहुसमां देवस्योननवार्धतालेन मानेनाभंगवशा द्रुक्माभां शुकपक्षनिभांबरां सर्वाभरणभूषितां धम्मिल्लबंधयतां करंटिकामकुटयुतां वामहस्ते नोत्फुल्लपद्मधरां प्रसारितदक्षिणहस्तां देवस्यदक्षिणपार्श्वे किंचिद्देवं समीक्ष्य विस्मयोत्फुल्ललोचनां कारयेत् ।

कटकाग्रस्योत्सेधं स्तनाक्षसमं नाभेर्मणिबंधांतरं सार्धत्रयोदशांगुलं पार्श्वमध्यबाह्वन्तरं सप्तांगुलं प्रसारित करतलमध्योर्वंतरं द्विमात्रं तच्छ्रोणी-बंधांतरं चतुरंगुलं पार्श्वमध्यं बाह्वन्तरं रसांगुलं शेषं युक्त्यैव कारयेत् ।

वामपार्श्वे सौमित्रिं देवस्य कर्णांतं बाह्वंतंवा कनिष्ठदशतालेन समभंगवशान्मुखमध्यर्धार्कांगुलम् एव(मि) मष्टाननं भागचतुष्टय मन्यत्सर्वं पूर्ववदुद्दिष्ट मुद्बंध कुंतलं युवराजभूषणान्वितं द्विभुजं रामवत् शरचापधरं सुवर्णवर्णं श्यामांबरधरं समभंगान्वितं कारयेत् ।

हनूमंतं प्रमुखे किंचिद्दक्षिणमाश्रित्यस्थितं देवस्य स्तनांतं नाभ्यंतं ऊरुमूलांतं वा सप्ततालमितं द्विभुजं दक्षिणेन हस्तेन आस्यं वामेन स्ववस्त्रंच पिदधानं किंचिदूर्ध्वाननं कारयेत् । मूर्ध्नः कला भ्रूअतं तस्माद्दक्कलामात्रत्रयं नासिकांतं तथाधरं मात्रं कंठं दशांगुलं हृदयं हृदयान्नाभ्यंतं नाभेर्मेढ्रान्तं च तस्मादूर्वंतं विंशतिमात्रं जानुं द्व्यंगुलंजंघासप्तदशांगुलं कलातलं तदायामं दशांगुलं बाहुं विंशत्यंगुलं तच्चतुर्थैरहीनं प्रकोष्ठतलं पादायामसमं शेषांगंनरस्योक्ततारान्मात्रोनम् ऊरोर्बाह्वोःकटिमध्येश्रोण्यां च कलोनं पादमात्राविहीनं शरार्धांगुलहीन मंगुलिद्वियवहीनं अत्रानुक्तं सर्वं युक्त्यैव कारयेत् ॥

## राघवस्य प्रतिष्ठा

राघवस्य प्रतिष्ठा विशेषं वक्ष्ये-पूर्वोक्त यागशालामध्ये शय्यावेदिं परितः पंचाग्नींश्च परिकल्प्य; सीतालक्ष्मणसंयुक्तं देवं हनुमतासार्धं एककुंभे समावाह्य; एकवेद्यां सौमित्रेः पृथक् शयनं वेद्यधस्ताद्धनूमतःशयनं च संकल्प्य; अन्वाहार्ये प्रधानाग्नौ हौत्रंप्रशंस्य; 'रामं दाशरथिं वीरं काकुत्स्थ' मिति राघवस्य, 'सीता मयोनिजांलक्ष्मीं वैदेही' मिति सीतायाः, 'रामानुजं

सौमित्रिं लक्ष्मीवर्धनं लक्ष्मण' मिति लक्ष्मणस्य, 'कपिराजं हनूमंतं शद्धराशिं महामति' मिति हनूमतश्चावाहनादीनि कारयेत्। 'रायामीश' (वै०म०प्र०७) इति मंत्रेणाऽष्टोत्तरशतं हुत्वा, अन्यत्सर्वं पूर्ववत्कारयेत् ।

मत्स्याद्यवताराणां रूपभेद एव शक्तिभेदो नैवभवेत् तस्मात्-प्रतिष्ठादीनि सर्वाणि विष्णोरिव समाचरेत् ।

अवताराणां ध्रुवबेरंकौतुकं च प्रत्येकं कर्त्तुमशक्तश्चेत्, पूर्वोक्त-एकबेरक्रमेण षण्मानसहितं शिलाजंलोहजं वा कृत्वा; अर्चास्थाने ब्राह्मपदे ध्रुवस्थाने दैविके वा प्रतिष्ठाप्य; षोडशोपचारैरर्चयेदित्येके ।

लक्ष्मणस्य पृथक्प्रतिष्ठाचेत् राघवस्योक्तक्रमेण सीतायाः श्रीदेव्या इव भरतशत्रुघ्नयोश्च रामलक्ष्मणयो रिव सर्वंसमाचरेत् । मूर्त्तिमंत्र एव विशेषः । तथा हनूमतो वायोरिव प्रतिष्ठामाचरेत् ।

नित्यार्चनायां राघवस्य तन्मूर्त्तिमंत्रैरष्टोप चारैरभ्यर्च्य; कौतुकस्य पूर्वोक्त षोडशोपचारमंत्रै स्तत्तन्मूर्त्तिमंत्रान् संयोज्याऽर्चयेत् ॥

## बलरामस्य

अथ बलरामं मध्यमं दशतालमितं द्विभुजं त्रिनतस्थितं दक्षिणहस्तेन मुसलधरं वामेनहलधरं श्वेताभं रक्तवस्त्रधरं उद्वंधकुंतलं दक्षिणे रेवतींदेवीं पद्मकिंजल्क वर्णां पुष्पांबरधरां दक्षिणेन हस्तेन पद्मधरां प्रसारितवाम हस्तां कारयेत् । तद्रूपं कौतुकं विष्णुं चतुर्भुजं वा कारयेत् ॥

## तत्प्रतिष्ठा

अस्य प्रतिष्ठाविशेषं वक्ष्ये - पूर्वोक्तयागशालामध्ये शय्यावेदिं परितः पंचाग्नींश्च परिकल्प्य; आहवनीये प्रधानाग्नौ हौत्रं प्रशंस्य, 'रामं यदुवरं विष्णुं हलायुध' मिति रामस्य, 'रेवती मिंदिरां लक्ष्मीं रामप्रिया' मिति रेवत्याश्च आवाहनादीनि कृत्वा; 'रायामीश' इति मंत्रेणाऽष्टोत्तरशतंहुत्वा; अन्यत्सर्वं पूर्ववत्कारयेत् । नित्यार्चनायां ध्रुवबेरं तन्मूर्त्तिमंत्रै रष्टोपचारै रभ्यर्च्य; कौतुकंषोडशोपचारमंत्रैस्तन्मूर्त्तिमंत्रान् संयोज्याऽर्चयेत् । स्नपनोत्सवादीनि पूर्वोक्तवत्कारयेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे रामत्रयविधिर्नाम अष्टपंचाशत्तमः पटलः ॥५८॥

# अथ एकोनषष्टितमः पटलः

## कृष्णस्य

अथ कृष्णस्यलक्षणं वक्ष्ये - मध्यमं दशतालमितं द्विभुजं श्यामाभं रक्तवस्त्रधरं सर्वाभरणभूषितं उद्बंधकुंतल दक्षिणेन हस्तेन क्रीडायष्टिधर मुध्द्दतवामकूर्परं हिक्कासूत्रादधोदशांगुलं दक्षिणकरकटकाग्रं नाभिदघ्नं वा तस्मात् षट्सप्ताऽष्टदशांऽगुलंनिम्नं, नासाग्रात् पादतलान्तं हिक्कासूत्राद्वामेंगुलं सूत्रात्तस्यार्धंहृदयं नाभेर्दक्षिणे कलांगुलं मेढ्रंभागं वामेजान्वंतं जगती यवं सूत्रान्मात्रत्रयं पार्ष्ण्यंतरम् एवं समभंगसूत्रमन्यत्सर्वम् राघवस्योक्तवत् ।

दक्षिणे रुक्मिणीदेवीं हेमाभां धम्मिल्लकुंतलयुतां वा प्रसारितदक्षिणहस्तां, सपद्मवामहस्तां, वामपार्श्वे सत्यभामां श्यामाभां धम्मिल्लकुंतलयुतां सोत्पलदक्षिणहस्तां प्रसारितवामकरां सर्वाभरणसंयुक्तां कारयेत्। वामपार्श्वे गरुडं प्रांजलीकृत्यस्थितं कारयेत्। देवस्य दक्षिणहस्त लीलायष्टियुतं वामं सशंखं वा कारयेत् । तद्रूपंकौतुकं विष्णुं चतुर्भुजं वा कारयेत् ॥

नवनीतनटस्य वामपदंसमाकुंच्य स्थितं दक्षिण मुत्तानकुंचितं, दक्षिणहस्तमभयं नवनीतयुतंवा वामंप्रसार्य अनुत्तानं सर्वाभरण भूषितं अंबरहीनं अंबराधारयुतं नवनीतनृत्तरूपं कारयेत् ।

एवमेव कालियाऽहिफणोपरिस्थितं दक्षिणकरं सपताकं वामकरेणाऽहिपुच्छं संगृह्य नृत्यन्तं कारयेत्। कृष्ण रूपाण्यसंख्यानि वक्तुं न शक्यानि तस्माद्यथेष्टरूपं कारयेत् ॥

## तत्प्रतिष्ठा

अस्य प्रतिष्ठाविशेषं वक्ष्ये - पूर्वोक्तयागशालामध्ये शय्यावेदिं परितःपंचाग्नीन् पौण्डरीकाग्निं च संकल्प्य; पौंडरीके प्रधानाग्नौ हौत्रंप्रशंस्य, 'कृष्णं पुण्यं नारायणं त्रिदशाधिप' मिति कृष्णस्य; 'रुक्मिणीं सुदरीं देवीं रमा' मिति रुक्मिण्याः; 'सत्यभामां सतीं सव्रतीं क्षामा' मिति सत्यभामायाः; गरुडस्य पूर्ववत्, 'नवनीतनट कृष्णंदेवकीसुतं बालरूप' मिति नवनीतनटस्य

'कालियमर्दनं कृष्णंगोपालं वटपत्रशायिन' मिति कालियमर्दनस्य; अन्येषां रूपाणां तत्तत्कर्मनाम संयोज्य; आवाहनादीनि कारयेत् । 'सत्यस्सत्यज्ञ' (वै०म०प्र०७) इति मंत्रेणाऽष्टोत्तरशत मावर्त्य हुत्वा; शेषंपूर्ववदाचरेत् । नित्याचनाया ध्रुवबेर मष्टोपचारैः कौतुकंषोडशोपचारमंत्रैः संयोज्याऽर्चयेत् । स्नपनोत्सवादीनि पूर्ववत्कारयेत् ॥

रुक्मिणीसत्यभामयोः पृथक् प्रतिष्ठाचेत् श्रीभूम्योरिव कारयेत् ॥

## कर्किणः

कर्किणं मध्यमदशतालमितम् अश्वाकारं मुखम् अन्यंनराकारं च चतुर्भुजं शंखचक्रखड्गखेटकधरं उग्ररूपं भेयानकं एवं देवरूपं कृत्वा, तद्रूपं कौतुकं विष्णुरूपं चतुर्भुजं वा कारयेत् ॥

## तत्प्रतिष्ठा

अस्य प्रतिष्ठाविशेषं वक्ष्ये - पूर्वोक्तयागशालामध्ये शय्यावेदिं परितःपंचाग्नीन् पौंडरीकाग्निं च संकल्प्य; पौंडरीके प्रधानाग्नौ हौत्रंप्रशंस्यः 'कर्किणं विष्णुं कामरूपं संहारात्मक' मित्यावाहनादीनि कृत्वा; 'धूर्नोवहन्ता' (वै०म०त्र०७) मित्यष्टोत्तरशतंहुत्वा; अन्यत्सर्वं समानं कुर्यात् । नित्यार्चनायां पूर्वोक्तार्चाक्रमेणमूर्तिमंत्रं संयोज्याऽर्चयेत् । अवताराणां पूर्ववत्त्रेताग्नि-विधानेन एकाग्निविधानेन वा अग्नीन् संकल्प्य; तत्प्रधानाग्नौ हौत्रशंसनादीनि कारये दित्येके ॥

## आदिमूर्तिविधिः

अथ आदिमूर्त्तिविधिं वक्ष्ये-अनन्तोत्संगे समासीनं दक्षिणंप्रसार्य वाममाकुंच्य दक्षिणहस्त मनंतोत्संगेन्यस्य वामं वामजानूर्ध्वे प्रसार्य चतुर्बाहुं शंखचक्रधरं फणाभिः सप्तभिःपञ्चभिर्वा छन्नमौलिं प्रवालाभं सर्वाभरणभूषितं कृत्वा; तद्दक्षिणे भृगुं वामे मार्कंडेयम् एकजानुक्रमेणाऽऽसादयित्वा, दक्षिणे ब्रह्माणं वामे शंकरं च कृत्वा; तद्रूपं कौतुकं च कृत्वा प्रतिष्ठोक्तक्रमेण प्रतिष्ठांकारयेत् । 'आदिमूर्त्ति ममितमहिमानं अत्यंताद्भुतं सर्वाधार' मित्यादिमूर्त्तेः नागराजस्य पूर्ववदावाहनादीनि कारयेत् अन्यत्सर्वं पूर्ववदाचरेत् ॥

### अनन्तशयानस्य

अनंतभोगशयने प्रतिष्ठाचेत् अनंतशयनादि पञ्चमूर्त्तिमंत्रै रावाहनादीनि कारयेत् । पुष्पन्यासकाले आसीनमेवस्मरेत् । सुसंप्रबुद्धं देवेशं जाग्रद्भावेन संयुक्तं हरिं प्रणवेनोत्थाप्य; पादपार्श्वे पञ्चायुधांश्च तत्तन्मूर्त्ति मंत्रैस्समर्चयेत् । अनन्तस्यफणापार्श्वे 'अनन्तं नागराजं सहस्रशीर्षं शेषं विष्णुसख' मिति मूर्त्तिमंत्रैरर्चनं, पुष्पन्यासं कुर्यात् । कौतुकं विष्ण्वादि-पंचमूर्त्तिमंत्रैः पूर्ववदर्चयेत् । उद्वासनकाले मंत्रेणदेवेशं शाययेत् । भोगशयने द्वाराभ्यन्तरे जयां विजयांच समर्चयेत् अन्यत्सर्वं पूर्ववदाचरेदित्याह मरीचिः ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकलपे कृष्ण कल्क्यादि-मूर्तिविधिर्नाम एकोनषष्टितमः पटलः ॥५९॥

# अथ षष्टितमः पटलः

### अथ मानुषवासुदेवस्य

अथ मानुषवासुदेवमायताश्रे विमाने मध्यमदशतालमितं द्विभुजं शंखचक्रधरं, दक्षिणे रुक्मिणींदिर्वी, तद्दक्षिणे हलमुसलधरं बलभद्रं, तद्दक्षिणे प्रद्युम्नं द्विभुजं, क्षुरिकाधरदक्षिणहस्तं, कट्यवलंबित वामहस्तं, तद्दक्षिणे विरिंचं चतुर्बाहुंचतुराननं, देवस्य वामपार्श्वे अनिरुद्धं द्विभुजं खड्गखेटकधरं, तद्वामे सांबं द्विभुजं दानदक्षिणकरं, तद्वामे गरुडं च कारयेत् । तेषां वर्णांऽबराऽऽभरणानि भृगूक्त विधानेन कारयेत् । देवान् एतान् स्थितानेव संस्थाप्य, तद्रूपंकौतुकं कारयेत् । अथवा विष्णुं चतुर्भुजम् एवं संस्थापयेत् ॥

### दैविकवासुदेवस्य

दैविकंवासुदेवं सिंहासनेसमासीनं चतुर्भुजं शंखचक्रधरं श्रीभूमीभ्यां सहितं तथा दक्षिणवामयोः पूर्वोक्तान् देवान् बलभद्रस्य दक्षिणे देवींरिवर्ती, प्रद्युम्नस्य रोहिणीं अनिरुद्धस्योषां सांबस्य इंदुकरीं च सहैव स्थापयेत् । एतेषां कौतुक बिंबानि पूर्ववत् कारयेत् ॥

## तत्प्रतिष्ठा

एतेषां प्रतिष्ठाविशेषं वक्ष्ये-पूर्वोक्तयागशालामध्ये शय्यावेदिं परितः पञ्चाग्नीन् पौण्डरीकाग्निं च कृत्वा; अन्वाहार्यस्य दक्षिणे च आवसथ्य-स्योत्तरेचौपासनाग्निकुण्डे कृत्वा; वासुदेवयोस्सभ्ये बलभद्रस्याऽऽहवनीये प्रद्युम्नस्यान्वाहार्ये अनिरुद्धस्यगार्हपत्ये सांबस्य आवसथ्ये दक्षिणोत्तरयोः औपासनाऽग्निकुण्डयोश्च हौत्रंप्रसंस्य; 'भद्रेशं पुण्यमूर्त्तिं वासुदेवं पुण्यात्मक' मिति वैदिकवासुदेवस्य; देव्यो र्मुन्योश्च पूर्ववत्: 'बलिनं हलधरं नागराजं संकर्षण' मिति बलभद्रस्य 'रोहिणीपतिं प्रद्युम्नं वीरं बलशासन' मिति प्रद्युम्नस्य, 'पुरुषं सत्य मच्युत मनिरुद्ध' मिति अनिरुद्धस्य 'सांबं जांबवतीसुतं भद्रं सुंदर' मिति सांबस्य; 'पितामहगरुडयोश्च पूर्ववत् मूर्त्तिमंत्रै रावाहनादीनि कृत्वा सभ्याग्नौ वासुदेवयोः पुरुषसूक्तम् आहवनीये विष्णुसूक्तम् अन्वाहार्येवैष्णवं, गार्हपत्येविष्णुगायत्रीम्, आवसथ्ये चैकाक्षरादि सूक्तं च प्रत्येकंदशकृत्वः, ब्रह्मणोब्राह्मं, गरुडस्यगारुडं, तथा-हुत्वा; अन्यत्सर्वं पूर्ववदाचरेत् ॥

## आलेख्यदेवानाम्

अथ आलेख्यदेवानां स्थापनविधिं वक्ष्ये-द्विविधमालेख्यं भवति, पटे भित्तौ च तेषां मानांगुलेन सप्ताऽगुलात् द्व्यंगुलमानेषु इष्टमानं विनिश्चित्य; पश्चात्तदुक्ततालविभागेन सांऽगोपांगतत्तद्वर्णांबराभरणाद्यैर्युक्तं, नयनानन्दनं, समालिख्य, शुभे नक्षत्रे स्थापनं कारयेत् ॥

## तत्प्रतिष्ठा

तद्दिनात्पूर्वमंकुरानर्पयित्वा; संभारानाहृत्य; पूर्वेद्युरेव पूर्वाह्णे तत्त-द्देवाभिमुखेचाऽऽहवनीयाग्निकुंडं च कृत्वा आघारान्ते वास्तुहोमांग-होमौहुत्वा; पूर्ववदक्षिमोचनं कृत्वा; अग्निं सुसंरक्ष्य; बेरशुध्यर्थं उत्पूतैराधावैः पवमानाद्यैः समभ्युक्ष्य; पुण्याहं वाचयित्वा; तद्रात्रावग्निं प्रज्वाल्य; परिषिच्य; वैष्णवं व्याहृत्यन्तं हुत्वा; तत्तद्देवाभिमुखे धान्योपरि कुंभंसन्यस्य; तत्तद्रूपं मनसाध्यात्वा कुंभेऽभसि समावाह्य; पूर्ववत्सप्तकलशैः तत्तत्कुंभंबिंबं-चाभ्युक्ष्य; व्रीहिभिः स्थंडिलंकृत्वा; वस्त्राण्यास्तीर्य; प्रतिसरबंधनं शयनं च समंत्रकं कृत्वा; अग्निंपरिस्तीर्य; हौत्रंप्रशंस्य; तत्तन्मूर्त्तिमंत्रैरावाहनादीनि

कृत्वा; तत्तन्मंत्रैरष्टाधिकशतमावर्त्य हुत्वा; रात्रिशेषंव्यपोह्य; प्रभाते स्नात्वा; देवान् प्रणम्य; मुहूर्त्ते प्राप्ते तत्तन्मंत्रेणस्थापनं कृत्वा; तत्तद्धृदये तत्तद्बीजाक्षरंन्यस्य; तत्तन्मंत्रेण तत्तत्कुंभोदकेन आवाह्य; पुण्याहान्ते अभिमुखे देशे (धान्यपीठे) देवमभ्यर्च्य, हविर्निवेदयेत् ॥

आचार्यादिभ्यो दक्षिणां दद्यात्। नित्यार्चनामाचरे दित्याह मरीचिः ॥

कर्षणादिप्रतिष्ठांतं, प्रतिष्ठाद्यर्चनान्तम्, अर्चनादिस्नपनांतं, स्नपनाद्युत्सवांतं प्रकरणं समाप्तम् ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे मानुष वासुदेवादि विधिर्नाम षष्टितमः पटलः ॥६०॥

# अथ एकषष्टितमः पटलः

## भूपरीक्षादौ प्रायश्चितम्

अथ भूपरीक्षादि प्रायश्चित्तविधिं व्याख्यास्यामः - न्यूनातिरिक्तव्याघातेषु प्रायश्चित्तं न कुर्याच्चेत्, विनाशाय भवति। तस्मात्प्रायश्चित्तं समाचरेत्। प्राय इति शब्देन दोष संपातानां चित्तमिति तस्य प्रतिषेधः तस्मा त्प्रायश्चित्तमित्युच्यते। भूपरीक्षादि क्रियां यस्मिन्नहनि कारयेत्, तस्मिन्नहनि तदर्थं गमनकाले विघ्नश्चेत्, वैष्णवं वैघ्न्यं च जप्त्वा; दुर्वाक्ये श्रुते ब्राह्मं सारस्वतं च जप्त्वा; देवंध्यायन् गच्छेत्।

तत्काले कलहरुधिरस्रावाऽग्निदाहेषु वैष्णवं, सौम्यं वैष्वक्सेनं, सौदर्शनं, गारुडं च, लौकिकाग्नौ हुत्वा; पुनरारभेत।

भू परीक्षादिकाले तत्पांसुक्षये पूर्णाहुतिं मिन्दाहुतिं च जुहुयात्। तत्तदभिमिमंत्रक्रमेणाऽऽहुतं चेत्, तस्मिन् शुद्धे देशे च औपासनाऽग्निमाधाय; वैष्णवं व्याहृत्यन्तं दशशो जुहुयात्।

कर्षणकाले वृषभे अंगहीने रौद्रं, ब्राह्मं, हलादीनामुक्तवृक्षालाभे प्रमाणहीने च वैष्णवं, सौम्यं, आग्नेयं, प्राजापत्य च, रज्जुच्छेदे वारुणं, सीतायां श्रीदेवत्यं वात्रे(त्रे)ज्येष्ठामंत्रं, वृषेवायव्यं, अक्षिप्यांवासवं युगे शेषमंत्रं प्रतोये याम्यं, व्याहृतीपर्यन्तं जुहुयात्।

कर्षणकाले कपालास्थितुषकेश वल्मीक पंकसंकरादि दर्शने तद्व्य-पोह्य; तस्मिन् पञ्चगव्येनाऽभ्युक्ष्य; सौम्यमाग्नेयं वैष्णवं च जुहुयात् ।

विष्वक्सेनानपयिनोरर्चनाहीने वैष्णवं, तद्देवत्यं च हुत्वा; पुनरर्चयेत्

बीजावापने हीने वैष्णवं, सौम्यं, वायव्यं हुत्वा; बीजदानं कुर्यात् ।

गो गणनिवेदने हीने वैष्णवं, वैष्वक्सेनं, गारुडं, सौदर्शनं च, हुत्वा; पलालभारान् तृणानि वा आस्तीर्य गो गणेभ्यो निवेदयेत् ।

पददेवताबलौहीने विपरीते वा तत्पददेवतामंत्रपूर्वं वैष्णवं ब्राह्मं, वासवं, याम्यं, वारुणं, कौबेरं च हुत्वा; आराध्य; तथैव बलिमर्चयेत् ।

ब्रह्मपद्याऽवटक्रियायां हीनायां कार्यमारब्धं; वैष्णवं ब्राह्मं वारुणं महीदेवत्यं हुत्वा आरभेत ।

शकुनपरिच्छेदहीने दिग्देवत्यं आदित्यं वैष्णवं च हुत्वा; दिक्-परिच्छेदं कुर्यात् ।

विमानार्थं भू खननकाले शल्यलोष्ठपाषाणादि दर्शने वैष्णवं ब्राह्मं पञ्चभूमिदैवत्यं व्याहृत्यंतै(ती)श्च जुहुयात् ।

आद्येष्टिकाशिलायावा प्रमाणे हीने अधिके च वैष्णवं विष्णुसूक्तं च जुहुयात् ।

तासामग्रविपर्यासे अधोमुखे च दिग्देवत्यं वैष्णवं च हुत्वा; देवाना मादिमं त्रान् जपेत् ।

तस्मिन्रत्नन्यासे विहीने विष्णुसूक्तं जुहुयात् ।

गर्भन्यासे विहीने वैष्णवं विष्णुसूक्तं श्रीभूमिदेवत्यं च हुत्वा; विधिना गर्भन्यासं कारयेत् ।

गर्भभाजने प्रमाणहीने अधिके च सौरं, सौम्य, माग्नेयं च यजेत् ।

द्रव्याणांसंकरे स्थानविपर्यासे च वैष्णवं, तत्तस्थानाधिदेवत्यं च जुहुयात् ।

अनुक्ते देशे न्यस्तं चेत्, वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमि-देवत्यं च हुत्वा; तत्तत्स्थाने निवेशयेत् ।

मूर्धेष्टकाशिलाप्रमाणेहीने अधिके च आद्येष्टकावत् प्रयश्चित्तं समाचरेत् ।

स्थूपिकीलेनभातारे च प्रमाणहीने उक्तवृक्षालाभे च वैष्णवं, सौम्य माग्नेयं, श्रीभूमिदेवत्यं च हुत्वा; विधिना कारयेत् ।

विमाने समासे मासादूर्ध्वं कलभक्रिया सुधावर्णाऽनुलेपनेषु हीनेषु वैष्णवं, विष्णसूक्तं, पुरुषुसूक्तं, श्रीभूमि देवत्यं च हुत्वाऽऽरभेत । आग्नेयं भूमिदेवत्यं च हुत्वा; विधिना कारयेत् । आलयस्य कवाटेहीने धात्रादि षड्देवत्यं वैष्णवं श्रीभूमि देवत्यं च जुहुयात् । प्राकारगोपुरादिषु हीनेषु महत्तरोदोषोभवेत् वंशहानिः शत्रुवृद्धिश्च, भवेत् विष्वक्सेने हीने कुलोत्सादनं, भूतपीठे हीने धनधान्यायुष्यहानिः, कूपाऽऽराममहान-सपुष्पसंचयस्नानोदकपानीयस्थानस्नपनालयाऽऽस्थानमंटपादिषु हीनेषु तत्सर्वंनिष्फलं भवति । तस्मात्सर्वप्रयत्नेन कारयेत् । वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदेवत्यं तत्तदधिदेवत्यं जुहुयात् ।

## अनुभूप्रायश्चित्तम्

प्रथमेष्टकादि स्थूपिकीलविन्यासान्तमनुक्तप्रायश्चित्तं वक्ष्ये - तदालयात्पुरतो दक्षिणे वा पञ्चाग्नौ वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदेवत्यं स्थूप्याद्युपाननाऽन्तरंगनामभिरंगहोमं 'दद्भ्यः स्वाहा' दीन् ब्राह्मंरौद्रं वैध्नं आग्नेयंदुर्गासूक्तं प्राजापत्यं च, जुहुयात् ।

समासे विमाने अज्ञानादर्थलोभाद्वा ध्रुवबेरं विना कौतुकंस्थापितं चेत्, तदाभिचारिकं भवति, ग्रामस्य यजमानस्य राज्ञो राष्ट्रस्य च विनाशो भवति । तस्मान्महाशान्तिं त्र्यहं हुत्वा; वैष्णवान् संपूज्य, ब्राह्माणान् भोजयित्वा; 'क्षमस्वे' ति देवं प्रार्थ्य; बालालये प्रतिष्ठाप्य; ध्रुवबेरं, ध्रुवार्चाबेरं वा, स्थापयेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे भूपरीक्षादि प्रायश्चित्तविधिर्नाम एकषष्टितमः पटलः ॥६१॥

# अथ द्विषष्टितमः पटलः

## ध्रुवबेरस्थानहीनादौ प्रायश्चित्तम्

समाप्ते विमाने मासादूर्ध्वं ध्रुवबेरस्थापने हीने वैष्णवं, विष्णुसूक्तं, रौद्रम्, ऐन्द्रं, आग्नेयं, वारुणं, बार्हस्पत्यं, श्रीभूमिदेवत्यंच, शांतिं हुत्वा; वैष्णवान्संपूज्य, आचार्याय दक्षिणां दत्वा; ब्राह्मणान् भोजयित्वा; आरभेत ॥

मासद्वयातीते द्विगुणम् ।

त्रिमासे अतीते त्रिगुणम् ।

एवं संवत्सरांतं वर्धयेत् । संवत्सरेतीतेतु महत्तरो दोषो भवति ।

जलाधिवासात्पूर्वं ध्रुवबेरस्यां गहानिश्चेत्, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीभूमिदेवत्यं, दद्भ्यःस्वाहेत्यंगहोमं जुहुयात् ।

आचार्याय दक्षिणां दत्वा संधानयोग्यं चेदपरं बेरं समाहरेत् ।

शिलाग्रहणक्रियांविना बेरंसलक्षणं शिल्पिना कृतंचेत्, वैष्णवंशांतिंहुत्वा; तद्बेरंभूमौ पिधाय, वास्तु होमं हुत्वा; पर्यग्नि पञ्चगव्याभ्यां संशोध्य; तद्बेरं परितः पूर्ववत् बलिं दत्वा; देवान् समाराध्य; पश्चात्समंत्रकं संगृह्य; विधिना स्थापयेत् ।

जलाधिवासात् पश्चात् स्थापनात्पूर्वं देवदेव्यादी नामंगहानिश्चेत्, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीसूक्तं, महीसूक्तं, ब्राह्मं, रौद्रं, मुन्योर्मंत्रं च हुत्वा; तदंगहीनं संधानंकृत्वा, अयुक्तं विधिवत् त्यक्त्वा; पुनर्बेरंसमाहृत्य स्थापयेत् ।

स्थापिते महाबेरे मासादूर्ध्वं संस्कारहीने वा, अब्जाऽग्नौ वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं श्रीभूमिदेवत्यं, ब्राह्मं, रौद्रं, पारिषदं, हुत्वाऽऽरभेत ।

मासद्वयेतीते द्विगुणं, मासत्रये त्रिगुणं, एवं संवत्सरांतं वर्धयेत् ।

संवत्सरांते पुनः स्थापयेत् । द्वादशेवर्षे अतीते विमानस्य कर्षणादि-पुनस्संस्कारं बेरस्य शिलाशूलग्रहण मन्यत् सर्वं च कृत्वा पुनः प्रतिष्ठांकारयेत् इत्याह मरीचिः ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे ध्रुवबेरस्थापनहीनादि प्रायाश्चित्तविधिर्नाम द्विषष्टितमः पटलः ॥६२॥

# अथ त्रिषष्टितमः पटलः

## कर्षणादि पुनः संस्कारः

अथ कर्षणादि पुनस्संस्कारविधिं वक्ष्ये-तत्राऽऽलये तृणगुल्म-लतादीन् संशोध्य; शिलाप्रक्षेपणं, इष्टकाप्रक्षेपणं दारुप्रक्षेपणं सुधावर्णलेपनं च, कृत्वा; आलयस्योत्तरे वास्तुहोमं हुत्वा; पुण्याहान्तेपर्यग्निंकृत्वा; पञ्चगव्यै स्समभ्युक्ष्य; कर्षणार्थमालयाऽभिमुखे व्रीहिभिः स्थंडिलंकृत्वा; देवेशं, विष्वक्सेनम् अनपायिनं च अभ्यर्च्य; हविर्निवेद्य; सुवर्णेन हलंकृत्वा; आचार्यो हस्तेन गर्भागारादि सर्वत्र विष्णोर्नुकाद्यैः कर्षयित्वा यथोक्तानि बीजानि भारमर्धंवा हृत्याऽभ्युक्ष्य; तस्मिन् सोममभ्यर्च्य; विष्णु गायत्र्या अभिमंत्र्य, 'सोमंराजान' मिति सर्वत्र वापनंकृत्वा; तस्योपरि दूर्वादितृणभारानास्तीर्य; तान् गोदानसूक्तमुच्चार्य; गो गणेभ्यो निवेद्य; आलयंसंशोध्य; ब्रह्मादीनां पञ्चानां, सावित्रादीनामष्टानाम्, ईशादीनां द्वात्रिंशद्देवानां, नागादीनां पञ्चविंशद्देवानां, रत्यादीनां चतसृणां च, द्रोणैः द्रोणार्धैर्वा तण्डुलैरेकपात्रे चरुं पत्का; सघृतं बलिमाहृत्य; पूर्वमुदकं पुष्पं बलिं उदकं च, तत्तन्नाम्ना दत्वा; आलयं संशोध्य; आद्येष्टकार्थ मौपासनाग्निकुण्डं कृत्वा; अग्निंपरिस्तीर्य; वैष्णवं विष्णुसूक्तं पुरुषसूक्तं दिग्देवत्यं च हुत्वा; चतुर्वेदादि मंत्रान् देवं ध्यायन् जप्त्वा; आद्येष्टका स्थानं संस्पृश्य अन्तः परिषेकं कृत्वा; अग्निंपरिस्तीर्य; गर्भविन्यासार्थंवैष्णवं, विष्णसूक्तं पुरुषसूक्तं श्रीसूक्तं महीसूक्तं दिग्देवत्यं च हुत्वा; 'नागराजाय स्वाहा, सर्वरत्नेभ्यःस्वाहा, सर्वधातभ्यःस्वाहा, सर्बबीजेभ्यःस्वाहा, सर्वलोहेभ्यःस्वाहा, नदीभ्यःस्वाहा, पातालेभ्यःस्वाहा, नागेभ्यःस्वाहा, दिग्गजेभ्यःस्वाहे'ति हुत्वा; अभ्यन्तरं द्वारदक्षिणस्तंभाद्दक्षिणे मेदिनी-मभ्यर्च्य; पुरुषसूक्तं मेदिन्यादीन् जप्त्वा; तत्तत्स्थानं संस्पृश्य; अन्तःपरिषेकं कृत्वा; परिषिच्य; अंत्येष्टकार्थं वैष्णवं विष्णुसूक्तं पुरुषसूक्तं विमानपालदेवत्यं च हुत्वा; विमानस्योपरिष्टात् स्थूपिकीलादधस्तात्, चतुर्वेदादिमंत्रान् विष्णुसूक्तं जप्त्वा; अभिमृशेत् ।

ध्रुवबेरं मानहीनं चेत्, अग्निं परिस्तीर्य; ध्रुवस्थाप नोक्तवद्धोमं हुत्वा; पूर्ववद्रत्नन्यासमंत्रान्, स्थापनसूक्तं च, जत्प्वा; संस्थाप्य; नवीकरणं कृत्वा; कौतुकादिभिस्सह प्रतिष्ठां कारयेत् ॥

ध्रुवे नष्टे पूर्वद्रव्येण, उत्कृष्टद्रव्येण वा, बेरं सलक्षणं कृत्वा; प्रतिष्ठांकारयेत् ॥

नखवृषगजाद्यैरुत्पाटितं बेरमहीनांगंचेत् बेरशुद्ध्यर्थं जलाधिवासंकृत्वा; तत्स्थाने रत्नन्यासंकृत्वा; पुनःप्रतिष्ठां कारयेत् ।

अन्याऽऽलया दपहृत(मात्रं) निष्पन्नक्रियं शिलाबेरं यदि स्यात् तद्भूमौ पिधाय; विधिनाऽऽहृत्य; शेषक्रियां कृत्वा; विधिना स्थापयेत् ।

शिल्पिनाशिलाग्रहणं कृत्वा; सलक्षणं कृतंबेरं स्थापितमिच्छेच्चेत् विधिनाऽऽहृत्य; प्रतिष्ठां कारयेत् ।

यथाविधि यथास्थानं स्थापितं निर्दोषंबेरं न चालयेत् । तदज्ञानाच्चालितंचेत्, राज्ञो राज्यस्य चाऽशुभाय नाशाय भवति । तद्दोषशमनार्थं पश्चाऽग्नौ महाशांतिं हुत्वा; विप्रशतंभोजयित्वा; सुवर्णदानं गोदानं च कृत्वा; पुनःप्रतिष्ठां कारयेत् ।

आचार्याद्यै रविधिज्ञैः स्थापितं बेरं क्षिप्रं चालयित्वा; यथाविधि विधिज्ञैः पुनः स्थापयेत् ।

विधिज्ञैः स्थापितं बेरं चालितं चेत्; शांतिं हुत्वा; वैष्णवान् संपूज्य; यथास्थानं यथाविधि स्थापयेत् ।

विमानं ध्रुवं च, नदीतटाकसमुद्रसंबाधमहावातादिना येन केनचिच्चालितं चेत्, तद्बेरं भूमौ पिधाय; तत्स्थाने पूर्ववद्विमानं कृत्वा; ध्रुवंबेरं अचलं स्थापयेत् ।

अथवा तत्समीपे ग्रामादौ सति तत्र विविक्ते देशे मनोरमे तथैव विमानमुत्कृष्टं वा कृत्वा; तद्बेरंसपरिषत्कमाहृत्य; संस्थाप्य; विधिनार्चयेत् ।

ग्रामादौहीने तस्माच्छतदंडादूर्ध्वं विस्तीर्णदेशे पूर्ववत् विमानंकृत्वा; तद्देवंस्थापयेत् ।

राजा राष्ट्रांतरंजित्वा बेरमाहृत्य, स्थापितुं यदि इच्छेत्, स्वराष्ट्रे मनोरमे देशे ग्रामविन्यासं कृत्वा; तद्वास्त्वंगाऽऽलये बेरं विधिना संस्थाप्याऽर्चनादीनि कारयेत् ॥

अपौरुषस्य देवाऽऽवासस्य समीपे पौरुषं विमानं कर्तुमिच्छेच्चेत् तस्मिन् प्राकाराभ्यन्तरे तद्बाह्ये वा, भूशुद्धिं विना प्रासादं प्रतिमां च, कृत्वा; प्रतिष्ठाप्याऽर्चयेत् ।

तस्य मूलस्थानाऽर्चनसमफल मचिरादेव सिध्यतीत्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे कर्षणादि-पुनस्संस्कारविधिर्नाम त्रिषष्टितमः पटलः ॥६३॥

# अथ चतुःषष्टितमः पटलः

## स्नपनमण्टपादौ अग्निदग्धे अशनिवातहते वा प्रायश्चितम्

प्रमादादालये स्नपनमंटपे चास्थानमंटपे महानसे प्राकारगोपुर-स्नानोदकपानीयादि स्थानेष्वग्निदग्धेष्वशनिपातवाताहतेषु वा पञ्चाग्नौ पारमात्मिक मींकारादीन् विच्छिन्नं, मिंदाहुतिं, आग्नेयं (च व्याहृत्यन्तं) हुत्वा; पुनस्संधाने कारयेत् ।

शिलाग्रहणकाले, दारुग्रहणकाले वा, क्रियाहीने, विपरीते च; वैष्णवं, विष्णुसूक्तं, मिन्दाहुतिं विच्छिन्नं च; व्याहृत्यन्तं जुहयात् ।

द्वारस्तंभभुवंगपतङ्ककवाटबोधिकोत्तरतुलास्तंभादिषु प्रमाणहीनेषु दोषदुष्टेषु अग्निदग्धेषु जीर्णेषु क्रिमिदष्टेषुच तानि त्यक्त्वा; अन्यान्याहृत्य, पूर्ववत्संयोज्य; अभ्युक्ष्य, नित्याग्नौ वैष्णवं, सौम्य, माग्नेयं च, जुहुयात् ।

गर्भन्यासार्थं पीठन्यासार्थं च रत्नानामलाभे सुवर्णं निक्षिप्य; विष्णुसूक्तं, धातूनामलाभे पारदंब्राह्मं, रौद्रंच; बीजानामलाभे यवं मुद्गं, वायव्यं, वैष्णवं च, प्रायाश्चित्तं जुहयात् ।

ध्रुवबेरार्थंशूलाग्रहणे, शूलस्थापनविपर्यासे च; ब्राह्मं, रौद्रं, वैष्णवं, व्याहृत्यन्तं हुत्वा; विधिना संयोजयेत् ।

अप्रमाणे विमाने प्रमाणहीनं बेरमज्ञानात् स्थापितं चेत्, तत् राज-राष्ट्रविनाशायभवति । तद्दोषशमनार्थं महाशांतिं हुत्वा; तद्विमानं तत्तद्बेरं च विधिना कृत्वा; विधिवत् स्थापयेत् ।

बेरोक्तशूलानां प्रत्येकं तदुक्तमानद्वित्रिचतुष्पंचषड्यवमानं हीनं चेत्, ताम्रेण संपूर्णं कृत्वा; वैष्णवं, पुरुषसूक्तं, 'तद्भ्यः स्वाहे' त्यंगहोमं च, हुत्वा; पुनरारभेत ।

स्नेहद्रव्यचूर्णकषायौषायौषधिषुहीनेषुप्रयोगविपर्यासेषु च, रज्जुबन्धाऽष्टबंधमृदालेपनघटीशर्करालेपनपटाच्छादनाऽऽभरणादिषु क्रमहीनेषु वर्णव्यतिक्रमे च, वैष्णवं, ब्राह्मं, ऐंद्रम्, आग्नेयं महाभूतदेवत्यं, प्राजापत्यं च, व्याहृत्यन्तं हुत्वा; यथाविधि यथास्थाने क्रमेण कारयेत् ।

मृण्मयं महाबेर मर्धचित्रं न कुर्वीत ।

सौवर्णं, राजतं,ताम्रजं, शिलाजं, दारवं, रत्नजं वा, अर्धचित्रं वा कारयेत् ।

बेरेऽनुक्तवर्णानलिप्ते कृत्रिमवर्णानलिप्ते वा, निर्यासाद्भिः प्रक्षाल्य, पद्माग्नौ वैष्णवं, विष्णुसूक्तं, जयादींश्च, हुत्वा; पश्चादुक्तवर्णान् अनुलेपयेत् ।

इष्टकाकल्पितं ध्रुवबेरं सुधयायुक्तं नपुंसकवृक्षेण नपुंसकशिलयावा कृतं, अयः पाषाणचूर्णलशनहिंगुतैलाद्यै स्संयुक्तं, पक्वमृण्मयं शूलोपरिरज्जुबंधहीनं, मृद्धीनं घटीशर्कराकल्कहीनं, प्रमाणहीन, मुक्तवर्णहीनं, भूषणहीनं, अज्ञानादर्थलोभाद्वा स्थापितं चेत् तदाभिचारिकं भवति ।

तच्छीघ्र मपहाय, पद्माऽग्नौ वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्री भूमिदेवत्यं, यद्देवादीन् ब्राह्मं, रौद्रं, ऐंद्रं, माग्नेयं, वारुणं, सर्वदेवत्यं पारमात्मिकं च जुहयात् ।

एषामहाशान्ति स्सर्वदोषोपशमनी भवति ।

पश्चाद्बेरंविधिवत्संस्कृत्य विधिनास्थापयेत् ।

आरकूटाऽयोवृत्तलोहाद्यनुक्तद्रव्यैः कृतं, कौतुकादि बेरम्, अज्ञानात् स्थापितं चेत्, तदाभिचारिकं भवति । तद्दोषशमनार्थं महाशांतिं हुत्वा, बेरं सलक्षणं कृत्वा; विधिना स्थापयेत् । कौतुकं स्थितमासीनं वा कारयेत् ।

नैव शयानं दैविके चार्षे पौराषिके च यथापूर्वं तथाचरेत् । अन्यथा दोषो भवति ।

कौतुकादि बेरे निर्दोषेअर्च्यमाने तत्रोत्कृष्टद्रव्यकृतबेर प्रवेशनं नैव कारयेत् । कुर्याच्चेद्यजमान विनाशनं भवति ।

अर्च्यमाने कौतुकादि बेरे विरूपे, विवर्णे, झर्झराद्यैर्युक्ते वा तच्छक्तिंमहाबेरे समारोप्य, नवीकृत्य, बिंबशुद्धिकृत्वा, पुनःस्थापयेत् ।

अर्च्यमानं कौतुकबिंबं नृपादिभिः चोरै श्शात्रुभिर्वा अपहृतं चेत्,

तद्देशशुद्धिं कृत्वा, महाशांतिं हुत्वा, तस्मिन् रत्नं, सुवर्णकूर्चं वा, निक्षिप्य; ध्रुवात् अर्कमण्डलाद्वा देवमावाह्य, नित्यं समभ्यर्च्य, पूर्वद्रव्येणोत्कृष्ट द्रव्येण वा पूर्ववद्बेरं सलक्षणं कृत्वा; कालाऽनपेक्ष पूर्ववत्प्रतिष्ठां कारयेत् ।

मधूच्छिष्टक्रियांविना बेरं कृतं चेत्, वैष्णवं, ब्राह्मं, रौद्रं, सौर, माग्नेयं च, प्रायश्चित्तं यजेत् ।

अन्यालये स्थापितं ध्रुवं कौतुकं वा अज्ञानादन्यालये स्थापितं चेत् तद्दोषशमनार्थं महाशांतिं हुत्वा, वैष्णवान् संपूज्य, ब्राह्मणान् भोजयित्व, पूर्वस्थाने विधिना स्थापयेत् ।

ग्रामादीनामालयस्य च विनाशे तद्बेरमाहृत्य, आलयांतरे यावत्-कालमर्चनं युक्तं तावत्कालं यथालाभमर्चयेत् ।

पीठसंघाते कृते तद्बेरे दक्षिणाऽवनते मृत्युः, पश्चिमाऽवनते, अर्थहानिः उत्तराऽवनतेऽभिवृद्धिः, पूर्वावनते पुत्रहानिः कुक्षिच्छिद्रे धान्यनाशः, उदरच्छिद्रेधनक्षयः, कृशेकार्श्यं, स्थूले महाव्याधिः, दीर्घेऽनायुष्यं, ह्रासे अनावृष्टिर्भवति ।

अन्यांगेषु न्यूनाधिकेषु सर्वहानिर्भवति तस्मात्सर्व प्रयत्नेन बेरं सलक्षणं कृत्वा; विधिना स्थापयेत् ।

ध्रुवस्थापनात्पश्चात्, महाप्रतिष्ठायाः पूर्वमनुक्त प्रायश्चित्तं वक्ष्ये - कापिलेन घृतेन पद्माऽग्नौ वैष्णवं, विष्णुसूक्तं, श्रीभूमि देवत्यंव्याहृत्यंतंयजेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे अग्निदाहाद्यशनिपात वाताहतचोर शत्रुभिः दूषितप्रायश्चित्तविधिर्नाम चतुष्षष्टितमः पटलः ॥६४॥

# अथ पंचषष्टितमः पटलः

अथ प्रतिष्ठाप्रायश्चित्तंवक्ष्ये - अंकुरार्पणकाले ब्रह्मसोमादि देवानामर्चने, हविर्निवेदने च, हीने; तत्तद्देवत्यं, वैष्णवं च, हुत्वा; पुनरभ्यर्च्य; हवर्निवेदयेत् ।

अंकुराऽर्पणहीने वैष्णवं, विष्णसूक्तं पुरुषसूक्तं, ब्राह्मं, सौम्यं, व्याहृतीश्च, हुत्वा; पुनरप्यंकुराऽर्पणं कुर्यात् ।

अंकुराऽर्पणंकृत्वा, पश्चात्कर्म नाऽऽचरेच्चेत् राजराष्ट्रनाशाय भवति । तस्माद्यत्नतःकुर्यात् ।

तद्दोषशमनाय महाशान्तिं हुत्वा; 'क्षमस्वे'ति देवं प्रणम्य, पुनरप्यंकुराऽर्पणपूर्वं कर्म समाचारेत् ।

अक्षिमोचनात्पूर्वं पीठसंघातकाले रत्नानामलाभे वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं च, हुत्वा; तत्तत्स्थाने सुवर्णं निक्षिपेत् ।

अक्षिमोचनकाले गवादि दर्शनद्रव्यहीने गोदान सूक्तं तत्तद्रव्याधिदेवत्यं वैष्णवं च हुत्वा; पश्चात्तत्तद्रव्यं विधिवद्दर्शयेत् ।

अक्षिमोचने हीने, अर्कराहुसौराणामुदये अन्धे चैकनेत्रे नक्षत्रे अक्षिमोचने कृते च, सर्वनाशाय भवति । वैष्णवं विष्णुसूक्तं, नवग्रहदेवत्यं च हुत्वा; पुनरक्षिमोचनं कारयेत् ।

पञ्चगव्यक्षीरोदकेष्वधिवासने हीने वैष्णवं आर्षं, विष्णुसूक्तं च, हुत्वा; जलाधिवासं त्र्यहमष्टाहं वा कारयेत् ।

यज्ञशालायां महावेद्यां च प्रमाणहीनाया मधिकायां च अन्यदेशेकृतायां अलंकारहीनायां तत्तद्देशाधिपदेवत्यं, वैष्णवं, विष्णुसूक्तं, श्री भूमिदेवत्यं च, जुहुयात् ।

ध्रुवबेरस्याऽक्षिमोचनान्ते बेरशुद्धि क्रियायां हीनायां विपरीतायां वा वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, रौद्र, मार्षं, वारुणं च हुत्वा; पुनराचरेत ।

अग्निकुण्डानि हीनाधिकप्रमाणेन कृतानिचेत् ब्राह्मं सौम्य, माग्नेयं च जुहुयात् ।

परिस्तरणकूर्चप्रणिध्याज्यपात्रस्रुवादिषु प्रमाण हीनेषु अधिकेषु च, मिंदाहुतिं, सावित्रीं च, व्याहृत्यन्तं जुहयात् ।

यथोक्ते स्थाने पञ्चाग्नीन् परिकल्प्य, प्रोक्षणोल्लेखने कृते मथिताग्न्यलाभेतु आचार्याऽगारतः श्रोत्रियाऽगारतो वा अग्निमाहृत्य गार्हपत्याग्निकुण्डे निधाय आघारंहुत्वा वैष्णवं, भूमिदेवत्यम् आग्नेयं, जुहुयात् ।

तमग्निं वर्धयित्वा, अन्वाहार्ये प्रणीय, पश्चादाहवनीये प्रणिधाय, पश्चादावसथ्ये प्रणीय, ततस्सभ्ये प्रणीय, ततः पञ्चाग्नौ प्रणयनं कुर्यात् । विपरीते तत्तन्मंत्रहीने च वैष्णवं, आग्नेयं, ब्राह्मं, सौम्यं च, हुत्वा; अग्निंप्रणयेत् । पश्चात्तत्तदग्निषु आघारात्पूर्वतोऽन्तरा नैवगच्छेत् । अज्ञानाद्यदि गच्छेत् तद्दिक्पालदेवत्यं वैष्णव माग्नेयं च जुहुयात् ।

तण्डुलैरेकजातीयैर्द्विप्रस्थैः चरुं, गव्यं नवनीतं च लौकिकाग्नौपाचयित्वा; पुनस्तत्तदग्निषु समंत्रकं संस्कुर्यात् ।

आज्यस्थाल्यां चरौ वा मक्षिकाक्रिमिरोमपिपीलिकादीनां पतिते तद्व्यपोह्य, अन्यद्द्रव्य मादाय, प्राजापत्य माग्नेयं वैष्णवं च जुहुयात् । आज्याऽलाभे तं दोषंव्यपोह्य, दर्भैरुत्पूय, उद्दीप्याऽऽहरेत् । आघारेकृते तस्मिन्न (ग्नौगते) ग्नावनुगते 'अयंतेयोनि' रिति तद्भस्मनि समिधमारोप्य 'उद्बुध्यस्वे' ति लैकिकाग्नौ निधाय इन्धनानि विक्षिप्य, उज्वाल्य परिषिच्य, विच्छिन्नं, मिंदाहुतीः, वैष्णवं, व्याहृतीश्च, यजेत् ।

परिस्तरणादि संभाराणां दाहे भेदे छेदे नाशे च पुन स्तत्तत्संयोज्य, महाव्याहृती राग्नेयं मिंदाहुतीः वैष्णवं च जुहुयात् ।

विशेषेनुक्ते स्रुवेण होतव्यं । हविर्विशेषेऽनुक्ते चाऽऽज्येन आज्यालाभे साज्येन चरुणा होममाचरेत् । उक्तद्रव्यस्य हीनंचेत्कापिलेनघृतेन वैष्णवं विंशतिकृत्वोयजेत् ।

प्रायश्चित्ताग्निकुण्डे अनुक्ते नित्याग्निकुण्डे चुल्यां वा जुहुयात् ।

क्रियाहीने विपर्यासे मंत्राणांसंकरे वा वैष्णवं व्याहृतीश्च यजेत् ।

प्रायश्चित्तविशेषेऽनुक्ते वैष्णवं, विष्णुसूक्तं, पुरुष सूक्तं च, जुहुयात् ।

रत्नधातुबीजाद्यलाभे रुग्मपारदयवानाहृत्यरत्नानां वैष्णवं विष्णुसूक्तं, धातूनांदिग्देवत्यंवैष्णवं, बीजानां वायव्यं वैष्णवं च; प्रत्येकं विंशति कृत्वो यजेत् ।

वस्त्रे लक्षणहीने छेदादि युक्ते च तत्त्यक्त्वा, अन्यदाहृत्य, श्रीदेवत्यं, वैष्णवं च, यजेत् ।

अंडजादीनामलाभे प्रत्येकं वस्त्रमाहृत्य, वैष्णवं श्रीभूमिदेवत्यं च, जुहुयात् ।

तोरणेषु प्रमाणहीनेषु पृथक् पृथक् द्वाराधिपदेवत्यं, विंशतिकृत्वो जहुयात् ।

दर्भमालायांहीनायां आर्षं वैष्णवं च यजेत् ।

कुंभेप्रमाणहीने खंडादिदोषयुक्ते वस्त्रवर्णचिह्नादिषु हीनेषु च तस्मिन् देवोनरमेत, तस्माद्यत्नेनतानिविक्षिप्य, वैष्णवं विष्णुसूक्तं पुरुषसूक्तं ब्राह्मं मुनिमंत्र माग्नेयं च दशकृत्वोजुहयात् ।

ब्राह्मणभोजनं च कृत्वा, आचार्याय दक्षिणांदद्यात् ।

साधिते कुंभेभिन्ने वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, ब्राह्म मैंद्र माग्नेय मार्षं च, विंशतिकृत्वो हुत्वा; आचार्य दक्षिणां दत्वा; विप्रान् भोजायित्वा; अन्यकुंभं संगृह्य; पूर्व वत्साधयेत् ।

श्वकुक्कटाद्यैरस्पृश्यैः पतितैश्च साधिते कुंभे स्पृष्टे तं व्यपोह्य, अन्य-कुंभं संगृह्य पूर्ववत् । वैष्णवं विष्णुसूक्तं पुरुषसूक्तं ब्राह्मं सौरमाग्नेयं च अग्नौप्रत्येकं अष्टाधिक शतकृत्वो हुत्वासाधयेत् । आचार्याय दक्षिणां दत्वा वैष्णवान् संपूजयेत् । (ब्राह्मणभोजनं च कारयेत्) अस्पृश्यस्पृष्टे बिंबे स्नपनोक्तक्रमेण स्नपनं कृत्वा पूर्ववत् प्रायश्चित्तं जहुयात् ।

श्वकुक्कुटाद्यैःस्पृष्टे होमे तत्कुण्डं व्यपोह्य, पूर्ववत्कुंडं कृत्वा, आघारंहुत्वा, आग्नेयं वैष्णवं पंचवारुणं मूलहोमं च शतशो जुहुयात् । वैष्णवान् संपूज्य ब्राह्मणभोजनं च कुर्यात् ।

स्त्रुवादीनामलाभे तत्तद्धयत्वा, सुवेणहुत्वा वैष्णवं ब्रांह्म माग्नेयं सौम्य मादित्यं च जुहुयात् ।

समिधाम(द्य) लाभे पालाशींवाश्वत्थींवाऽऽहृत्य तत्तत्समिधंध्यात्वा, आग्नेयं वैष्णवं ब्राह्मं च जुहुयात् ।

दर्भान् कुशान् समिधो वा मासातीतान् संगृह्य तत्तत्कर्म कृत्वा तद्दोषशमनार्थं वारुणं, वैष्णवं, ब्राह्मं, सौम्य, माग्नेयं, आदित्यं च, जुहुयात् ।

आजंमाहिषं दधि क्षीरं च गृहीतं चेत्, वैष्णवं ब्राह्म माग्नेयं सांरच व्याहृत्यन्तं पृथक् पृथग्यजेत् ।

अग्निकुण्डार्थं मृदो वालुकंवाऽऽशुभदेशात् समाहृतं चेत्, वैष्णवं वारुणं जुहुयात् ।

इंधनमार्द्रं स धूमंजंतुकंटकलेपयुक्तं अग्नौप्रक्षिपेच्चेत् तत्त्यक्त्वा, अन्यत्प्रक्षिप्य, आग्नेयं वैष्णवं व्याहृतीश्च जुहुयात् ।

वस्त्रादिद्रव्ये, दर्भादौ, प्रपायां वा, अन्यस्मिन् देवार्थं कल्पिते, अग्निनादग्धे, वैष्णवं ब्राह्मं सौर माग्नेयं च प्रत्येकं दशपर्यायतो जुहुयात् ।

कौतुकादि बेराणां चतुर्दशकलशन्यासविपर्यासे वैष्णवं, पंक्तीशदेवत्यंच स्नपनकाले बेरविपर्यासे पञ्चवारुणं वैष्णवं च, शयनविपर्यासे वैष्णवंश्रीभूमिदेवत्यं च, प्रत्येकंदशपर्यायतो जुहुयात् ।

हौत्रशंसने विपरीते हीने च ब्राह्मं मुनिं जुहुयात् ।

परिषद्देवानामावाहनजुष्टाकारस्वाहाकारार्चनेषुविपरीतेषुहीनेषु च, वैष्णवं, विष्णुसूक्तं, ब्राह्मं, रौद्रं च दशपर्यायतो जुहयात् ।

सर्वेषां होमानामुक्ते विपरीते हीने च पञ्चाग्नौ वैष्णवं विष्णुसूक्तं, पुरुषसूक्तं च, हुत्वा; यथोक्तं च जुहुयात् ।

शयानं देव मुद्धरेच्चेत् श्रीभूमि देवत्यं, चतुष्कृत्वो (चतुर्वारं) हुत्वा, तथैव शाययेत् ।

अध्ययने हीने सारस्वत्त मष्टाधिकशतं जुहुयात् ।

अस्य यज्ञस्य षोडशऋत्विजामभावे यथालाभं संगृह्य कुण्डानां च लक्षणम्, आरव्याम्, आघारविशेषं तत्तल्लोकाधिदेवतं, जातवेदस्वरूपं, ब्रह्मासनस्य लक्षणं, पात्राणां लक्षणं, होमद्रव्यम्, ऋषिच्छन्दोऽधिदैवतम्, आघारप्रयोगं च सर्वं विधिना कारयेत् ।

पञ्चप्रतिष्ठायां त्रिविधोत्सवे च पुनश्चरणं कृत्वा; दीक्षितस्य आचार्यस्य अवभृथात्पूर्वम् आशौचं नस्यात् ।

आचार्यस्थापकादीनां भर्त्सनं (हननं) शपनं वा कृत्वा; वैष्णवं, विष्णुसूक्तं, पुरषसूक्तं, ब्राह्मं, सारस्वतं च, हुत्वा; तान (नुज्ञा) वस्थाप्य; कार्यमारभेत ।

आचार्यदक्षिणाकालातीते वैष्णवं, मुनिमन्त्रं, अष्टोत्तरशतं हुत्वा; यथोक्तदक्षिणां दद्यात् ।

अल्पदक्षिणायागो यजमानं हंति, सदक्षिणो यज्ञः फलमनंतं ददाति। तस्माद्यज्ञस्यदक्षिणा जीवो भवेत्।

कौतुकादीनामलाभे सुवर्णंनिक्षिप्य, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, वायव्यं, दिग्देवत्यं च, जुहुयात्।

सभ्याग्नौ शेषहोमहीने वैष्णव माग्नेयं, व्याहृतीश्च, दशतो जुहुयात्।

नित्याग्निकुंड सभ्याग्निस्थापने हीने पूर्ववत्प्रायश्चित्तं हुत्वा; श्रोत्रियागारतोऽग्निमाहृत्य, निधायाघारं हुत्वा; नित्यहोमं समाचरेत्।

ध्रुवबेरात्कौतुकादिषु दीपाद्दीपमिव आवाहयेत्, अज्ञानात्तत्कुंभजलेन तेषामावाहने कृते महत्तरोदोषो भवति। ततः शीघ्रं शुद्धोदकेन 'इषेत्वोर्जेत्वे' ति स्नाप यित्वा; देवमनुमान्य; वैष्णवं, विष्णुसूक्तं, पुरषसूक्तं च हुत्वा; पूर्ववत् ध्रुवबेरादावाहयेत्।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे प्रतिष्ठाप्रायश्चित्त-विधिर्नाम पंचषष्टितमः पटलः ॥६५॥

# अथ षट्षष्टितमः पटलः

## नित्यार्चना प्रायश्चित्तम्

अथ नित्यार्चनाप्रायश्चित्तविधिं वक्ष्ये - सूर्योदया न्मध्याह्नादस्तमयाच्च पूर्वं कवाटोद्घाटने हीने नित्याग्नौ चुल्यां वा, अग्निंपरिस्तीर्य, आज्येनवैष्णवं, धात्रादिदेवत्यंद्वौवारिकं च, हुत्वा; शीघ्रमुद्घाटयेत्।

मार्जनोपलेपननिर्माल्यशोधनेषु हीनेषु वैष्णवं, वारुणं, वायव्यं, वैष्वक्सेनं च, जुहुयात्।

सर्वेषां द्रव्याणां तोयं प्रतिनिधि स्तस्मात्तोयं संगृह्य अर्चन मारभेत।

देवे स्नानविहीने वैष्णवं, वारुणं च, हुत्वा; 'आपोहिष्ठा' द्यै र्मन्त्रस्नानं कृत्वा; अभिषेकस्याऽशक्तौ कुशोदकैः प्रोक्ष्य; वस्त्रादीन् व्यपोह्य; धौतं परिधापयेत्। नित्यस्नापनमशक्यंचेत् विष्णुपञ्चदिनेषु स्नापयेदिति केचित्।

ध्रुवबेरे पीठे पूर्वविन्यस्तपुष्पाणि संशोध्यपुष्पन्यासं कुर्यात्। तेनैव ध्रुवबेरस्य नित्यार्चनं भवेत्।

पुष्पन्यासंहित्वा; कौतुकस्य नित्यार्चनेकृते वैष्णवं, विष्णसूक्तं, पुरुषसूक्तं, विष्णुगायत्रीं च, हुत्वा; तदैव पुष्पन्यासं कुर्यात् ।

संबन्धकूर्चे हीने वैष्णवं, मुनिमन्त्रं च, हुत्वा; कूर्चं संन्यसेत् । धात्रादिपरिषदामर्चने हीने तत्तद्देवत्यं, वैष्णवं च, हुत्वा; पश्चात्परिषदोऽर्चयेत् ।

आसनादिसर्वोपचारविपर्यासे 'क्षमस्वे' ति देवं प्रणम्य; पुनरर्चयेत ॥

एतेष्वेकं हीनं चेत् तत्तद्देवतामंत्रं, वैष्णवं च, जप्त्वा; पुनस्तदुपचारादि सर्वोपचारैरर्चयेत् ।

उक्तद्रव्यालाभे पुष्पं, तोय, मक्षतं वा, गृहीत्वा; तत्तद्रव्यं ध्यात्वाऽर्चयेत् ।

अर्चनाकाले अजस्रदीपः मूषिकाक्रिमिकीटपतग शलभादि पतनेन स्वयमेव मरुतावा विच्छिन्नश्चेत् द्विगुणं दीपं समुद्दीप्य; सौरं, रौद्र, माग्नेयं, वैष्णवं च, हुत्वा; पुनरर्चयेत् ।

तत्काले सर्वदीपा नश्यंति चेत् महत्तरो दोषो भवति, देवं शुद्धोदकैस्संस्नाप्य, कुशोदकैश्चाभिषिच्य; पूर्ववत्प्रायश्चित्तं, शांतिं च, हुत्वा; देवमभ्यर्च्य; द्विगुण हविर्निवेद्य; आचार्याय दक्षिणां दद्यात् ।

दीपेषु बहुषु वर्तमानेषु एकं(को) नष्टं(ष्टे) चेत्, तन्नदोषाय भवति । अर्चनाकालादन्यस्मिन् अजस्रदीपोविच्छिन्ने वैष्णवं, विष्णुगायत्री माज्नेयं च हुत्वा; द्विगुण मुद्दीपयेत् ।

मंत्राणां स्खलने तन्मूर्त्या सप्रणवया कारयेत् ।

अर्चनाकाले पटे हीने प्राजापत्यं वैष्णवं च हुत्वा प्रच्छन्नपटं कृत्वार्चयेत् ।

## वेददूषकादि दर्शने प्रा यश्चित्तम्

वेददूषक पाषंड पापरोगान्वितानां प्रतिलोमाद्यंत्यजादीनां च दर्शने वैष्णवं, ब्राह्मं, रौद्र, माग्नेयं च, व्याहृत्यन्तं हुत्वाऽर्चयेत् ।

आवरणाद्बाह्योपंचाशद्दंडाभ्यन्तरे मनुष्याणां मृतिर्भवति चेत् शवोद्धरणात्पूर्वं देवेशस्यार्चनं हविर्निवेदनं न कारयेत् । ध्रुवकौतुकयोः पुष्पन्यासमेव कारयेत् । पश्चात्कालातीते शांतिं हुत्वा; द्विगुणमर्चयेत् ।

एककालमर्चनेहीने द्वितीये द्विगुणं, तृतीये त्रिगुणं कुर्यात् ।

एकाहमर्चनेहीने वैष्णवं, विष्णसूक्तं, पुरुषसूक्तं, श्रीभूमिदेवत्यं च, हुत्वा; द्व्यहेद्विगुणं, त्र्यहेत्रिगुणं, एवं द्वादशाहान्तं वर्धयेत्।

द्वादशाहे अतीते चेत् औपासनाग्निमाधाय; वैष्णवं, विष्णुसूक्तं, तदालयगतपरिषद्देवतामंत्रं च, हुत्वा; वित्तानुसारेण देवं कलशैः संस्नाप्या ऽभ्यर्च्य, हविर्निदियेत् ।

मासहीनं चेत् आलयाभिमुखे सभ्याग्निमादायवैष्णवं विष्णसूक्तं पुरुषसूक्तं श्रीभूमिदेवत्यं सर्वदेवत्यं च हुत्वा; देवमष्टचत्वारिंशत्कलशैः संस्नाप्याऽभ्यर्च्य हविर्निवेदयेत् । एवं मासे प्रकुर्वीत ।

द्वितीये द्विगुणं, तृतीये त्रिगुणं, एवं संवत्सरान्तं वर्धयेत् ।

संवत्सरे अतीते पञ्चाग्नौ समाहं महाशान्तिं हुत्वा; वैष्णवान् संपूज्य; ब्राह्मणभोजनं च कृत्वा; देवंशताष्टकलशैस्संस्नाप्य; पुनःप्रतिष्ठां कारयेत् । पुनःप्रतिष्ठायामक्ष्युन्मेषाऽधिवासौ हित्वा; अन्यत्सर्वं पूर्ववदाचरेत् ।

हविषि हीने तद्ग्रामवासिनस्सर्वेजनाः क्षुत्पिपासादिभिःपीडिता भवेयुः । तस्मात्प्रयत्नतोदेवस्य हविस्सम्यङ् निवेदयेत् ।

एककाले हविषिहीने द्वितीये द्विगुणं, त्रितीये त्रिगुणं निवेदयेत् ।

एकाहे अतीते वैष्णवं, श्रीभूमिदेवत्यं मूर्तिहोमं च हुत्वा; देवं शुद्धोद-कैस्संस्नाप्य; महाहविः प्रभूतं निवेदयेत् ।

सोपदंशं हवि रपक्वं, शीतं, पर्युषितं, स्थालीशेषं, पात्रान्तरगतं, विवृतं, स्रावितं, लंघितं, विकृतं, अंत्यजादिदृष्टं च, देवेशाय निवेदयेच्चेत्, वैष्णवं, श्रीभूमिदेवत्यं, आग्नेयं, वारुणं, वायव्यं च, दशशोहुत्वा, पुनश्च हविर्निवेदयेत् ।

अशुचिनास्पृष्टं हविर्निवेदये च्चेत् देवं संस्नाप्य; वैष्णवं, विष्णुगायत्रीं च, त्रयस्त्रिंशत्कृत्वो हुत्वा, शान्ति होमविधिना शान्तिंहुत्वा; देवंप्रोक्षणैः प्रोक्ष्य; पुण्याहं वाचयित्वा; द्विगुण मभ्यर्च्य; हविर्निवेदयेत् ।

शर्करांगारव्रीहितुषादियुतेहविषि निवेदिते अष्टाक्षरेण, विष्णुगायत्र्या, वैष्णवैश्च, संस्तूय; 'क्षमस्वे' ति प्रणम्य याचेत ।

मक्षिकापतंगमशकपिपीलिकाक्रिमिकीटकेशाद्यैस्संयुक्ते हविषि

निवेदिते, देवंशुद्धोदकैस्स्संस्नाप्य; वैष्णवंविष्णुगायत्रीं, श्रीभूमिदेवत्यं च, अष्टोत्तरशतं हुत्वा; द्विगुणं निवेदयेत् । महाहविष्येतैस्स्संयुक्ते सति, तत्र पुरुषाशनमात्रं व्यपोह्य; भस्मजलैः कुशेन आपोहिरण्यपवमानैः प्रोक्ष्य; तन्निवेदयेत् ।

प्रायश्चित्तार्चनार्थं अर्कोदयात्पूर्वं पक्वं हवि रुपदंशं च सोष्णं चेत् तस्मिन्कालेनिवेदयेत् । अस्तमयात्पूर्वं पक्वं हविरुपदंशं च सोष्णम् अस्तमयात्पश्चात् देवस्य सायमर्चनं कृत्वा; तद्धवि र्निवेदयेत् ।

तांबूलं असंस्कृतं लेपकेशान्वितं जंतुस्पृष्टंनिवेदयेत् चेत् वैष्णवं, श्रीभूमिदेवत्यं च, हुत्वा; पुन स्तांबूलं निवेदयेत् ।

अन्येष्वर्चनांऽगद्रव्येषु दुष्टेषु हीनेष्वपि तत्तदधि दैवतमंत्रं, वैष्णवं च, हुत्वा तत्तद्रव्यै रर्चयेत् ।

अथवा सर्वेषांद्रव्याणामलाभे पुष्पंजलं वा प्रतिनिधिं संकल्प्य; तद्द्रव्यं स्मृत्वा; अर्चयेत् ।

नित्यहोमे हीने वैष्णवं दशशो हुत्वा; यथोक्तहोमं द्विगुणं जुहुयात् ।

अग्निसंरक्षणे अशक्तश्चेत् कुंडात् 'अयं ते योनि' रिति समिध्यारोपयेत् । अथवा स्वात्मन्यारोप्य, लौकिकाग्नावारोप्य, एवमहरहर्जुहोती (हुयादि)ति विज्ञायते ।

## बलिप्रायश्चित्तम्

### बलिस्वरूपं, तत्करणप्रकारश्च

अथ बलिविधिप्रायश्चित्तं वक्ष्ये - सुरर्षिमनुष्याणां बलमस्मात्प्रवर्धते, तस्मा द्बलिरिति व्याख्यातः तदर्थं देवेशं दिने दिने त्रिषुकालेषु उक्तद्रव्येषु आवाह्य; अभ्यर्च्य; बलिभ्रमणं कारयेत् ।

एवं कर्तुमशक्तश्चेदुक्तेपात्रे केवलंबलिद्रव्यं निक्षिप्य; तस्योपरि यथोक्तं बलिबेरंसन्यस्य; शिरसा धारयन्, त्रिकालं, द्विकालं, एककालं वा आलयं प्रदक्षिणं कारयेत् ।

अथवा बलिद्रव्यंविनाशिबिकादियाने गजेवा, आरोप्य; आलयंप्रदक्षिणंकारयेत् ।

## बल्यकरणे प्रा यश्चित्तम्

प्रातःकाले बलिभ्रमणे हीने वैष्णवं सौरं, सौम्यं, प्राजापत्यं च, जहुयात् ।

प्रदक्षिणे हीने अधिके च वैष्णवं, गारुडं, च हुत्वा; बलिभ्रमणं कारयेत् ।

प्रातर्बलौहीने मध्याह्ने द्विगुणं, मध्याह्ने च हीने सायं त्रिगुणं कुर्यात् ।

एकाहे हीने नित्याग्नौ चुल्यां वा अग्निंपरिस्तीर्य वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं दिग्देवत्यं च, हुत्वा; विधिना प्रदक्षिणं कारयेत् ।

द्व्यहे द्विगुणं, त्र्यहेत्रिगुणम्, एवं द्वादशांहान्तं वर्धयेत् ।

द्वादशाहे अतीते अग्निमौपासनमादाय; वैष्णवं विष्णुसूक्तं, पुरुषसूक्तं श्रीभूमिदेवत्यं ब्राह्मं रौद्रं दिग्देवत्यं च हुत्वा; पूर्ववत् बलिभ्रमणं कारयेत् । मासेऽतीते पौण्डरीकाग्नि मादाय वैष्णवं, विष्णुसूक्तं पुरुषसूक्तं पारमात्मिकं, ईकारादीं स्तदालयगतपरिषद्देवत्यं च हुत्वा; तथैव बलिभ्रमणं कारयेत् ।

द्विमासे द्विगुणं, त्रिमासे त्रिगुणम्, एवं संवत्सरान्तं वर्धयेत् । संवत्सरे अतीते देवाभिमुखे, दक्षिणे वा, सभ्याऽग्निं संसाध्य; वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीभूमिदेवत्यं, सर्वदेवत्यं च, जुहुयात् । आचार्यदक्षिणां दत्वा; बल्युद्धरणं कारयेत् ।

अन्नबलौ भूमौ पतिते भिन्ने जीर्णे च पूर्ववत् बलिमापाद्य; वैष्णवं, गारुडं प्राजापत्यं च हुत्वा; प्रदक्षिणं कारयेत् ।

बल्युद्धरणकाले येनकेनचित् विध्नश्चेत् सौरं; सौम्यं वैष्णवं च हुत्वा; पुन रारभेत । पात्रालाभे हविः पात्र मादाय वैष्णवं जुहुयात् ।

प्रमाणहीने अन्नबलौ वैष्णवं प्राजापत्यं च जुहुयात् ।

देवस्यालंकारेहीने श्रीदेवत्यं, छत्रपिञ्छादीनामलाभे वारुणं, चामरादीनामलाभे वायव्यं, दीपालाभेच आग्नेयं वैष्णवं च, प्रत्येकं व्याहृत्यन्तं जुहयात् ।

दोषदुष्टहविर्निवेदन प्रायश्चित्तं कारयेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे नित्यार्चनप्रायश्चित्त (बलि)विधिर्नाम षट्षष्टितमः पटलः॥६६॥

# अथ सप्तषष्टितमः पटलः

अथ स्नपनप्रायश्चित्तविधिं वक्ष्ये –

## स्नपनत्रैविध्यम् तदकरणे प्रा०

स्नपनं च त्रिविधं नित्यं नैमित्तिकं काम्यंचेति अयनद्वये तथा विषुवेच स्नपनं यत्तन्नित्यम् चंद्रसूर्ये राहुग्रस्तेवा यत्स्नपनं तन्नैमित्तिकम् शेषेषु यत्स्नपनं तत्काम्यम् ।

नित्यस्नपने हीने वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, वारुणं च, दशकृत्वो हुत्वा पुनः स्नपनं कारयेत् ।

ग्रहणकाले देवस्य स्नपनेहीने महत्तरोदोषो भवति, पूर्ववत्प्रायश्चितं हुत्वा; पश्चात्प्रयत्नेन स्नपनं कारयेत् ।

काम्येषु स्नपनेषु हीनेषु पूर्ववत् प्रायश्चितंहुत्वा; शुद्धोदकैर्वा स्नापयेत् ।

आलयाभिमुखे उत्तरे वा स्नपनालय मुत्तमं, ऐशान्यां मध्यमं, दक्षिणपश्चिमयो रधमं ।

आग्नेयादिषु कोणेषु स्नपनं चेद्वैष्णवं विष्णुसूक्तं पुरुषसूक्तं दिग्देवत्यमंत्रांश्च हुत्वा; स्नपनं कारयेत् ।

संन्ध्याकाले नैमित्तिके स्नपने प्राप्ते तन्नैमित्तिकं समाप्य; पश्चान्नित्यपूजां समाचरेत् ।

## पूर्वरात्रौ प्रतिसरबंन्धाद्यभावे प्रा यश्चित्तम्

पूर्वरात्रौ प्रतिसरबंधनं, शयनं च विहीनं चेत् वैष्णवे श्रीभूमि देवत्यं सौदर्शनं च हुत्वा; तत्काले शयनाधिवासं हित्वा प्रतिसरबंधनमेव कारयेत् ।

एकबेरे कौतुके च शयनं विना प्रतिसरबन्धनं सद्य एव कुर्यात् ।

अंकुरार्पणे कृते स्नपनेहीने वैष्णवं सौम्यं श्रीभूमि देवत्यं वैघ्नं च हुत्वा; स्नपनं कारयेत् । अंकुरार्पणं विना स्नपनं कारयेदिति केचित् ।

श्वभ्रे पंङ्तौवा प्रमाणहीने आधिके च वैष्णवं, श्रीभूमि(भू) देवत्यं, पंङ्तीशमन्त्रं च, जुहुयात् ।

विष्वक्सेनार्चने हीने वैष्णवे, वैष्वक्सेनं च, जुहुयत् ।

पंङ्क्तीशस्याऽर्चने हीने तन्मन्त्रं, जयादींश्च, जुहुयात् ।

इंद्रादीनामर्चने हीने तत्तन्मन्त्रं वैष्णवं च, जुहुयात् ।

कलशेषु प्रमाणहीनेषु अधिकेषु च वैष्णवं, वायव्यं, आग्नेयं च, जुहुयात् ।

मृत्सु हीनासु वैष्णवं, महीदेवत्यम्, पर्वतेषु हीनेषु तत्तद्वर्णहीनेषु प्रमाणहीनेषु च वैष्णव, माग्नेयं च, धान्येषु हीनेषु वैष्णवं, वायव्यं च, अंकुरेषु हीनेषु गारुडं व्याहृतीश्च, अष्टमंगलेषु हीनेषु तत्तद्वर्णहीनेषु, प्रमाण हीने च, वैष्णव मैंद्रं च, जुहुयात् ।

पञ्चगव्ये योगक्रियाहीने मंत्रहीनेच, वैष्णवं, रौद्रंच, जुहुयात् ।

पञ्चगव्यादि द्वादशप्रधानद्रव्येषु उक्तप्रमाणहीनेषु जलेनपूरयित्वा, तत्तदधिदैवतमंत्रं, वैष्णवं च, जुहुयात् ।

द्रव्याणां संकरे वैपरीत्ये तत्तदधिदेवार्चने हीने मंत्रसंकुले हीने च नित्याग्नावष्टोत्तरशतं वैष्णवं यजेत् ।

पुण्यपुष्पाद्युक्तद्रव्यालाभे यथालाभं संगृह्य; तत्तदधिदेवतामंत्रं, वैष्णवं च, जुहयात् ।

साधिते कलशे (भिन्ने) हीने अन्यंकलशमादाय तथैवाऽऽपूर्य, अभ्यर्च्य; वैष्णवं दशशो जुहुयात् ।

विपर्यासोद्धृतद्रव्येण स्नापयेत् चेत् वैष्णवं, तत्तद्द्रव्याधिपदेवत्यं च हुत्वा; तद्द्रव्यं संशोध्य; शुद्धोदकैः स्नापयेत् ।

कलशन्यासे कृते श्वकाकाद्यस्पृश्यस्पर्शने सति अन्यंकलशमादाय पूर्ववत् संसाध्य शांतिं वैष्णवं च जुहुयात् ।

द्रव्येषु क्रिमिकीटादि पतने सति तत्त्यक्त्वाअन्यद्द्रव्यं संगृह्य वैष्णवे तद्द्रव्याधिपदेवत्यं च जुहुयात् ।

रत्नानामलाभे वैष्णवं हुत्वा सुवर्णं निक्षिपेत् ।

द्वादशवस्त्रालाभे बैष्णवं, श्रीदेवत्यं च, हुत्वा अष्ट चत्वारिवा आच्छाद्य स्नपनं कारयेत् ।

यथोक्तस्नपने येन केन चिदसंभृतेसति विंशतिकलशादि पंच-

कलशान्तैःकलशैः स्नपयेत् ।

अथवा शुद्धस्नपनविधिना स्नापयेदित्येके ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे स्नपनप्रायश्चित-विधिर्नाम सप्तषष्ठितमः पटलः ॥६७॥

# अथ अष्टषष्टितमः पटलः

अथोत्सवप्रायश्चित्तं वक्ष्ये –

## ध्वजारोहणहीने

ध्वजारोहणहीने चोत्सवे कृते स उत्सवो निष्फलो भवति, तस्मा-त्सर्वप्रयत्नेन ध्वजारोहणं कृत्वा उत्सवं कारयेत् ॥

## उक्तमासे अज्ञानादुत्सवाऽकरणे प्रा०

उक्तमासे चोक्तनक्षत्रे अवभृथं संकल्प्य ध्वजारोहणं कृत्वा; अज्ञानादर्थलोभाद्वा येनकेनचिदुत्सवं न कुर्यात् द्वितीये मासे तद्दिने अवभृथं संकल्प्य तद्दिनात्पूर्वं तीर्थाऽकुरार्थं मृत्संग्रहणं कृत्वा; उत्सवमारभेत ।

अस्य प्रायश्चित्त मञ्जाग्नौ वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, ध्वाजं, गारुडं, वैष्वक्सेनं, सौदर्शन, मुत्सवाधिदेवत्यं च, व्याहृत्यंतं, हुत्वा; वैष्णवान् संपूज्य उत्सवं कारयेत् । उत्सवस्याऽवभृथ तक्षत्र संख्याक्रम विपर्यासेनाऽवभृथं कुर्याच्चेत् उत्सवाधिदेवत्यं, तिथिवारनक्षत्रं च, द्विर्हुत्वा; ब्राह्मणान् भोजयेत् ।

## ध्वजे गरुडप्रतिष्ठाहीने प्रा०

ध्वजारोहणे गरुडप्रतिष्ठाविहीने वैष्णवं, विष्णुसूक्तं, पुरषसूक्तं, ध्याजं, गारुडं च, शतशो हुत्वा; पुनः प्रतिष्ठां कारयेत् ॥

## ध्वजदैवादि पूजनहीने प्रा०

ध्वजदैवचक्रविष्वक्सेननन्दीशानामर्चनं, निवेदनं वा, हीनंचेत् वैष्णवं, तत्तद्देवत्यं च, हुत्वा; पुनरभ्यर्च्य निवेदयेत् ॥

## भेरीताडनहीने प्रा०

भेरीताडनहीने रौद्रं, व्याहृतीश्च, हुत्वा; भेरीताडनं कारयेत् ।

## ध्वजगरुडनिवेदनहीने, तस्य-मुद्गान्ननिवेदनहीने च

ध्वजारोहणे कृते गरुडस्य निवेदने हीने वैष्णवं, ध्वाजं, गारुडं च, हुत्वा, द्विगुणं निवेदेयत् ।

तस्य मुद्गान्ननिवेदनहीने वैष्णवं, ध्वाजं, गारुडं च, हुत्वा; यत्नेन यथोक्त मौद्गिकं निवेदयेत् ॥

## ध्वजस्य चौरापसरणादौ प्रा०

ध्वजदंडे चोराद्यपहृते हीने अग्निदग्धे अशनिनोत्पातिते च वैष्णवं, वायव्य, माग्नेयम्, इंकारादीन् गारुडं, ध्वाजं च, हुत्वा; ध्वजदण्डमारोप्य; पूर्ववत् ध्वजमारोप्य; उत्सवशेषं कारयेत् ।

## ध्वजपटपतने प्रा०

ध्वजगरुडे पतिते ब्राह्मं, प्राजापत्यं, सौरं, सौम्यं, आग्नेयं, व्याहृतीश्च, हुत्वा; पूर्ववत् घण्टासहितमारोपयेत् ।

## ध्वजगरुडस्य वर्षादिबाधे दोषाभा०

ध्वजगरुडस्याऽऽकाशचारित्वात्तस्यवर्षाऽऽतपबाधो न दोषाय भवति ।

## नियतकाले उत्सवाकरणे प्रा०

कालोत्सव मुक्तमासे न कुर्याच्चेत् अन्यस्मिन् मासे तद्दिने च अवभृथं संकल्प्य; उत्सवंकारयेत् । अस्य प्रायश्चित्तं वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, ध्वाजं, गारुडं च, दशशो हुत्वा; वैष्णवान् संपूज्य; आचार्यदक्षिणां दत्वा; उत्सवमाचरेत् ।

## उत्सवादौ स्नपनहीने प्रा०

उत्सवादौ स्नपनेहीने वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, वारुणं च, हुत्वा, शुद्धोदकै रभिषेचयेत् ।

## उत्सवार्थप्रतिसरहीने

उत्सवार्थं प्रतिसरबंधने हीने वैष्णवं वैष्वक्सेनं, सौदर्शनं च, हुत्वा; पुनःप्रतिसरं बध्नीयात् ।

## यज्ञशालाकुम्भवेद्योः प्रमाणहीनाधिक्ययोः प्रा०

यज्ञशालायां कुंभवेद्यां प्रमाणहीनायां, अधिकायां च, वैष्णव माग्नेयं, भूमिदेवत्यं च, जुहुयात् ।

## तोरणदर्भमालाऽलङ्काराणां हीने प्रा०

तोरणानामलाभे दौवारिकदेवत्यं, दर्भमालायां हीनाया मार्षं, अलंकारहीने श्रीदेवत्यं च, जुहुयात् ।

## प्रातः सायंबल्यादि हीने, प्रा०

प्रातःकाले बलिं निर्वाप्य; उत्सवेहीने वैष्णवं, वैष्वक्सेनं, गारुडं, तदुत्सवाधिदेवत्यं च, हुत्वा; सायंद्विगुणमुत्सवं कारयेत् । सायेहीने प्रातर्द्विगुणं वर्धयेत् ।

## एककालोत्सवेविशेषः

एककालोत्सवश्चेत् द्विकालंबलिंनिर्वाप्य सायाह्ने चोत्सवं कारयेत् । तत्कालातीतं पूर्वेवाकृतं चेत् पूर्ववत्कृत्वा उत्सवं कारयेत् ।

## बलिमात्रहीने प्रा०

बलिप्रदाने हीने बलिरक्षकदेवत्यं, दिग्देवत्यं च, हुत्वा; तथैव बलिप्रदानं कारयेत् ।

## बलिद्रव्यतत्पात्रयोः पतने पात्रस्य भेदने नाशे च-प्रा०

बलिद्रव्ये, पात्रे वा, भूमौपतिते, भिन्ने, नष्टे वा, पूर्ववत्प्रायश्चित्तं हुत्वा; भूतपीठे बलिशेषं (तदनुक्तस्थाने बलिशेषं निर्वपेच्चेत्, वैष्णवं अक्षहन्तृमन्त्रं वैष्वक्सेनं, गारुडं सौदर्शनं च, हुत्वा भूतपीठे बलिशेषं)

क्षिपेत् । देवस्य द्विगुणार्चने हीने, हविर्निवेदने च हीने, वैष्णवं, शांतिं हुत्वा; द्विगुणमभ्यर्च्य; निवेदयेत् ।

## उक्तहोमे हीने

यथोक्त होमे हीने वैष्णुवं, विष्णुसूक्तं पुरुषसूक्तं त्रयस्त्रिंशत्कृत्वो हुत्वा; यथोक्तं जुहुयात् ।

चक्रवीशाऽमितानां कुंभदेवानांचाऽर्चनं हविर्निवेदनं च हीनं चेत्; वैष्णवं विष्णुसूक्तं पुरुषसूक्तं वैष्वक्सेनं गारुडं सौदर्शनं च हुत्वा; पुनरभ्यर्च्य; निवेदयेत् ।

## देवस्यालङ्कारे हीने

देवस्याऽलंकारे हीने वैष्णवं, श्रीदेवत्यं च, जुहुयात् ।

## अलङ्कारद्रव्येषु निर्माल्याऽनिर्माल्यविभागः

अलंकारद्रव्येषु पुष्पगन्धौद्वौ निर्माल्यौ भवतः तौहित्वा अन्यानि द्रव्याणि प्रक्षाल्य पंचगव्यैःप्रोक्ष्य तत्तद्रव्यै रलंकुर्यात् ।

## नृत्त गानस्तोत्र भक्तपरिवृतिच्छत्रपिञ्छादीनां हीने

नृत्ते गेये च हीने वैष्णवं रौद्रम्, स्तोत्रे हीने ब्राह्मं सारस्वतं; भक्तैः परितोहीने वारुणं, वैष्णवं, वैष्वक्सेनं च, छत्रपिञ्छादैहीने वैष्णवं, सौम्यं; चामरादौ हीने वैष्णवं, हवीरक्षकदेवत्यं च जुहयात् ॥

## देवस्य यानात्पतने

देवेशेयानात्पातिते शीघ्रमुद्धत्य 'क्षमस्वे' ति प्रणम्य, शुद्धोदकै रभिषिच्य; वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं; दिनाधिदेवत्यं च, हुत्वा; पुनरुत्सवं कारयेत् ।

## चक्रवीशादिर्बिंबाभावे

चक्रवीश (शा, मिता) शांतानां बिंबाऽभावे पृथक् पृथक् पात्रेषु समावाह्याऽभ्यर्च्य; तत्तद्देवत्यंहुत्वा; पश्चादुत्सवं कारयेत् ।

## एतेषां पतने प्रा०

एतेषां पतने पूर्ववदुद्धृत्य स्नापयित्वा तत्तद्दैवत्यं वैष्णवं च जुहुयात्। भूमौ पतिते अन्नाऽर्घ्यपुष्पबलौ पूर्ववद्बलिमापाद्य, वैष्णवं च; बलिरक्षकदेवत्यं च जुहुयात्।

## यानात्पतितस्याऽङ्गहीने

यानात्पतिते हीनांगे पद्माग्नौ महाशांतिं हुत्वा; तच्छक्तिं ध्रुवबेरेसमारोप्य; कौतुकं, स्नपनं, बलिबेरं वा, अलंकृत्य; आवाह्याऽभ्यर्च्य; उत्सवं कारयेत्।

## कौतुकादि बेराऽभावे

बेराभावे पात्रे रत्नं, सुवर्णं वा, निक्षिप्य; आवाह्य; अभ्यर्च्य; दिने दिने महाशान्ति महाहोमं च हुत्वा; उत्सवं कारयेत्। हीनाऽङ्गतद्बेरं पुनस्संधानविधिना संधानं कृत्वा; पुनःप्रतिष्ठां कारयेत्।

## नदीपर्वतसमीपे देवालयसत्त्वे

नदीसमुद्रपार्श्वे, पर्वतपार्श्वे वा, विमानं यत्र दृश्यते तत्र ध्वजारोहणंकृत्वा; तदालयं परितो, बलिदान, मुत्सवं च, कारयेत्, तत्समीपे ग्रामादौ सति तत्र बलिदान मुत्सवं च, कारयेदित्येके।

## गायकनर्तकयोः पतने

गातुर्नर्तुश्च पतने श्रीदेवत्यं, वैष्णवं च, वादकानां पतने ब्राह्मं रौद्रं च, आचार्यादीनांपतने, संक्षोभे च, आर्षं, वैष्णवं च, ध्वजादीनां पतने ध्वाजं, वारुणं, वायव्यं च, जुहुयात्।

## उक्तकाले वर्षादिना उत्सवाऽकरणे

वर्षधाराऽतिवाताऽशनिपातविद्युल्लेखायुते काले देवेशस्य उत्सवंन कुर्याच्चेद् वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, श्रीभूमि देवत्यं च, हुत्वा; उत्सवं कारयेत्।

## वीथिमध्ये वर्षादिस्पर्शे प्रा०

वीथ्यन्तरे वर्षधाराप्रवेशे तृणपांसुयुतवातस्पर्शे च देवेशं संस्नाप्य; वैष्णवं, दिग्देवत्यं, वारुणं, वायव्यं, यद्देवादींश्च हुत्वा; पुनरुत्सवं कारयेत् ।

## उत्सवकाले कलहादौ प्रा०

उत्सवकाले कलहरुधिरस्रावेषु सत्सु वैष्णव माग्नेयं ब्रांह्मं रौद्रं दिनाधिदैवत्यं च जुहुयात् ।

## आलयाभ्यन्तरे शस्त्रादिनामरणे प्रा०

आलयाभ्यन्तरे शस्त्राद्यैर्मरणे सति तच्छीघ्रमपहाय अब्जाऽग्नौ महाशांतिं तद्दिनाधिदेवत्यंच जुहुयात् ।

## वीथ्यां मरणसम्भवे प्रा०

वीथ्यांमरणादौ संभूते तच्छीघ्रं व्यपोह्य शान्तिहोमं हुत्वा उत्सवं कारयेत् । एकनाडिका यामादर्वाक्कालंगतंचेत्पुनरुत्सवं कारयेत् ।

## अशीतिदण्डाभ्यन्तरे शवेसति प्रा०

आलयस्याऽशीति दण्डाभ्यन्तरे वीथ्यां शवेसति तत्रोत्सवं न कुर्यात्, कुर्याच्चेद्राजराष्ट्रविनाशाय भवति, तस्माच्छीघ्रमपहाय, प्रायश्चित्तं महाशांन्तिं पार्षदं च हुत्वा पुनरुत्सवं कारयेत् ।

## उत्सवमध्ये अन्योत्सवशुभकर्मकरणे प्रा०

ध्वजारोहणादूर्ध्वं तीर्थदिनात्पूर्वं अन्योत्सवं शुभकर्माणि न कुर्यात्; कुर्याच्चेदाभिचारिकं भवति; तद्दोषशमनार्थं वैष्णवं विष्णुसूक्तं पुरुषसूक्तं पार्षदं च हुत्वा ब्राह्मणान् भोजयेत् ।

## तीर्थदिनात्पूर्वरात्रौ प्रतिसरबन्ध शयनाऽभावे प्रा०

तीर्थदिनात्पूर्वरात्रौ प्रतिसरबंधने शयने वा हीने वैष्णवं श्रीभूमिदेवत्यं सौदर्शनं च हुत्वा ते समाचरेत् ।

## तीर्थस्नानकाले अतीते हीने वा प्रा०

तीर्थस्ननकाले अतीते हीने वा वैष्णवं वारुणं स्कंददेवत्यं च जुहुयात्।

### तीर्थदिनेरात्रौ ध्वजावरोहणहीने प्रा०

तद्रात्रौ ध्वजावरोहणे हीने ध्वाजं गारुडं वैष्णवं च जुहुयात् ॥

### अवरोहणे बलिहीने प्रा०

अवरोहणे बलौहीने ध्वजदेवं संपूज्य, वैष्णवं, तदालयगतपरिषद्देवत्यं च हुत्वा ध्वजाऽवरोहणं कारयेत् ।

### उत्सवान्तस्नपनहीने प्रा०

उत्सवान्तस्नपने हीने वैष्णवं विष्णसूक्तं जयादि मूर्त्तिमन्त्राँश्च जुहुयात् ।

### अनुक्तदोष प्रा०

अत्रानुक्तदोषाणां प्रायश्चित्तं वैष्णवं विष्णुसूक्तं पुरुषसूक्तं गायत्रीं च जुहुयादिति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे उत्सवप्रायश्चित्त-विधिर्नामा अष्टषष्टितमः पटलः ॥६८॥

## अथ एकोनसप्ततितमः पटलः

अथास्पृश्यस्पर्शने प्रायाश्चित्तं वक्ष्ये –

### मूषकादि स्पर्शनादौ प्रा०

मूषकसर्पकृकलास मंडूकमार्जार नकुलादिषु गर्भागारं प्रविष्टेषु विण्मूत्र विसर्जने च तद्व्यपोह्य; पञ्चगव्यैः 'आपो हिष्ठा' दिना प्रोक्षयेत्। तेषुध्रुवमारूढेषु विण्मूत्र विसर्जने च क्षिप्रं वस्त्रेण शोधयित्वा; शुद्ध्यर्थं कुशेन मार्जयित्वा कुशोदकेन आपोहिरण्य पवमानैः प्रोक्ष्याऽर्चयेत्। तैः अन्यबिंबेषु स्पृष्टेषु शुद्धोदकै स्संस्नाप्य प्रोक्ष्य पूर्ववदर्चयेत् ॥

### सूतिकादीनां प्रथमवरणे प्रवेशे प्रा०

सूतिकोदक्यारजकध्वजाऽऽद्यन्त्यजातिभिः प्रथमावरणे प्रविष्टे,

परिषद्देवाना मर्चास्थाने संस्पृष्टे, प्रविष्टे च दर्भोल्केनोद्दीप्य वास्तुस्न-पनोक्तमन्त्रैः पञ्चगव्यप्रोक्षणं पुण्याहं च कुर्यात्, नित्याग्नौ दौवारिकमंत्रं, द्वारपालकमन्त्रं वैष्णवं च जुहुयात् । बाह्याऽऽवरणस्य संमार्जनोपलेपनप्रोक्षणैः शुद्धिर्भवति ॥

## सूतिकादीना मर्चनाकाले दर्शने प्रा०

तेष्वर्चनाकाले वा दृष्टेषु देवं पञ्चगव्येनाऽभिषिच्य शुद्धोदकै स्ससंस्नाप्य प्रोक्षणैः प्रोक्ष्य पूर्ववत्हुत्वा अर्चयेत् ।

## आलयाभ्यन्तरे सूतिकादि प्रवेशो तत्पृष्टहविर्निवेदने प्रा यश्चित्तम्

आलयाभ्यन्तरे प्रविष्टे तत्स्पृष्टहविर्निवेदने च द्रव्यं यथाविधि शोधयित्वा वास्तुहोमं हुत्वा पर्यग्निपञ्चगव्याभ्यां शोधयित्वा पुण्याहं देवं कलशैस्संस्नाप्य नित्याग्नौ वैष्णवं विष्णुसूक्तं पुरुषसूक्तं रौद्रं सौम्यं ब्राह्मं श्रीसूक्तं महीसूक्तं च हुत्वा ब्राह्मणान् भोजयेत् ।

## ध्रुवबेरादौ सूतिकादि स्पृष्टे प्रा०

ध्रुवबेरे कौतुकादिषु च स्पृष्टेषु पूर्ववच्छुद्धिं कृत्वा वास्तुहोमं हुत्वा पर्यग्निपञ्चगव्याभ्यां शोधयित्वा पुण्याहं कृत्वा देवं कलशैः संस्नाप्य अब्जाग्नौ महाशान्तिं हुत्वा पुनः प्रतिष्ठां कारयेत् ।

## शूद्राद्यनुलोमस्पृष्टहविर्निवेदने प्रा०

शूद्राद्यनुलोमस्पृष्टहविर्निवेदने देवं पञ्चगव्यैः शुद्धोदकैश्चाभिषिच्य पुण्याहं वाचयेत् ।

## महापातकिनां प्रवेशो, तत्स्पृष्टहविर्निवदनेच्च प्रा०

पञ्चपातकै श्चंण्डालाद्यै श्चाऽऽलये प्रविष्टे तत्सपृष्टहविर्निवेदने च सप्ताहं महाशान्तिं हुत्वा आलय मभ्युक्ष्य पुनः प्रतिष्ठां कारयेत् ।

## ध्रुवबेरादौ महापातकि प्रभृतिभिस्स्पृष्टे प्रा०

ध्रुवबेरे कौतकादिषु स्पृष्टेषु पूर्ववच्छुद्धिं कृत्वा सप्ताहं महाशांतिं

हुत्वा वित्तानुसारेण कलशै स्संस्नाप्य पुनः प्रतिष्ठां कारयेत् ।

## पतितस्य गर्भगृह प्रवेशे प्रा०

पतिते गर्भगृहे प्रविष्टे वास्तुशुद्धिं कृत्वा महाशांतिं हुत्वा अर्चयेत् ॥

## महापातकादीनां प्रथमे द्वितीये वा आवरणे निरन्तरसञ्चारे प्रा०

एतेषु प्रथमावरणे, द्वितीये वा, नैरंतर्येण संचरत्सुमासे अतीते, मासमेकं महाशान्तिं हुत्वा कर्षणादि पुन स्संस्कारं कृत्वा महाप्रतिष्ठां कारयेत् ।

## महापातकि प्रभृतीनां संवत्सरं प्रासादाभ्यन्तरे संचारे प्रा०

तेषु प्रासादाऽभ्यन्तरे बाह्ये च संचरत्सु संवत्सरे अतीते अर्चनादीनि संत्यज्य कौतुकादि रक्षणं कृत्वा गर्भागारादि सप्तप्राकारेषु गाः वासयित्वा मासेऽतीते सर्वत्र शुद्धिं कृत्वा मासत्रयं महाशान्तिं हुत्वा कर्षणादि पुनस्संस्कारं कृत्वा बालालयं संकल्प्य जलाधिवासादीनि कारयित्वा बिंबशुद्धिं कृत्वा अशीत्यधिक सहस्र कलशै स्संस्नाप्य ब्राह्मणान् भोजयित्वा वैष्णवान् संपूज्य देवं बालालये प्रतिष्ठाप्य आलयादि सर्वत्र नवीकरणं कृत्वा महाप्रतिष्ठां कारयेत् ॥

## तत्संसर्गिणां स्पर्शे प्रा०

तै स्संसर्गिणां स्पर्शे सूतिकादीना मुक्तं प्रायश्चित्तं कारयेत् ।

## तत्संसर्गिस्पर्शे प्रा०

तत्संसर्गिणां स्पर्शे स्नपनादिना शुद्ध्यति ॥

## तत्संसर्गिस्पर्शे दोषो न

तत्संसर्गिणां दोषो नास्ति ॥

## आशौचिद्विज स्पृष्ट हविर्निवेदने प्रा०

अशौचिद्विजस्पृष्टहविर्निवेदने च एकाहं महाशान्तिं हुत्वा शुद्धोदकै-

रभिषिच्य पुण्याहं वाचयित्वा पूर्ववदर्चयेत् ।

### ध्रुवबेरादौ आशौचिद्विजस्पृष्टे प्रा०

ध्रुवबेरकौतुकादिषु संस्पृष्टेषु पूर्ववन्महाशांतिं हुत्वा पुनः स्थापन माचरेत् ।

### गर्भालयाद्बाह्ये सर्वत्र आशौचि द्विजप्रवेशे प्रा०

आलयाद्बाह्ये सर्वत्र प्रविष्टे गौरवं लाघवं च ज्ञात्वा समूह्यैव कारयेत्

### खद्योतादीनां गर्भालय प्रवेशे, तै र्बिम्बे स्पृष्टे वा प्रा०

खद्योतपक्षिजाति प्रवेशे बिंबे स्पृष्टे पूर्ववत् पर्यग्नि पञ्चगव्याभ्यां-शोधयित्वा देवं शुद्धोदकैरभिषिच्य प्रोक्षणैः प्रोक्ष्य नित्याग्नौ चुल्यां वा वैष्णवं जुहुयात् तत्समीपस्थान् बिंबादीन् पूर्ववत् संशोध्य शुद्धोदकै-स्संस्नाप्य पुण्याहं वाचयित्वा पूर्ववत् होमं जुहुयात् ।

### पूर्वोक्तदेशेषु मनुष्यादीनां ताडनादौ प्रा०

पूर्वोक्तदेशेषु मनुष्याणां श्वकुक्कुटादीनां च छेदने ताडने रुधिरस्रावे मृतादौ संभूते तद्व्यपोह्य तद्देशशुद्धिं कृत्वा वास्तुहोमं हुत्वा देवं सप्तभिः कलशैः संस्नाप्य तद्दोषशमनार्थं महाशान्तिं हुत्वा पूर्ववदभ्यर्च्य (प्रतिष्ठां कारयेत्) हविर्निवेदयेत् ॥

### आलायाद्बाह्ये पूर्वोक्त ताडनादि संभवे प्रा०

आलयाद्बाह्ये संभूते पूर्ववत् पर्यग्निंकृत्वा देवंशुद्धोदकै स्संस्नाप्य शांतिहोमं हुत्वा वैष्णवाान् संपूज्य पूर्ववदर्चयेत् ।

### देवस्य शवदर्शने प्रा०

देवेन शवे दृष्टे देवं संस्नाप्य वैष्णवं विष्णसूक्तं पुरुषसूक्तं जुहुयात् ।

### प्रथमावरणे गजादिमरणे प्रा०

प्रथमावरणे गजाऽश्वपशुगर्दभादिषु मृतेषु तद्देशं खनित्वा वास्तुहोमं हुत्वा शुद्धोदकै रभिषिच्य वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च जुहुयात् ।

## महाबेरेस्वेदादि दर्शने प्रा०

महाबेरेहि स्वेदरुधिरस्रावरोदन जल्प हास धूमादिषु सत्सु आलयाऽभिमुखे पौण्डरीकाऽग्निं साधयित्वा वैष्णवं विष्णुसूक्तं पुरुषसूक्तं ईङ्कारादींश्च हुत्वा देवंकलशैस्संस्नाप्य अभ्यर्च्य हविःनिवेद्य ब्राह्मणान् भोजयित्वा वैष्णवान् संपूज्य आचार्यदक्षिणां दद्यात् ।

## वल्मीकादि सम्भवे प्रा०

वल्मीकतृणक्रिमिकीटकवकाद्युद्भवे सति पूर्ववच्छान्तिं हुत्वा ब्राह्मणान् भोजयित्वा देवं बालालये प्रतिष्ठाप्य नवीकरणं कारयेत् ।

## विमानेऽकारणाद्भिन्ने प्रा०

विमाने अकारणाद्भिन्ने पतिते शुद्धिं कृत्वा मासत्रयं महाशान्तिं हुत्वा, कर्षणादि पुनः संस्कारं कृत्वा, बालालयं संकल्प्य, जलाधिवासादीनि कारयित्वा, बिम्बशुद्धिं कृत्वा, अशीत्यधिकसहस्रकलशैः संस्नाप्य, ब्राह्मणन् भोजयित्वा, वैष्णवान् सम्पूज्य, देवं बालाऽऽलये प्रतिष्ठाप्य, आलयादि सर्वत्र नवीकरणं कृत्वा, महाप्रतिष्ठां कारयेत् ।

## अशनिहते महामक्षिकयुते च विमाने प्रा०

अशनिहते महामक्षिकादि युते च देवं कलशैः संस्नाप्य, विशेषपूजां कृत्वा प्रभूतं निवेद्य, शान्तिं हुत्वा ब्राह्मणान् भोजयित्वा, पुनस्सन्धानं कारयेत् ।

## आकाशे प्रतिसूर्यदर्शने प्रा०

आकाशे प्रतिसूर्यदर्शने वैष्णवं, सौरं दशकृत्वो जुहुयात् ।

## दिग्दाहे प्रा०

दिग्दाहे वैष्णवं, दिग्देवत्यं, आग्नेयं च जुहुयात् ।

## उपलवर्षे प्रा०

उपलवर्षे वारुणं वैष्णवं त्रयस्त्रिंशत्कृत्वो जुहयात् ।

### अकाले इन्दुक्षयादौ प्रा०

अकालेइन्दुक्षये पूर्तौ प्रतिदर्शने महोत्पाते च महाशान्तिं हुत्वा देवं विशेषतोऽभ्यर्च्य हविर्निवेद्य बाह्मणान् भोजयेत् ।

### आलयाभ्यन्तरादौ रक्तस्त्री दर्शने प्रा०

आलयाभ्यन्तरे बाह्ये प्राकारे वा रक्तस्त्रीदर्शने तं देशं संशोध्य पञ्चगव्यैः प्रोक्ष्य पुण्याहं वाचयित्वा ब्राह्मणान् भोजयित्वा देवं विशेषतोभ्यर्च्य हविर्निवेदयेत् ।

### ध्रुवबेरादौ रक्तस्त्रीस्पृष्टे प्रा०

ध्रुवबेरे कौतुकादौ स्पृष्टे ध्रुवबेरशुद्धिं, जलाधिवासं च कृत्वा पुनःप्रतिष्ठां कारयेत् ।

### गर्भगृहे सर्पादिदर्शने प्रा०

गर्भगृहे सर्पादि दर्शने तदुद्वास्य गोमयेनोपलिप्य पञ्चगव्यैः प्रोक्ष्य औपासनाग्निमादाय वैष्णवं शान्तिं हुत्वा पुण्याहं वाचयित्वा ब्राह्मणान् भोजयेत् ।

### तत्र सर्पमरणे प्रा०

तत्र सर्पे मृते तं व्यपोह्य उपलिप्य पञ्चगव्यैः प्रोक्ष्य वास्तुशुद्धिं कृत्वा देवं चतुर्विंशति कलशैः संस्नाप्य अब्जाग्नौ एकाहं महाशान्तिं जुहुयात् ।

### ध्रुवादौ सर्पादिभिः स्पृष्टे प्रा०

ध्रुवकौतुकादिषु तैस्स्पृष्टेषु देवं शुद्धोदकैः संस्नाप्य महाशान्तिं हुत्वा पुण्याहं वाचयित्वा देवं विशेषतोऽभ्यर्च्य हवि र्निवेदयेत् ।

प्रासादाद्बाह्ये आवरणे सर्पे मृते तद्व्यपोह्य पूर्ववत्प्रोक्षणैः प्रोक्ष्य वैष्णवादि दिग्देवत्यं च जुहुयात् ।

### पचनालय गोपुरादौ सर्पादि मरणे प्रा०

पचनस्थाने गोपुरादिषु वा सर्पे मृते तदव्यपोह्य उपलिप्य नित्याग्नौ

वैष्णवान्तं तत्स्थानाधिपदेवत्यं च जुहुयात् ।

### आलयाभ्यन्तरे महावाताद्यभिभवे प्रा०

आलयाभ्यन्तरे सर्वत्र महावाताऽतिवृष्टिरादिभि रभिभूते देवं कलशैः संन्साप्य वास्तुहोमं हुत्वा पर्यग्नि पञ्चगव्याभ्यां शोधयित्वा पुण्याहं वाचयित्वा वैष्णवं विष्णुसूक्तं पुरुषसूक्तं श्रीभूमिदेवत्यं ब्राह्मं रौद्रं प्राजापत्यं च हुत्वा ब्राह्मणान् भोजयेदित्याह मरीचिः ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे अस्पृश्यस्पर्शन प्रायश्चित्तविधिर्नाम एकोनसप्ततितमः पटलः ॥६९॥

## अथ सप्ततितमः पटलः

### भयरक्षार्थं निष्कृतिः

अथ भयरक्षार्थं निष्कृतिं वक्ष्ये-चौरैः शत्रुभिः परचक्रभयाद्वा ग्रामसंकुले सति भयरक्षार्थं कौतुकस्नपनोत्सवबलिबेरलौहिकप्रतिमानां देवीनां च तिरोधानं कारयेत् ।

### तत्प्रकारः

गुप्ते शुचौ देशे अवटं खनित्वा सिकताःप्रक्षिप्य उपरि कुशानास्तीर्य अवटे महीं देवीमभ्यर्च्य "आपोहिष्ठे" ति प्रोक्ष्य आचार्यः अर्चको वा यजमानेन भक्तैस्सार्धं देवागारं प्रविश्य देवं प्रणम्य "यावत्कालं भयमस्ति ताद्धरण्या सह शयने शयीथा जनार्दने" ति देवेश मनुमान्य बिम्बस्थां शक्तिं ध्रुवबेरे समारोपयेत् । बेराभावे हृदये समारोपयेत् । "परं रंह" इति पीठमादाय" "प्रतद्विष्णुस्तपत" इति अवटेऽप्रमादं सन्यस्च "यद्वैष्णव" मिति प्राक्च्छिरसः शाययेत् । अवटं सिकताभिः मृदा वा पूरयित्वा अवटाच्छिद्रं सुदृढं कारयेत् ।

### तत आलये कौतुकादिस्थाने कूर्चस्थापनादि

पश्चादभ्यन्तरं प्रविश्य देवं प्रणम्य जीवस्थाने पञ्चदशदर्भैः ग्रथितं द्वादशाङ्गुलमात्रं कूर्चं सन्यस्य ध्रुवबेरात्कूर्चे समावाह्य अर्चयेत् ।

## बालालये सति कूर्चस्थापनादि

बालालयं चेदर्चापीठे कूर्चंसन्यस्य हृदयात्प्रणिध्यां निवेश्य कूर्चं बिंबवन्मनसाऽक्षराणि तत्स्थानेस्मृत्वा सन्यस्य आवाह्य अर्चयेत् । स्नपनादावभ्युक्षणमेव कारयेत् ।

## मासादूर्ध्वमन्यकूर्चास्थापनम्

मासादूर्ध्वं तत्कूर्चं व्यपोह्य अन्यत्कूर्चं सन्यस्य आवाह्य अर्चयेत् ।

## सुकाले कर्तव्यम्

सुकाले बिंबमुद्धृत्य, आम्लाद्यैस्संशोध्य, पुण्याहं कृत्वा अस्पृश्यै स्स्पृष्टेसति जलाधिवासादीनि कृत्वा कालापेक्षमकृत्वा अंकुरार्पणं कृत्वा आलायाभिमुखे दक्षिणे वा मण्टपं कूटं प्रपां वा कृत्वा तन्मध्ये पौण्डरीका ऽग्निकुण्डं कृत्वा तदुत्तरे वास्तुहोमं हुत्वा बिंबस्याऽतीवपार्श्वतः पर्यग्निं कृत्वा संशोध्य पौण्डरीकाग्नेः पश्चिमतो बिंबार्धाधिकायामविस्तारां भागोन्नतां यथालाभोन्नतां वा धान्यैः वेदिं कृत्वा अण्डजादीनि पञ्चवस्त्राण-यास्तीर्य चतुर्दश कलशैः संस्नाप्य पुण्याहान्ते प्रतिसरं बध्वा कौतुकस्नप नोत्सवबलिबेराणि देवीश्वसहैकशयने शाययेत् ।

अवताराणां शयनं पृथगेव विधीयते ।

अब्जाग्निं परिस्तीर्य, परिषिच्य, हौत्रं प्रशंस्य, देवेशं देव्या, अव ताराणां च दक्षिणप्रणिधौ तदालयगतपरिष द्देवानुत्तरप्रणिधौ च समावाह्य आवाहनक्रमेण निर्वापं कृत्वा आज्याहुती र्यजेत् ।

## शान्तिस्वरूपम्

वैष्णवं विष्णुसूक्तं पुरुषसूक्तं, विष्णुगायत्रीं द्वादशाक्षरं, प्राजापत्यं, मिंदाहुतीं, विच्छिन्नं च, जुहुयात् । एतत् शान्तिहोम इत्येके ।

## मासषट्केऽतीते महाशान्तिः, तत्स्वरूपं च

षण्मासे अतीते महाशान्तिं जुहुयात् । लाजतिल चूर्णापूप शक्तुभिराज्यमिश्रितैः वैष्णवं, विष्णुसूक्तं, प्रत्येकं द्वादशाष्टपर्यायतो जुहुयात् । अष्टोत्तरशतं पद्मं श्वेतं, रक्तं वा, अलाभे बिल्वपत्र वा, घृताप्लुतं,

विष्णुगायत्र्या जुहुयात् । सर्वदेवत्यं पारमात्मिकं च जुहुयात्। एवं महाशांतिरिति केचित् वदंति ।

पश्चादवताराणां तत्तन्मंत्रं प्रत्येकमष्टोत्तरशतं हुत्वा नृत्तगेयवाद्यैः रात्रिशेषं नयेत् । प्रभाते स्नात्वा, देवंप्रणम्य प्रणवेन बोधयित्वा अभि-वन्द्य अपराधशतं, सहस्र मयुतं, असंख्येयं च, 'करुणाब्धे क्षमस्वे' ति याचेत । पूर्ववस्त्रमाल्यादीनि व्यपोह्य अन्यैरलंकृत्य सर्ववाद्यघोषयुतं शाकुनसूक्तेन तोयधारापुरस्सरम् आचार्यः पुरतोगच्छेत् ।

स्थापका देवमुद्धृत्य आलयं प्रदक्षिणीकृत्य अभ्यन्तरं प्रविश्य पूर्ववत्स्थापयेयुः ।

आचार्योदेवपादं स्पृशन् वैष्णवं, विष्णुसूक्तं पुरुषसूक्तं, आत्मसूक्तं, जप्त्वा पूर्ववद्देवं ध्यात्वा ध्रुवबेराच्छक्तिं प्रणिध्यां निवेशयेत् । हृदये समरोपिताचेत् हृदयात्प्रणिधिजले समावाह्य पूर्ववदक्षरन्यासं कृत्वा आवाह्य तदालयपरिषद्देवान् पूर्ववदावाहयेत् ।

पादौ प्रक्षाल्य, अभ्यन्तरं प्रविश्य पुण्याहं वाचयेत् । आचार्यादिभ्यो दक्षिणां दद्यात् । अग्निं पीरस्तीर्य अन्तहोमंहुत्वा पश्चादुत्सवं स्नपनं च कारयेत् । अशक्तश्चेत्केवलस्नपने कारयेत् ।

## कूर्चादावर्चनाहीने प्रा०

अर्चनं हीनं चेत् अर्चनाहीनप्रायश्चित्तं कारयेत् ।

## वर्षेऽतीते प्रा०

वर्षाऽतीते च एतमेव संस्कारं कृत्वा पुनस्थापनमाचरेत् । अवताराणां पृथगेव कारयेदित्येके ।

तेषां पुनः प्रतिष्ठाचेत् तत्तत्प्रधानहोमं कारयेदित्येके ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे भृगूद्धृतप्रायश्चित्त-विधिर्नाम सप्ततितमः पटलः ॥७०॥

# अथ एकसप्ततितमः पटलः

## महाबेरविमानयोः पतनादौ कर्तव्यम्

अथ पुनर्बालालयविधिं वक्ष्ये –

महाबेरे विमाने च, पतिते, जीर्णे छिन्ने, अंग हीने, अशनिहते, वाताहते, क्षीणवर्णे, गर्भालयस्थलभ्रंशे, स्थानगर्भपीठविनाशे चंडालाद्यस्पृश्यप्रविष्टे वा, अचिरादेव बालालये देवं प्रतष्ठापयेत् ।

बालालये अर्च्यमानेपि स्थानसंकटे, चंडालाद्यशुच्यधिष्ठिते, नद्यादिभिः स्थान नाशे वा सति, अन्यत्र मनोरमे यथेष्टदेशे पूर्ववत्कर्षणादि पुनस्संस्कारं कृत्वा, प्रथमे प्रथमं, द्वितीयं वा, बालालयं कृत्वा तद्बिंबमानीय प्रतिष्ठाप्य, पश्चान्मूलालयं कुर्यात् ।

## विमानबाह्यस्थाङ्गादि हीने तृणादिना भिन्ने च कर्तव्यम्

बाह्ये चाऽङ्गोपांगहीने तृणगुल्मवल्मीकमाक्षिकपादपाद्यै र्भेदे सति अत्र बालालयस्थानंविना तद्विमानशक्तिं तदंगदेवाँश्च महाबेरे समालोप्य नवीकृत्य विमानप्रतिष्ठोक्तविधिना विमान प्रतिष्ठां कारयेत् ।

## विमानध्रुवयो र्विनाशे कर्तव्यम्

विमानध्रुवयोर्विनाशे कौतुकादीन् बालागारे कालविज्ञापनं प्रार्थनामंत्रं च विना प्रथमतरुणालयप्रतिष्ठोक्तविधिना प्रतिष्ठाप्य अर्चयेत् । तस्य काले अतीते न दोषाय भवति ।

## संस्काराङ्गहानौ कर्त०

यद्यत्संस्कारहानि रंगहानिश्च भवति, बालाऽगारं कृत्वा तत्तत्संस्कारं कृत्वा तस्योपरिसन्धानं कारयेत् ।

## कौतुकादि विनाशे

कौतुकादीनां च विनाशे ध्रुवार्चाबेरे तद्विमाने च जीर्णादि दोषसंयुक्ते पुनः बालागारं संकल्प्य यथा लाभमानेन दारवं बिम्बमाहृत्य,

प्रथमतरुणालयप्रतिष्ठोक्त विधिना प्रतिष्ठाप्य, अभ्यर्च्य कौतुकादीन् संकल्प्य प्रतिष्ठापयेत् ।

## दारवे खण्डस्कुटितादि दोषसम्भवे कर्म०

(कैतुकादीनामलामे) तस्मिन् दारवे खण्डस्फुटितादि दोषसंयुक्ते, अन्यद्दारवं बिम्बं आहृत्य बेराच्छक्ति मावाह्य, प्रतिष्ठाप्य तद्बेरं विधिना त्यक्त्वा मूलालये मूलबेरं कृत्वा प्रतिष्ठापयेत् ।

## बालगार स्थानम्

बालागारस्थानं मूलागारस्य मध्यसूत्राद्दक्षिणे भागे प्रथमावरणे द्वितीये वा मालिकाभित्तिमध्ये अङ्गणे मण्डपादिषु मनोरमे यत्र परिहारोऽस्ति तत्र बालागारं प्रकल्पयेत् । द्वितीयावरणादूर्ध्वमनारम्भणीयम् ।

एकहस्तादि त्रिहस्तान्तं विस्तारं विस्ताराद्ध्यर्धं पादोनद्विगुणं वा उत्सेधं तदुत्सेधं पञ्चधा कृत्वा एकांश मधिष्ठानं द्व्यंशं भित्त्युच्चं द्व्यंशंशिखरं लुपोपरि तृणच्छन्नं मृण्मयं तद्भित्तिविष्कंभं मूलालयस्या-ऽऽदितलपादविष्कम्भसमं तद्द्विगुणं, चतुर्गुणं वा, तदवशिष्टं नालीगृहं, तरुणालय मण्टपा चेत्तद्भित्त्या सह नालीगृहं यथालाभभित्तिकं, मुखमण्टपसहितं रहितं वा, त्रिवर्गेष्वपेक्षितमेव कारयेत् । समंत्रिपादमर्धं वा मुखमण्टपं, पूर्वापरायतं, दक्षिणोत्तरायतं समं वा तरुणालयमेवं कुर्यात् ।

## गर्भालये कौतुकादि स्थापनस्थानम्

गर्भालयं पञ्चविंशतिभागं कृत्वा मध्ये चैकं ब्राह्मंतत्परितोऽष्टभागं दैविकं, तत्परितः षोडशभागं मानुषं, भवति । कौतुकं ब्रह्मस्थाने प्रतिष्ठापयेत् उत्तमं, दैविके मध्यमं मानुषे अधमं, स्नपनोत्सवबलिबेराणि दैविकमानुष-योरेव स्थापयेत् ।

## ध्रुवपीठ विस्तारादि

प्राणपीठं यथालाभाऽऽयतविस्तारोत्सेधं, त्रिमेखलं एक मेखलं वा, रत्नन्यासविहीनं कुर्यात् ।

आलयाभिमुखे बालागाराग्रे वा, पूर्ववद्यागशालांकृत्वा, तोरणा-द्यैरलंकृत्य, सम्भारान् सम्भृत्य स्थापकान् ऋत्विजश्च वरयेत् । यागशालामध्ये

शय्यवेदिं तद्भित्ति समानां चतुरश्रां पादहीनां अर्धहीनां वा, तत्तुरीयांशोत्सेधां कृत्वा, पूर्ववत्पश्चाग्नीन् त्रेताग्नीन् एकाग्निं वा, संकल्प्य पर्यग्निपञ्चगव्याभ्यां यज्ञागारं बालागारं च संशोध्य, पुण्याहं वाचयित्वा, अग्निकुण्डेषु आघारं हुत्वा, प्रधानाग्निं परिषिच्य, विष्णुगायत्रिं वैष्णवं विष्णुसूक्तं पुरुषसूक्तं एकाक्षरादिसूक्तं श्रीसूक्तं महीसूक्तं पञ्चवारुणं जयान् अभ्याधानान् राष्ट्रभृतो मिन्दाहुतीःविच्छिन्नं समृद्धिं च प्रत्येकं वैष्णवयुक्तं हुत्वा, विष्णुगायत्र्या श्वेताब्जं बिल्वपत्रं वा, आज्याक्तमष्टोत्तरशतं जुहुयात्। एतत्सर्वदोषोपशमनं भवति ।

## अनन्तरं कर्तव्यम्

पश्चात् रात्रिपूजावसाने देवं विशेषतोऽभ्यर्च्य हविर्निवेद्य कौतुकादिषु शक्तिं महाबेरे समारोप्य, तत्काले पूर्ववत्कुंभमाहृत्य तंतुना परिवेष्ट्य 'शुचीवो हव्या' इति प्रक्षाल्य 'धारा' स्वित्यपमुत्प्लवनं कृत्वा अद्भिरापूर्य 'इदमापः शिवा' इत्यभिमृश्य वस्त्रायुग्मेनावेष्ट्य नवरत्नपञ्चायुधाऽष्टमंगलवर्णचिह्नानि विष्णुगायत्र्या पृथक् पृथक् प्रक्षिप्य अभ्यन्तरं प्रविश्य देवाग्रेधान्योपरि कुंभंसंन्यस्य उत्तराभिमुख आसित्वा समाहितो देवंध्यायन् एवं प्रार्थयेत् ॥

"अनर्हमेतत्त्वद्गेहं जीर्णं व्यपोह्य च ।
किंचित्कालं च देवेश त्वयात्रस्थीयतांविभो ॥
यावद्गृहं नवं कृत्वा प्रतिष्ठां कारयामहे ।
प्रसादंकुरु तावत्त्वं अस्मिन्गेहे जगत्पते ॥"

इत्युक्त्वा त्र्यब्दं, द्व्यब्दं, अब्दं वा कालावधिं संकल्प्य कुंभेअंभसिदेवं देव्यादिसर्वपरिषत्सहितंध्या (यन्) आवाह्य आचार्यः शिरसा कुंभंधारयन् अग्रतो गच्छेत्। तमनुस्थापका बिंबान्यादाय, यज्ञालये स्नानश्वभ्रे प्रतिष्ठाप्य पूर्ववच्चतुर्दशकलशैस्संस्नाप्य वस्त्राद्यैरलंकृत्य अभ्यर्च्य शय्यावेद्यां धान्योपरि पूर्ववत्पंचशयनानि वासांसिवा आस्तीर्य प्रतिसरंबध्वा तथैव शाययित्वा उत्तराच्छादनं कृत्वा प्रधानाऽग्निं परिषिच्य पूर्ववद्धौत्रं प्रशंस्य आवाहनादीनि कृत्वा अग्निषु पूर्ववदुक्तहोमंहुत्वा प्रधानाग्नौ स्रुवेणाऽऽज्यमादाय विष्णुगायत्रीं, वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तम्, एकाक्षरादिसूक्तं श्रीभूमिदेवत्यं च, (त्रिः) हुत्वा पश्चात्सर्वदेवत्यं, तदालयगतपरिषद्देवत्यं वा,

हुत्वा रात्रिशेषं व्यपोह्य प्रभाते स्नात्वा देवाऽगा रंप्रविश्य देवंप्रणम्य देवं प्रणवेनोत्थापयेत् । आचार्यादीन् संपूज्य दक्षिणां दद्यात् ।

अग्निंप्रज्वाल्य स्विष्टाकारं, पूर्णाहुतिं च, हुत्वा अग्निंविसृज्य आचार्यः शिरसा कुंभं धारयन्, शकुनसूक्तं जपन्नग्रतोगच्छेत् । स्थापका हस्ताभ्यां देव मादाय सर्ववाद्यसमायुक्तं सर्वालंकारसंयुक्तं तोयधारा पुरस्सरं आलयंपरीत्य (प्रदक्षिणीकृत्य) अभ्यन्तरं प्रविश्य स्थिरराशिं विहाय 'प्रतद्विष्णु' रिति मंत्रेण प्राणपीठे देवं प्रतिष्ठाप्य दक्षिणे देवीं श्रियं, वामेहरिर्णीं च, तत्तन्मंत्रेण संस्थाप्य देवपादं स्पृशन् विष्णुसूंक्त जप्त्वा; पूर्ववदक्षरन्यासादीनि कृत्वा 'इदंविष्णु' रिति कुंभस्थां शक्तिं कूर्चेनाऽऽदाय 'आयातुभगवा' निति कौतुकस्य मूर्ध्नि "विष्णुमावाहयामी' ति संस्राव्य आवाहयेत् ।

'दक्षिणे देवीं श्रियं, वामे हरिणी' मित्यावाह्य देवंपरितोऽभ्यन्तर-परिषद्देवान् ब्रह्माणं, शंकरं, पूजकमुनिं चाऽऽवाह्य गर्भालये कौतुकाद्दक्षिणे वामे वा मुखमंटपदक्षिणे वामे वा स्नपनोत्सवबलिबेराणि संस्थाप्य कौतुकादावाहयेत् ॥

## एकविमाने स्थापनक्रमः

एकविमाने पञ्चानां कौतुकानां सहैव स्थापनं चेत् पूर्वंविष्णुमूर्त्तिं-समावाह्य तस्मात्पुरुषादींश्चतुरो दीपाद्दीपमिवाऽऽवाहयेत् ॥

## अवताराणां सत्त्वे

यदिस्युरवताराः विस्तीर्णे देशे समानीय आवाह्य अर्चयेत् ॥

## धात्रादीनां बालालयः

धात्रादि विष्णुभूतान्तानां तदालयस्थपरिषद्देवानां सर्वेषाम्, आलयेषु ध्रुवकौतुकसंयुक्तेषु सत्सु ध्रुवबेराणि जीर्णादि दोषयुक्तानि चेत् तरुणालयं परितोऽलीन्द्रं कृत्वा तत्र सर्वान् परिषत्कौतुकबिंबान् तत्तत्प्रदेशे प्रतिष्ठाप्य अर्चयेत् । निर्दोष परिषद्देवानां तत्र तत्र अर्चनादीनि कारयेत् ।

## बालालयेपि उत्सवादि कर्तव्यम्

स्थापकाद्यैस्सह पुण्याहं कृत्वा आसनाद्यैरभ्यर्च्य हविर्निवेद्य

### सर्वत्र पक्षान्तरम्

अथवा सर्वत्र वर्णहीनं शैलमेव कारयेदित्येके ॥

### शैलबेरस्याऽङ्गोपांगहीने

शैलस्याऽर्धचित्रस्य बेरस्यांऽगोपांगप्रत्यंगेषु हीनेषु तच्छक्ति-हानिर्नेष्ठा । तस्माच्चित्रं (शक्तिं) बालागारं नीत्वा तद्बेरं भूमौ पिधाय उपरिमहाशान्तिं अब्जाग्नौ हुत्वा शिलाग्रहणवद्धुत्वा तत्तदंगसमुत्पत्तिं युक्त्या तक्ष्णात् कारयेत् ॥

### बेरस्य महाङ्गे हीने क०

महाङ्गे हीने अंगोत्पत्ति विनाशश्चेत्, तद्बेरं विधिनाविसृज्य शिलाग्रहणं कृत्वा यथापूर्वं तथाचरेत् ॥

### सन्धानयोग्य बेरत्यागे

संधानयोग्यबेरं यस्त्यजेत् स पापीयान् भवति, सर्वविनाशश्च भवति । तस्मात्सर्व प्रयत्नेन संधानं कारयेत् ॥

### ध्रुवार्चयोः प्रामेकं करणाऽयोगे

अथवा ध्रुवबेरमर्चाबेरं पूर्ववत्कर्तु मयुक्तं चेत् ध्रुवार्चाबेर मेकमेवकृत्वा प्रतिष्ठाप्य अर्चयेदिति केचित् ॥

### एकबेरपक्षे तस्याङ्गहीने

एकबेरं प्रतिष्ठाप्य अर्चने प्रवर्तमाने तस्यांऽगादिषु हीनेषु सन्धानं कृत्वा पूर्ववत्स्थापयेत् । तद्बेरंत्याज्यं चेद्विधिना विसृज्य यथापूर्वं तथाऽऽचरेत् ॥

### ध्रुवार्चाबेरस्य स्थानमाह

अशक्तश्चेत् ध्रुवबेरमर्चाबेरं च देवीभ्यांसहितं रहितं वा कृत्वा संस्थापयेत् । मृदालये ब्रह्मस्थाने ध्रुवार्चाबेर माहरेत् ॥

## तस्य देवीभ्यांसाहित्यकरणेच्छायाम्

तस्य देवीभ्यांयुक्तं शिलादिभिर्विमानं कर्तुमिच्छे च्चेत् देवो दैविकभागस्थो यथा तथाविमानं परिकल्पय ब्रह्मस्थाने कौतुकं लोहजं जंगममेव कुर्यात् । कौतुकं शैलं चेत् तस्मिन् स्थावरमेव प्रतिष्ठापयेत् ।

## मृण्मयविमाने ध्रुवार्चने सति शौल विमानकरणेच्छायाम्

मृण्मये विमाने ब्रह्मस्थाने लघुबेरं प्रतिष्ठाप्य, अर्चने वर्तमाने पश्चात् ध्रुवबेरं शिलादिभिर्विमानं कर्तु मिच्छेच्चेत् तद्धस्तवशेन विमानं परिकल्प्य, दैविकभागे देवीभ्यांसह देवं प्रतिष्ठाप्य पूर्वार्चितंबेरं कौतुकार्थं तस्योत्तरेचोत्सवं बलिबेरं च प्रतिष्ठापयेत् ।

## पुनर्विमानकरणे विशेषः

पूर्वं मृदालये ध्रुवार्चाबेरे अर्च्यमाने पश्चाच्छिलाभिरिष्टकाभिर्वा विमानं कर्तुमिच्छेत्, तस्यबेरस्यरक्षार्थं शिल्पि स्पर्शविघातार्थं च बालधामवत्काष्ठेनपञ्जरंकृत्वा तस्याऽधस्तात् स शल्यंचेत् येनकेनचित् संशोध्य युग्महस्तेन तद्बेरवशाद्वा सौधंकृत्वा तद्बेरसमविस्तारमधमम्, अध्यर्धमध्यमं, द्विगुणमुत्तमं, समचतुरश्रं कृत्वा तस्यचतुर्भागं त्रिभाग मर्धं वा गर्भागारं तच्छेषं भित्तिविष्कंभं समंटपं विमानं पूर्ववत् कारयेत् । शिलेष्टकामश्रविमाने तस्य भागान्ते वर्गान्ते वा मिश्रं कारयेत् । एवंकर्तुमशक्तश्चे त्तस्याऽधिष्ठानादूर्ध्वं यथेष्टस्थाने मिश्रद्रव्येण कारयेत् ।

## ध्रुवबेरे वर्णक्षयादौ क०

ध्रुवबेरे वर्णक्षये, स्फुटितादि तोषसंभवे च, अल्प दोषे, ध्रुवबेरस्थां शक्तिं कुंभे अंभसि समावाह्य तत्कुंभं कौतुकादींश्च, समादाय मालिकायां मंटपे वा सन्यस्य कुंभस्था शक्तिं कौतुकादिषु समावाह्य वेलायां कुंभे समारोपयेत् ।

दिनद्वये अतीते अन्यकुंभंसमादाय साधयित्वा कुंभात् छक्तिं कुंभे समावाह्य अर्चयेत् ।

दिनत्रये चैवं कुंभशोधनं कृत्वा समाचरेत् ।

पश्चाद्वर्णानुलेपनादीनि कृत्वा संशोध्य वास्तुहोमं हुत्वा पुण्याहं-वाचयित्वा ध्रुवबेरशुद्धिं कुंभंबिबं च समादाय, अभ्यन्तरं प्रविश्य कौतु-कादीन् संस्थाप्य पूर्ववदक्षरन्यासादीनि कृत्वा कुंभस्थां शक्तिं ध्रुवबेरे समारोप्य, ध्रुवबेरात्कौतुकादिषु समावाह्य अर्चयेत् ।

दोषगौरवान्मासादूर्ध्वं कालमपेक्षितं चेत् देवं बालालये प्रतिष्ठाप्य मृण्मयं चेद्दारुशूलं शोधयित्वा शैलं चेच्छिलान्तं शोधयेत् ।

## नवमूर्त्यादि तले दुष्टे क०

नवषट्पञ्चमूर्त्तिविमाने यत्तलंदोषदुष्टं तत्तलं समुद्दिश्य, बालस्थानं प्रकल्प्य कौतुकादीन् संस्थाप्य अर्चयेत् । पश्चान्निर्दोषे तले कौतुकादीन् समभ्यर्च्य पुनः स्थापनं कृत्वा अर्चयेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे ध्रुवबेरप्रायाश्चित्त विधिर्नाम द्विसप्ततितमः पटलः ॥७२॥

# अथ त्रिसप्ततितमः पटलः

## जीर्णबेरेसति दोषः, तत्त्यागप्रकारश्च

अथ जीर्णबेरपरित्यागविधिं वक्ष्ये-सद्य स्तद्बेरत्यागं न कुर्याच्चेत् कर्त्राराधकयोर्ग्रामस्य च महद्भयं स्यात् । तस्मात्सर्वप्रयत्नेन जीर्णं सर्वं संशोध्य, नववस्त्रै राच्छाद्य दर्भरज्जुभिर्बद्ध्वा ब्राह्मणैरेव वाहयित्वा समुद्रगां नदीम् अन्यमशोष्यजलाशयं वा, गत्वा तत्तीरे प्रपां कृत्वा अग्नि-मौपासनमाधाय आघारं हुत्वा वैष्णवं शतशोहुत्वा दद्भ्यःस्वाहेत्यंगहोमं व्याहृत्यन्यं हुत्वा वस्त्र बन्धं विमोच्य आचार्यः प्राङ्मुख उदङ्मुखो वा वारुणं, वैष्णवं च, जप्त्वातज्जले प्रक्षिप्य तत्तीर्थे स्नानं कुर्यात् । दारवंचेदेवमेव कृत्वा वह्नौदाहयित्वा तद्भस्मं जले प्रक्षिपेत् । देव्यादि परिषद्देवानां तत्तन्मंत्रं, वैष्णवंच, हुत्वा तथैव भस्मं जले प्रक्षिपेत् । पश्चादाचार्य दक्षिणां दत्वा आलयमाविशेत् ।

## कौतुकादीनामंगहीने कर्त० अंगादिस्वरूपं च

कौतुकादीना मंगहीने सति (कर्तव्यम्) उदर वक्षः कंठशिरांसि महांगानि, पादहस्तबाह्वोंगानि, अंगुलीकर्ण नासादयः प्रत्यंगानि, अम्बरा-ऽऽभरणाऽऽयुधशिरश्चक्र पीठ प्रभामंडलानि उपांगानि, इत्याचक्षते।

## उपाङ्गहीने प्रा०

तस्मादुपांगे हीने पूर्ववत् कुंभं संसाध्य तच्छक्तिं कुंभे समावाह्य तद्बिंबस्य पुनस्संधानंकृत्वा जलाधिवासादीनि कृत्वा वास्तुहोमं हुत्वा पञ्चगव्यैः कुशोदकैश्च संस्नाप्य सप्तभिः कलशैः संस्नाप्य कुंभस्थां शक्तिं तद्बिंबे समावाह्यार्चयेत् ॥

## प्रत्यङ्गहीने प्रा०

प्रत्यंगे हीने तच्छक्तिं महाबेरे समारोप्य बिंब मुद्धृत्य पञ्चगव्यैः प्रोक्ष्य तुल्यलोहेन संधानं कृत्वा जलाऽधिवासादीनि कृत्वा पुनः प्रतिष्ठां कारयेत्।

## अङ्गहीने प्रा०

अंगहीने तद्बेरं संधानयोग्यंचे त्तथैव कुर्यात्। अयुक्तं चेन्महांगे हीने च बेरंभूमौपिधाय तस्योपरि अंगहोमं हुत्वा महाशांतिं च हुत्वा तद्दिने अतीते बिंबमुद्धृत्य पञ्चगव्यैः प्रक्षाल्य अग्नौ क्षिप्त्वा त्रिशुद्धिं कृत्वा राजतंचेत् द्विर्दग्ध्वा रौक्मं चेत्सकृद्दग्ध्वा तद्द्रव्येण पूर्ववत् बिम्बं कृत्वा पुनः प्रतिष्ठां कारयेत्।

## पटादावालिख्याऽर्चितस्य जर्णि चेत् क०

पटे कुड्ये वा; आलिख्याऽर्चितंबेरं जीर्णं चेत् तच्छक्तिमर्कमंडले समारोप्य नवीकृत्य पुनःप्रतिष्ठामाचरेत्।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे कौतुकादि जीर्णबेरपरित्यागविधिर्नाम त्रिसप्ततितमः पटलः ॥७३॥

# अथ चतुःसप्ततितमः पटलः

## आचार्यसंकरे दो० प्रा०

अथाचार्यं कर्षणकाले वरयित्वा कर्षणादीनि प्रतिष्ठान्तानि, नित्याऽर्चनस्नपनोत्सव प्रायश्चित्तं विशेषाऽर्चनादीनि नित्यनैमित्तिककर्माणि, सर्वाणि च, तेनैव कारयेत्। अचार्याभावे तत्पुत्रं, पौत्रं, नप्तारं, तद्वंशजं वा, कारयेत्। अयुक्तश्चेत्तमनुज्ञाप्य (ते अयुक्ताश्चेत्ताननुज्ञाप्य) पूर्ववदन्यमाचार्यं वरयेत् तदभावे तच्छिष्यं प्रशिष्यं वा वरयेत्।

आचार्यसन्निधौ नाऽन्यमाचार्यं वरयेत्। यदि वरयेत् तत्स्थानस्य, ग्रामयजमानयोश्च, आशु विनाशो भवति। राज्ञो, राष्ट्रस्य च, परचक्रभयं भवति। तदर्चनं निष्फलं भवति। तस्मादाचार्यसंकरं न कुर्यात्। अज्ञानादर्थलोभाद्वा आचार्य संकरे सति, पौण्डरीकाग्नौ महाशान्तिं हुत्वा आचार्यं नमस्कृत्य 'क्षमस्वे'ति याचित्वा पूजयित्वा तेनैव तत्तत्कर्म पुनरपि कारयेत्।

## आचार्यादीना मलाभे क०

आचार्यादीनामलाभे तद्रूपं पटे लिखित्वा तं नमस्कृय तत्सन्निधौ अन्यं युक्तमाचार्यं वरयेत्। एकस्मिन् काले बहुकर्मणि(सु) प्राप्ते(षु) सति, (त्सु) आचार्यं प्रणम्य, तद्विधिना तत्पुत्रादिभिः कारयेत्। तदलाभेत्वाचार्य एव तन्त्रयित्वा करोतीति विज्ञायते।

## योगमार्गेण प्रतिष्ठितस्य मार्गान्तरेण प्रतिष्ठाकरणे दोषः

पूर्वं योगमार्गेण (वा) प्रतिष्ठाप्य, अर्चने प्रवर्तमाने पश्चात्तस्य देवीभ्यांसह प्रतिष्ठां कारयेच्चेदाभिचारिकं भवति।

(पूर्वं ध्रुवकौतुकसंयुक्ते अर्च्यमाने पश्चाद्विमान ध्रुवयोर्विनाशश्चेत् ध्रुवार्चनमेव ब्रह्मस्थाने प्रतिष्ठाप्य विधिवदर्चयेत्। तत्तत्कौतुकबिम्बमुत्सवार्थं प्रतिष्ठापये दिति केचित्)।

## स्थानकासन शयनेषु व्यत्यासे व्यवस्था

स्थानके चाऽऽसनं शयनं वा कर्तुरिच्छया कुर्यात्। आसने स्थानकं

विना, शयनमेव कुर्यात्। शयने स्थानकासने नकारयेत् । कौतुकं स्थितमौत्सवमासीनं कौतुकमासीन मौत्सवं स्थितं वा कारयेत् । स्नपनबलिबेरं च सर्वत्र स्थितमेव कारयेत् ।

### अथतारादीनां कौतुकबेराणि संकराणि चेत् प्रा०

अवताराणां, पञ्चमूर्त्तीनां च, कौतुकबेराणि अन्योन्यसंकरेण स्थापयेच्चेन्महत्तरोदोषो भवति। तद्दोषशमनार्थं महाशान्तिं हुत्वा यथास्थाने स्थापयेत्।

### कौतुकादीनां पुनःप्रतिष्ठासमये सांकर्योपि दोषाभावः

पुनःप्रतिष्ठाकाले कौतुकस्नापनोत्सवबलिबेराणा मन्योन्यसंकर-स्थापनं निर्दोषमित्याचष्टे मरीचिः ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे आचार्यसंकर-योगभोगादि संकरविधिर्नाम चतुस्सप्ततितमः पटलः ॥७४॥

## अथ पञ्चसप्ततितमः पटलः

### अद्भुतोदयनिमित्तम्, तत्र शान्त्यकरणे दो०

अथाद्भुतशान्तिं व्याख्यास्यामो - नराणां पापबाहुल्या दपराध-बाहुल्याच्च, देवास्सृजन्त्यद्भुतानि तेषु दृष्टेषु सद्यः शान्तिं कुर्यात् अज्ञाना-दर्थलोभाद्वा न कुर्याच्चेत् कर्त्राराधकयो ग्रामस्य च महद्भयं राज्ञो राष्ट्रस्य च क्षोभश्च जायते ।

### शान्तिकरणे कालः

तस्मात् दादशाहाभ्यंन्तरे शान्तिं कुर्यात् । द्वादशाहातीते महाशान्तिं हुत्वा वैष्णवान् संपूज्य शक्तितो दक्षिणां दत्वा आरभेत् । मासे अतीते महाशान्तिं समहं हुत्वा विप्रशतं भोजयित्वा देवमनुमान्य कुर्यात् । षण्मासातीते भगवान्नरमेत । तस्मात्सर्वप्रयत्नेन शांतिं आरभेत ।

## अद्भुतानां त्रैविध्यम्

अद्भुतानि त्रिविधानि - दिव्यानि, आन्तरिक्षाणि, भौमानि चेति।

## तत्र दिव्यानि

दिव्यानि ग्रहविकार, ग्रहयुद्ध भेदाऽनावृष्टि, सर्व ग्रासोपराग, नक्षत्रभेदानित्येवमादीनि।

## आन्तरिक्षाणि

आन्तरिक्षाणि निरन्तरपरिवेषो वर्णांतरबहुलपरिवेषो रात्राविन्द्रचापम्, आकाशे देवसद्मअशन्युल्काऽऽपात राहुपुच्छदर्शन, पतन, धूमेन्द्रकेतु, प्रतिसूर्य, नक्षत्रपुच्छ प्रतिचन्द्रादीनि।

## भौमाना मनेकत्वम्

भौमानि चरस्थिरभावा दनेकधा।

## तत्र चरेषुभौमानि

चरेषु - देशकालस्वभावविरुद्धयुग्माधिकप्रसूतिः वानर सर्पाऽश्वमार्जारादियोनिजानां, नाग गो हय महिषादि विपरीत योनि जननं, पक्षिसर्पक्रिमि कीटादि विपरीतवर्ण विपरीताकार विपरीतालयवास विपरीताश्रयाश्च, आलये रक्तशिथिली सर्पदर्शन मित्येवमादीनि।

तेषां दिव्यांतरिक्षभवानि उत्तमोत्तमानि। नरभवानि उत्तमानि। नागगोहयमहिषादिभवानि मध्यमानि। पक्षिसरीसृपादि भवानि अधमानि।

## स्थिरेषु भौमानि

स्थिरेषु प्रतिमारोदन, हसन, जल्पन, परिवर्तन, स्वेद, रुधिरस्राव, ज्वलन, धूमीकृताङ्ग, क्रिमिकीटपतंगाद्युद्भवाकालस्फोटन, धूमांऽग कंपन, स्वापन, तृण, वल्मीकोद्भव, रक्तस्त्रीदर्शन, प्रतिलोम, पतित, पाषंडांत्यजाति, सृगालादिवर्णाऽस्पृश्यस्पर्शन, प्रवेशन (स्थूणा) स्तंभविरोहण, चलन, परिवर्तनाऽपसर्पण, भित्तिकवाटासन, शयनाऽऽयुधानि अ(धाऽ) ग्निहोत्रापस्करविकार मक्षिका वृक्षपतनप्र (परि) वर्त्तनोपसर्पण फलपुष्प पत्रशाखादि विपरीतदर्शन जलरक्तस्रावादीनि।

## तेषां स्थानभेदात् दोषा०

तेषु बेरपीठ गर्भगृहभवानि ब्राह्मण राज राष्ट्रविनाशकारणानि । विशेषेण कर्त्राराधकयोश्च प्रासादोत्पन्नानि क्षत्रियस्य । प्रासादे अधिष्ठान पादप्रस्तर ग्रीवा शिखरोद्भवानि क्रमेण क्षत्रियवंशोद्भव मुख्याभिषेकयोग्य युवराजाऽभिषिक्तमहाराजाना मातंक भयाऽनावृष्टिकराणि प्रथमावरणे वैश्यजातीनां, मंत्रिपुरोहितस्य, माण्डलिकानां च भयावहम्, प्राणपीडादि भयप्रदं च । द्वितीयावरणादिषु, शूद्रजातीनां सर्वदुःखकरम् । सस्यनाशनम्, गजाऽश्वाजमहिषपशूनां नाशकरम्, अग्निकुण्डे पुरोहितस्य, चतुर्मुखस्थाने द्विजातीनां, रुद्रालये सर्वजातीनां, गुहालये नृपस्य, मंडलिकानांच वक्रतुंडालये सेनेशानां, श्रियआलये राजपत्नीनां, दुर्गास्थाने अन्यस्त्रीणां, मातृस्थाने निकृष्टजातीनां, सोमस्थाने चौषधीनां, भास्करालये नृपवाहन-शस्त्रजीविनां, अन्यदेवालये तत्तद्भक्तानामपि लक्षयेत् । आस्थानमंटप सभामटंपराजवेश्म प्रांगण क्रीडास्थान महानसाऽऽचार्य यजमानादि सर्वेतर वर्ण वेश्मचैत्यवृक्षादिषु संभूतानां वल्मीकरक्तस्त्रीदर्शन मक्षिकादीनां फलानि दिविभागेन विज्ञेयानि ।

## भौमेषु उत्तमत्वादि

अथ भौमेषु देवबेराऽर्चापीठ गर्भगृहाभ्यन्तरेषु उत्पन्ना दोषा उत्तमोत्तमाः । प्रथमावरणे मध्यमाः । शेषेष्वधमाः । राजवेश्मनि उत्तमोत्तमाः । परितोंऽकणेत्तमाः । अंतर्वास्तुके मध्यमाः । बहिर्वास्तकेषु अधमाः ।

## दिव्यादिषु कर्त०

दिव्यान्तरिक्षयोश्चिकित्सानास्ति । शान्तिर्भवति । भौमेषु चरेषु निमित्तनैमित्तिकौ देशांतरे वासयित्वा, शांतिमारभेत । स्थिरेषु प्रतिमारोदन हसनज्वलनेषु तरुणालये बेरं संस्थाप्य तद्बेरस्थां शक्तिं समारोप्य शांतिं कृत्वा पुनःस्थापनमाचरेत् ।

परिवर्तन समारोपणाऽनन्तरे शिल्पिना, अन्ये नवा, पुनःस्थापनंकृत्वा पूर्ववच्छांत्यादिकमाचरेत् ।

स्वेदरुधिरस्रावयोश्च रोदनवदाचरति । क्रिमिकीट पतंगतृणकवकाद्युद्भवे पूर्ववच्छक्तिं समारोप्य पुनस्संधानं युक्तितः कृत्वा शान्त्यादीन्याचरेत् ।

अकालस्फोटनादिकेपि तद्वद्वल्मीकोद्भवे देवबेरार्चापीठालयाभ्यन्तरेषु तरुणालये देवं प्रतिष्ठाप्य यावद्दोषदर्शनं तावत् खनित्वा सर्वत्र संशोध्य पञ्चगव्या दिनाऽभ्युक्ष्य पुनस्संधानंकृत्वा पुनःस्थापनमाचरेत्।

प्रासादबाह्ये शैलेष्टकाविवरेचोत्पन्ने सूक्ष्मशस्त्रेण शिल्पिना, अन्येनवा, व्यवशासिते रन्ध्रे वा, हिंगुमरीचादीनि जले पेषयित्वाा आपूर्य, अश्मना शर्करानालिप्य, दिव्यशान्तिं कुर्यात्। पुनरुत्थितं चेत् एवं समाचरेत्।

मक्षिकादर्शने तद्व्यपोह्य शुद्धिं कृत्वा शांति मारभेत।

अस्पृश्यस्पर्शने शुद्धिं कृत्वा शांतिं समाचरति।

स्थूणादि रोहणादिषु पुनस्संधानं कृत्वा शान्तिमारभेत।

अकरणेवृक्षपतनादिषु तत्संत्यज्य; शान्तिं कुर्यात्।

राजगृहे चोत्पन्ने राजानं वेश्माऽन्तरं प्रवेश्य, शान्तिं कृत्वा पुनरभिषेकं कृत्वा देवब्राह्मणानुज्ञया पुनर्गृहप्रवेशं कारयेत्॥

इति श्रीवैखानसे मरिचिप्रोक्ते विमानार्चनाकल्पे उत्पातशांतिविधिर्नाम पंचसमतितमः पटलः ॥७५॥

# अथ षट्सप्ततितमः पटलः

## शान्तिभेदः

अथ उत्तमोत्तमोत्तम मध्यमोत्तम मध्यमाऽधमाऽस्पृश्यानां यथाक्रमेण अद्भुतशान्तिः प्रभूतशान्तिः महाशान्तिः शान्तिः शुद्धिरिति शान्तिः पंचधा भवति।

तासु अद्भुतशान्तिं वक्ष्ये-देवालयाऽभिमुखे उत्तरे च ऐशान्यां वा, पर्वताग्रे तटाकतीरे वा, मण्टपं प्रपां कूटं वा, षोडशस्तंभयुतं, चतुर्हस्तप्रमाणस्तंभांतरं तालोन्नत तलयुतं कृत्वा मध्ये श्रामणकाऽग्निकुंडं कृत्वा अधस्तात् द्वादशांगुलं खनित्वा तत्प्राच्यां द्विहस्तायतविस्तारं हस्त मात्रसमुत्सेधं स्थंडिलं कृत्वा प्रागादि चतुर्दिक्षु आहवनीयाऽन्वाहार्य गार्हपत्याऽऽवसथ्यकुण्डानि कृत्वा आग्नेयादिषु कोणेषु औपासनाग्निकुण्डानि कृत्वा द्वारेषु तोरण पूर्णकुंभकदलीपताकांकुर दर्भमूलास्तंभवे-

ष्टनःद्यैरलंकृत्य स्थंडिले धान्यराशिं विकीर्य तन्मध्ये तण्डुलेनाऽष्ट-दलपद्मंकृत्वा तन्मध्ये स्वर्णरजतताम्रमृत्तिकाना मन्यतमेनकृतं, द्वात्रिं-शत्प्रस्थसंपूर्णं कुम्भं यवान्तरं तन्तुनावेष्टितं वस्त्रयुग्मेनाऽऽवेष्ट्य सौवर्णानि अंगुलादहीनानि अष्टमंगल पञ्चायुधवर्णचिह्नानि रत्नस्वर्णरजतताम्रकांस्यत्र-पुसीसाऽऽयसतीक्ष्णकान्तानि आदित्यादि नवग्रहरूपाणिच विक्षिप्य शुद्धजलेनापूर्य निधाय कर्पूरैलालवंगचंदनोशीरादि सर्वगन्धद्रव्याणि च, अशोकाश्वत्थपल्लवानि च, निक्षिप्य तन्मुखं तन्तुना वेष्टितपिधानेन पिदध्यात्।

आचार्यम् ऋत्विजश्च वरयित्वा नववस्त्रोत्तरीयां गुलीयकाद्यै रलं (कुर्यात्) कृत्य अग्निकुण्डेष्वाघारं हुत्वा आदित्यांगारकमन्दबुधसित बृहस्पति चन्द्रेभ्यः प्रागाद्युदगन्तं प्रदक्षिणं ध्यात्वा आवाह्य अभ्यर्च्य अष्टाक्षरेणाऽयुतम्, अष्टोत्तरसहस्रं वा अभिमृश्य गृह शांत्युक्तविधानेन तत्तद्देवत्यं, चरुसमिधाज्यादिभि र्नित्य मष्टोत्तरसहस्रं हुत्वा श्रामण काग्नौ बिल्वपत्रै र्घृताऽऽप्लुतै र्नित्यमष्टोत्तरसहस्र मष्टाक्षरेण हुत्वा विष्णुगायत्र्या बिल्व समिधाज्य चरुस लाजाऽपूप व्रीहितिलदूर्वापद्मैश्च प्रत्येकमाचार्यो हुत्वा आज्येनाऽष्टोत्तरसहस्र मष्टाक्षरेण हुत्वा आज्येन वैष्णवं विष्णुसूक्तं पुरुषसूक्तं च हुत्वा नृत्तगेयवाद्यैराघोष्य चतुर्वेदान् यथादिशमध्याप्य नित्यं ऋत्विग्भ्यः दक्षिणां दद्यात्। एवं सप्ताहम्।

यद्देवालये दोषश्चेत् कुंभपार्श्वे स्थंडिले तं देवं संस्थाप्य अभ्यर्च्य हविर्निवेद्य देवसन्निधौ होमं हुत्वा अन्ते नवाहं, सप्ताहं वा, उत्सवं कारयेत्। दिव्यान्तरिक्षयोः कुंभजलेन राजान मभिषेचयेत्। भौमेन तं देशं संप्रोक्ष्य अवशिष्टजलेन राजनं, राजपत्नीं चाऽभिषेचयेत्। सुवर्णपशुभूम्यादिभि राचार्यं संपूज्य पश्चादृत्विग्भ्यो दक्षिणां दद्यात्। राजगृहे चेत् तत्समीपे मंटपंकृत्वा पूर्ववत् गृहशान्तिं, श्रामणकाग्निहोमं, कुंभसाधनं च, कृत्वा सप्ताहान्ते राजानं, कुंभजलेनाऽभिषेचयेत्।

आचार्यादिभ्यः प्रतिष्ठोक्तदक्षिणां दत्वा अंकुरा नर्पयित्वा शुभे अनुकूले नक्षत्रे अभिषेकं कृत्वा गृहप्रवेशं च कुर्यात्।

सर्वग्रासोपरागादि दिव्याद्भुतशांत्यर्थं ब्राह्मणेभ्यः शक्त्यनुकूलं स्वर्णपशुभूम्यादीनि दद्यादिति विज्ञायते ॥

## अनावृष्टौ कर्त०

अनावृष्टिदोषश्चेच्छीतकुम्भं निदध्यात्। द्वात्रिंशत् प्रस्थसंपूर्णं कुंभं संगृह्य पूर्ववत्साधयित्वा सर्वतीर्थमावाह्य, अभ्यर्च्य, देवाभिमुखे धान्यपीठे सौवर्ण मष्टदलयुतं पद्मं, हेमपात्रे न्यस्य तस्मिन्देवेशमावाह्य अभ्यर्च्य, तस्योर्ध्वे चतुष्पालिकायां कुंम्भंसन्यस्य कुंम्भमूले सूचीमात्रं सुषिरंकृत्वा अविच्छिन्नधारया देवेशं सेचयेत्।

वेतस समिद्भिः, पालाशौ वा, पञ्चवारुण मष्टोत्तर सहस्रं श्रामणकाग्नौ हुत्वा दिशाहोमेषु (अष्टसु प्रत्येकं) अष्टोत्तरसहस्रं पञ्चवारुणं वेतससमिद्भिः जुहुयात्। आज्येन वेतससमिद्भिश्च, प्रत्येकम्, 'इन्द्रं, प्रणवन्त' मित्यष्टोत्तर-सहस्रं जुहुयात्। श्रामणकाग्निमेकमेव वा कुर्यात्। तद्दक्षिणे वज्रपाणिमावाह्य अभ्यर्च्य 'शची सहाये'ति होतव्यं। देवेशं विशेषतोऽभ्यर्च्य, स्नपनोत्स-वादीनि कारयेत्।

एवमेव तत्तत्कर्मगौरवं ज्ञात्वा त्र्यहादि त्रिंशद्दिनान्तं श्रामणकाग्निं संकल्प्य दिने दिने कुम्भं पूरयित्वा सेचयेत्। तद्दिनान्तेदेवस्य स्नपनंकृत्वा अभ्यर्च्य हविर्निवेदयेत्। आचार्यादिभ्यः दक्षिणां दद्यात्। तत्तत्कर्मांते समग्रावृष्टिः स्यात्। तस्माद्यत्नतः कुर्यात्॥

## कल्पान्तरम्

अथवा वर्षार्थी, दुर्भिक्षादि सर्वोपद्रवशान्त्यर्थी गोवृद्धिकामी च, स्नपनालयं पूर्ववदलंकृत्य तत्तत्कर्मगौरवं ज्ञात्वा यत्नतो बहुक्षीरं संगृह्य आचार्यं वस्त्रोत्तरीयाद्यैः पूजयित्वा सोपि श्वभ्रात्प्राच्यां तण्डुलैर्दक्षिणोत्तरा ऽऽयतां पंक्तिं कृत्वा श्वभ्राद्दक्षिणस्यां श्रामणकाग्निकुण्डं कृत्वा, अग्नि माधाय, नवकुम्भाँस्तन्तुना परिवेष्ट्य, प्रक्षाल्य, कुशेनोत्पूय, उत्पूतेन क्षीरेणा ऽऽपूर्य, तत्पङ्क्त्यांनिधाय, पिधानैः पिधाय, अधिदेवमाराध्य, उपरिनव-वस्त्रेणाऽऽच्छादयेत्।

श्वभ्रपूजान्ते देवं प्रणम्य, स्वस्तिसूक्तेनाऽऽनम्य, (आनीय) श्वभ्रमध्ये प्रतिष्ठाप्य, अर्चयेत्।

तन्तुनावेष्टितकरके क्षीरं गृहीत्वा विष्णुसूक्तं, इषेत्वोर्जेत्वाद्यैरनुवाकैः क्रमात् क्षीरधारया देवं संस्नापयेत्। अग्निं परिषिच्य, विष्णोर्नुकाद्यैः अतो देवाद्यैः मंत्रेणाष्टाक्षरेण विष्णुगायत्र्याचाऽष्टाधिकसहस्रं जुहुयात्।

## कल्पान्तरम्

अथवा यावत्स्नपनं तावद्धरिद्राचूर्णेनोद्वर्त्य, आम्लाद्यै स्संशोध्य, गन्धोदकै स्संस्नाप्य, प्लोतेन विमृज्य, वस्त्रोत्तरीयाद्यै रलंकृत्य, अभ्यर्च्य, पायसादि हविर्निवेदयेत्। आचार्यादिभ्यो दक्षिणां दद्यात्। तत्तत्कामं संपूर्णमसंशयं लभेत।

## ध्रुवबेरार्चनं चेत् अनावृष्ट्यादौ कर्त०

ध्रुवबेरार्चनं चेत् प्रमुखे च एवमेव संसाध्याऽऽनीय, तत्रैव स्नपनं कुर्यात्। तत्तत्कर्मानुरूपम्, एतेन विधिनात्र्यहं, पञ्चाहं वा, क्षीरस्नानं कारयेत्। एवं घृताभिषेकं वा, कारयेदिति विज्ञायते।

## प्रभूतशान्तिः

अथ प्रभूतशान्तिं वक्ष्ये -

पूर्ववन्मंण्टपादीनि कृत्वा, कारयित्वा, दिशाहोमं विना श्रामणकाग्नावेव यथोक्तं हुत्वा, पूर्ववत् कुम्भसाधनं कृत्वा सप्ताहान्ते अष्टोत्तरशतम्, अष्टचत्वारिंशद्वा, कलशानभ्यर्च्य अभिषिच्य, देवंविशेषतोऽभ्यर्च्य निवेद येदिति विज्ञायते।

महाशान्तिं वक्ष्ये - कुंम्भंविना श्रामणकाग्नौ बिल्व पत्रैराज्याक्तैः अष्टोत्तर शतसहस्रम्, अष्टाक्षरेण हुत्वा आज्येन, वैष्णवं, विष्णुसूक्तं पुरुषसूक्तं च हुत्वा, त्र्यहान्ते शुद्धस्नपनविधिना स्नापयित्वा अर्चयेत्।

एकाहे औपासनाग्नौ शान्तिं जुहुयात्, ब्राह्मणान्भोजयित्वा, आचार्याय दक्षिणां दद्यात्।

शुद्धिं वक्ष्ये - वास्तुहोमं हुत्वा, बिल्वपत्राद्यैः प्रत्येकमष्टोत्तरशतं पूर्ववध्दुत्वा, पुण्याहं वाचयेत्। आचार्याय दक्षिणां दत्वा, ब्राह्मणार्हान् भोजयेत्। घटसंस्कारं सर्वत्र वा कुर्यात्।

## सर्वशान्तिः

अथ सर्वशान्तिं व्याख्यास्यामः- अपमृत्युभये महाव्याधिपीडने ग्रहकोपे परसेनाभिभवे महार्थनाशे बन्धुक्षयें आभिचारनिपीडने अनावृष्ट्यां पराजिते दुर्भिक्षे दुःखत्रयाभिभवे च सर्वशान्तिमारभेत।

सप्ताहं, नवाहं वा, द्वादशाऽक्षरेण प्रत्येकमष्टोत्तर सहस्रं होमं कुर्यादिति विज्ञायते।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे शान्तिपंचकविधिर्नाम षट्सप्ततितमः पटलः ॥७६॥

# अथ सप्तसप्ततितमः पटलः

## तन्त्रसंकरे प्रा०

अथ तन्त्रसंकरप्रायाश्चित्तं वक्ष्ये -

वैष्णवस्याऽन्यतन्त्रेण संकरेसति तद्ग्रामयजमानराष्ट्राणामाशु विनाशाय भवति। तस्मात् शीघ्रमपहाय अब्जाग्नौ वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं, पारमात्मिक, मींकार (रादि) मष्टाशीतिं चाऽष्टोत्तरशतं हुत्वा पूर्ववत् कारयेत्।

## तन्त्रद्वैविध्यादिकम्

वैष्णवं द्विविधं वैखानसं पाञ्चरात्रमिति, वैखानसं वैदिकं, वैदिकैरर्चितम् ऐहिकाऽऽमुष्मिकफलप्रदम्। पाञ्चरात्रमाग्नेयम्, अवैदिकं दीक्षितैरर्चितम्, आमुष्मिक फलप्रदम्, सौम्यं सर्वत्र संपूज्यम्।

वैदिकं ग्रामादिषु वास्त्वंगाऽऽलये मध्ये पश्चिमे ब्राह्मणानां गृहेषु वा ऽर्चयेत्।

आग्नेयम् अवास्त्वंगाऽलये पर्वतारण्यादिषु च अर्चयेत्।

सौम्ये अस्मिन् विधौ पञ्चरात्रेणाऽऽग्नेयेन संकरे सति राजराष्ट्रविनााशाय भवति। तद्दोषशमनार्थं अब्जाग्नौ महाशान्तिं हुत्वा अष्टोत्तरशतकलशै र्देवं संस्नाप्य वैष्णवान् संपूज्य ब्राह्मणान् भोजयित्वा पुनस्तेनविधिना कारयेत्।

पांचरात्रविधानेन प्रतिष्ठाप्य, वर्तमाने अर्चने हीने सति सौम्यस्य प्रवेशनं कर्त्तव्यं तत् राजराष्ट्रसमृद्धिकरं भवति।

पौण्डरीकाऽग्नौ महाशान्तिं हुत्वा वैखानसविधिना तद्बेरं विमानंच

कर्षणादिभि स्संस्कारै स्संस्कृत्य प्रतिष्ठां कारयेत् । ततःप्रभृति तेनैव सर्वं समाचरेदिति विज्ञायते ।

## अनुक्तदोषप्राय०

अनुक्तदोषप्रायाश्चित्तं वक्ष्ये -

अत्राऽनुक्तेषु दोषेषु सर्वेषु पौण्डरीकाऽग्नौ वैष्णवं षट्कृत्वो व्याहृतीश्चतुष्कृत्वः । अष्टाक्षरमष्टकृत्वो, द्वादशाक्षरं द्वादशकृत्वो, हुत्वा विष्णुसूक्तं, पुरुषसूक्तम्, एकाक्षरादिसूक्तं श्रीसूक्तं महीसूक्तं च, हुत्वा देवं संस्नाप्याऽभ्यर्च्य हविर्निवेदयेत् ।

तत् तद्दोषोपशमनं सर्वशांतिकरं भवति ।

महादोषेषु एतैस्सह पारमात्मिकमींकार(रादि) मष्टाशीतिं सर्वदेवत्यं च हुत्वा, अष्टोत्तरकलशैः देवं संस्नाप्य अभ्यर्च्य महाहविर्निवेदयेत् । एतत्सामान्यप्रायश्चित्तं भवति । शान्ति होमविधानेन वैष्णवं, विष्णुसूक्तं, पुरुषसूक्तं च जुहुयात् । महाशांति विधाने च तैस्सह पार मात्मिक-मींकाराद्यष्टाशीति मेकाक्षरादिसूक्तं, श्रीसूक्तं, महीसूक्तं च, जुहुयादिति केचिदिति आह मरीचिः ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे तंत्रसंकरादि सर्वदोष प्रायश्चित्त विधिर्नाम सप्तसप्ततितमः पटलः ॥७७॥

# अथ अष्टसप्ततितमः पटलः

## पवित्रारोपणम्

अथ पवित्रारोपणं वक्ष्ये -

## पवित्रारोपणस्य फलम्

सर्वयज्ञफलप्रदं, सर्वदोषोपशमनं, सर्वतुष्टिकरं, सर्वकामप्रदं सर्वलोकशान्तिदं ह्येतन्मन्त्रक्रियाद्रव्यहीनं यत् कृतं तद्दोष शान्त्यर्थं पवित्रारोपणं कुर्यात् । पवित्रारोपणहीना या पूजा सा निष्फला भवति राजराष्ट्रं विनश्यति । तस्माद्यत्नेन पवित्र मारोपयेत् ।

## तस्येष्टकालः

आषाढश्रावणप्रोष्ठपदेषु मासेषु चांद्रेषु, सौरेषु वा केचिद्वदंति। शुक्लद्वादश्यां विष्णुपञ्चदिनेषु वा केचिदाचक्षते। संसर्पाऽहस्स्वतिमासंतिथिवारनक्षत्रशून्यं, दशम्यादि दिनं (म्येकादशीमिश्रदिनम्) वर्जयित्वा, अन्यदोषैर्विना आरोपयेत्। राजाज्ञया चेत् एतेष्वपि पवित्रमारोपयेत्।

## पवित्रारोपणप्रयोगः

आलयात्पुरतो मण्टपे, प्रपायां वा, यागशालां कृत्वा पादैः षोडशै, श्चतुर्विंशद्भिर्वा (त्यावा) अन्तस्तंभविवर्जितंवा, तन्मध्ये द्विहस्ताऽऽयतविस्तारां, तालोच्छ्रया, मष्टाऽङ्गुलोच्छ्रयां वा, दर्पणो दरवद्वेदिंकृत्वा चतुर्द्वारतोरणपूर्ण कुम्भांऽकुरदर्भमालातरंग स्तंभवेष्टनमुक्तादामादिभिरलंकृत्य, वेद्याः पुरतोः पौंडरीकमग्निकुंडं सभ्याऽग्निकुंडं वा कृत्वा, गोमयेनोपलिप्य पञ्चवर्णै रलंकृत्य, संभारा नाहरेत्।

गन्धतोयैः आपो हिरण्य, पवमानैः, प्रोक्ष्यतद्दिनात्पूर्वं पूर्ववदंकुरानर्पयित्वा पद्मक्षौम सुवर्ण सूत्रमुत्तमम्। मध्यमं रौप्यम् अधमं कार्पासम्।

सर्वदोषविवर्जितं, पतिव्रतयासुमंगल्या ब्राह्मण्या कन्यकयावा निर्मितं सूत्रं गृण्हीयात्। तदलाभे पण्यविक्रयिणः संगृह्य, मूषिकादिभिराघ्रातं, केशयुतं स्थूलं कृशं वर्जयित्वा, सर्वतःसमंसूत्रं गायत्र्या त्रिगुणीकृत्य, 'आपोहिष्ठा, यन्मेगर्भ'इति कुशाऽग्रैः पञ्चगव्येन प्रोक्ष्य अष्टोत्तरशतं सूत्रं ग्रीवापृष्ठमारभ्य जान्वन्तमुत्तमम् चतुष्पञ्चाशदूर्वन्तंमध्यमम्, सप्तविंशतिः नाभ्यन्तमधमम्।

## बिम्बाऽलम्बप्रमाणं अष्टोत्तरसहस्रै र्वनमालां कुर्यात्

ग्रंथश्चाङ्गुष्ठमात्रमुत्तमम् मध्यमांऽगुलिप्रमाणं मध्यमम् अनामिकांऽगुलिप्रमाणमधमम् ग्रन्थिं विष्णुसूक्तेन बध्नीयात्।

उपवीतं सप्तविंशतिकग्रन्थि, यजमानाचार्यशिष्य वह्निकुण्ड कुंभानाम् अष्टग्रन्थि परिवाराणां द्वादशग्रन्थि, कुंकुमोशीरचंन्दन सौवर्णराजतचूर्णैः यथालाभैः हरिद्राचूर्णैः ग्रन्थीनलंकृत्य, 'इमेगंधे' त्यगरुंधूपयेत्।

पूर्वोक्तेनांऽकुरानर्पयित्वा, आचार्यादिः एकादश्यां प्रभाते स्नात्वां संध्यामुपास्य देवानद्भिस्तर्पयित्वा ब्रह्मयज्ञं कृत्वा तदालयमासाद्य प्रदक्षिणं

प्रणायामं च कृत्वा देवाभिमुखे समासीने ध्यायन् समाहितोऽ अष्टाक्षरमंत्रं जत्वा आसमाप्तेरुपोष्य स्त्रीशूद्रान् नाऽभिभाषयेत्। यागशालां प्रविश्य, 'भगवतोबलेने'ति देवं प्रार्थयेत्।

द्वादशसूक्तै श्चतुर्वेदादिमन्त्रैः सं(स्ना)स्थाप्य अलंकृत्याऽऽघारं हुत्वा आघारान्ते वैष्णवं, व्याहृत्यन्तं, जुहोति। वेद्याः पश्चिमे धान्यपीठे सूत्राणि संस्थाप्य पाद्याद्यर्घ्यान्तमभ्यर्च्य पुण्याहं वाचयित्वा पूर्ववत् प्रतिसरमाबध्य पश्चाच्छय्यावेद्यां षड्द्रोणादहीनैः शालिधान्यैः तदर्धतण्डुलै तदर्धतिलै (रु) र्वोपर्युपर्यास्तीर्य साग्रान् कुशान् दर्भान् प्रागग्रान्वा विन्यस्य पंञ्चायुधैश्च विन्यस्य सर्ववाद्यसमायुक्तं घण्टानादपूर्वं शाकुनसूक्तं पठन् आचार्यः स्थापकैस्सह पवित्रं शयनमारोप्य 'यद्वैष्णव'मिति पवित्राण्यधिवास्य नववस्त्रैः पुष्याऽक्षतैः शयनंप्रच्छाद्य, सूत्रं स्पृष्ट्वा पुरुषसूक्तं, रुद्रसूक्तम्, दुर्गासूक्तं, रात्रिसूक्तं, सारस्वतसूक्तं, विश्वजित्सूक्तं ऋतं सत्यं, सहस्त्रशीर्षं, श्रीसूक्तं भूसूक्तं, विष्णुसूक्तं, गोदानसूक्तं आत्मसूक्तं, वैष्णवं जपेत् उत्तमं दशसूक्तं, मध्यमं सप्त, अधमं पञ्चसूक्तं जपेत् पश्चादूर्ध्वे सर्वरक्षाचक्रं संपूज्यं, तस्य परितः आवरणत्रयदेवानां प्रादक्षिण्यक्रमेणाऽभ्यर्च्य शांतगरुडचक्रन्यक्षादि विमानपालानां धान्यपीठे कूर्चान्निधाय पाद्याद्यर्घ्यान्तमभ्यर्च्य, मुद्गान्नकृसरै र्बलिंदत्वा, स्वपादं प्रक्षाल्य, दक्षिणे कर्णे स्पृष्ट्वा पश्चादग्निंप्रज्वाल्य तत्काले होतारमाहूय तंपादौ प्रक्षाल्य आचम्य सोदकं दक्षिणां दत्वा हौत्रं प्रशंस्य, तत्काले देवमूर्तीरावाहयेत्।

जुष्टाकारं च, स्वाहाकारं च, कृत्वा देवेशं शुद्धोदकै स्संस्नाप्य प्लोतेनविमृज्य वस्त्राभरणैरलंकृत्य पुण्यपुष्पाद्यै रर्घ्यान्तं सप्तविंशति विग्रहैरभ्यर्च्य अधिवास पवित्राणि देवमारोपयेत्। तदाश्रीभूम्योः शान्तादि सर्व देवाना मारोपयेत्।

आलयं, मण्टपं विष्णुसूक्तेन पुरुषसूक्तेन आवेष्ट्य महाहविः प्रभूतं वा यथाशक्ति निवेद्य पानीयाऽऽचमनं दत्वा कर्पूरजातीफलैलालवंगसहितं, क्रमुकफल तांबूलं मुखवासं दत्वा बलिं निर्वपेदीति।

पूर्ववद्यजमानाचार्यशिष्याणां कृतं देवसन्निधौ दत्वा यागशालां प्रविश्य अग्निं प्रज्वाल्य परिषिच्य श्रीसूक्तं, महीसुक्तं, विष्णुसूक्तं हुत्वा सूत्रसंख्यया वैष्णवं प्रत्येकं जुहोति। ईंकारादि पारमात्मिकं सर्वदेवत्यम्, धातादि पञ्चवारुणं मूलहोमं जुहोति।

एवं कर्तुमशक्तश्चेत् - विष्णुसूक्तं पुरुषसूक्तं, सर्वदेवानां मूर्त्तिमंत्रं हुत्वा एवं यजेत उत्तमम् । हौत्रादि सर्व मूर्तीनां पारमात्मिकं सर्वदेवत्यं विना मध्यमम् ध्यापयेत् ।

अन्यदुक्तमधमम् प्रागादि चतुर्दिक्षु चतुर्वेदानपूर्वादि चतुर्दिक्षु दक्षिणवामयोर्वा आचार्य, ऋत्वि जश्च परात्परतरं गुह्यंसर्ववेदार्थसारभूतम् अष्टाक्षरं द्वादशाक्षरं विष्णुगायत्रींजपन् पुष्पांजलिं दत्वा नृत्तगेयवाद्यैश्च रात्रिशेषंव्यपोह्य ततः प्रभातेत्वाचार्यः ऋत्विजश्च, स्नात्वा, संध्यामुपास्य, देवादीस्तँर्पयित्वा ब्रह्मयज्ञं कृत्वा देवालयं प्रदाक्षिणं करोति ।

देवंप्रणम्य पार्श्वे प्राङ्मुखंः, उदङ्मुखोवा समासीतदेवाऽर्हतस्तिष्ठन् प्रणम्याऽनुमान्य निर्माल्यमादाय विष्वक्सेनं समाराध्य 'भूरग्नये' ति वेदिं प्रक्षाल्त्य, देवेशं नित्यपूजाविधानेनाऽऽभ्यर्च्य स्नानासने सूत्रं समारोप्य 'आपो, हिरण्य, पवमानैः' प्रोक्ष्य अभ्यर्च्य (हविर्निवेद्य) देवेशमलंकृत्याभ्यर्च्य हविर्निवेद्य मुखवासं दत्वा पश्चद्यागशालांप्रविश्य नित्यहोमं हुत्वा चरुणाऽज्येन वैष्णवं, विष्णसूक्तं, श्रीभूमिदेवत्यं, हुत्वा प्रत्येकं समिदाज्येन सहित मष्टाविंशतिपर्यायेण जुहोति । देवस्य पादौ स्पृष्ट्वा तत्सर्वंहोमयेत् ।

(ततः) पुण्याहं वाचयित्वा, तत्काले प्रतिसरं विसृज्य अधिवासपवित्रमुत्थाप्य ध्वजैः पिञ्छचामरैः भक्तैश्च परिवृतो नृत्तगेयसमायुक्तं शाकुनसूक्त मुच्चाय, सर्ववाद्यसमायुक्त तोयधारापुरस्सरमालय प्रदक्षिणीकृत्य, देवस्यप्रमुखे धान्यपीठे पवित्रं संस्थाप्य यजमान आचार्य भक्तैस्सहदेवं प्रणम्य, कनिष्ठादिक्रमेण पवित्राणि आचार्यो हस्तादादाय, 'अतो देवा' दिना कनिष्ठमारोपयेत् ।

'विष्णोः कर्माणी' ति मध्यममारोप्य, 'विष्णोर्नुक' मित्युत्तम मारोपयेत् । पश्चाद्गन्धपुष्पाद्यैरभ्यर्च्य वनमालां गृहीत्वा पुरुषसूक्त मुच्चरन् देवमारोपयेत् । कौतुक स्नपनोत्सव बलिबेराणां सूत्रमारोपयेत् । एकबेरविधानं चेत् ध्रुवे सर्वं समाचरेत् प्रादुर्भावानामप्येवं पूर्वोक्तमुच्चरन्, तद्युक्तस्य (तस्य तस्य) कृतं पवित्र मारोपयेत् । परिषद्देवानां तत्तन्मन्त्रमुच्चार्य पवित्रमारोपयेत् ।

अग्नौ 'अग्निं दूत' मित्यग्निकुण्डप्रमाणं सूत्रमारोप्य दण्डप्रणामं कृत्वा यथाभागोपदंशं घृतगुडदधिफलमधुयुक्तं पञ्चहविः प्रभूतं निवेद्यपानीयाचमनकर्पूराद्यै र्मुखवासं दत्वा बलिमाराध्य, बलिभ्रमणंकृत्वा, अग्निं-

विसृज्य पुण्याहान्ते आचार्यादीन् संपूज्य सुवर्णपशुरत्नादीनि सोदकं दक्षिणांदद्यात् ।

एवं नवाहं सप्ताहं पञ्चाहं त्र्यह मेकाहं वा विशेषतोऽभ्यर्च्य, ब्राह्मणान् वैष्णवान् संपूज्य वैष्णवान् भोजयित्वा सूत्रान् सर्वान् विसृज्य निर्माल्यं संशोध्य विष्वक्सेनं समाराध्यददेत् । पुनः सोदकं दक्षिणां ददेत् । विपरीतं न कारयेत् । य एवंकृतेन पवित्रारोपणेन देवेशं यजेदब्दं तदेव संपूर्णंभवति । सर्वान् कामानवाप्नोति । विष्णुलोकं सगच्छतीत्याह मरीचिः ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे पवित्रारोपण विधिर्नाम अष्टसप्ततितमः पटलः ॥७८॥

# अथ एकोनाशीतितमः पटलः

## अथ वर्षे वर्षे नित्यार्चनायां न्यूनातिरिक्तप्रायश्चित्तम् ।

## तस्य कालः प्रकारश्च

मार्गशीर्षमासे शुक्लद्वादश्यां तद्दिनात्पूर्वम् अंकुरानर्पयित्वा आलयाभिमुखे दक्षिणे वा, पौण्डरीकाऽग्निं साधयित्वा पूर्वेद्युः नित्यार्चनावसाने तस्मिन् वैष्णवं, विष्णुसूक्तं, पुरुषुसूक्तं हुत्वा विष्णुगायत्र्या अब्जशतं बिल्व पत्रं वा, घृताक्त मग्नौ जुहुयात् ।

देवेशं ध्यायन् पारमात्मिकमींकारादीन् हुत्वा अभ्यन्तरं प्रविश्य, देवंप्रणम्य आनीय, अग्नेरुत्तरस्यां देवेशं चतुर्दशकलशैर्विधिनाऽभिषिच्य नववस्त्रोत्तरी याद्यैरलंकृत्य अभ्यर्च्य, अग्नेः प्रतीच्यां धान्यवेद्युपरि पूर्ववत् पञ्चशयनान्यासीर्य तथैव प्रतिसरं बध्वा देवेशं शाययित्वा प्रगादि चतुर्दिक्षु चतर्वेदाध्ययनं कृत्वा पश्चादब्जाऽग्निं प्रज्वाल्य पूर्ववद्धौत्रं प्रशंस्य आवाहनं, जुष्टाकारं, स्वाहाकारं च कृत्वा वैष्णवं, श्रीभूमि देवत्यं ब्राह्मं रौद्रं मुनिभ्यां-मन्त्रं धात्रादि सर्वदेवत्यं च, हुत्वा विष्णुसूक्तेन पयोदधिघृतलाजैर्युक्तमं उपजुह्वा हुत्वा अग्निमानम्य नृत्तैर्गीतैश्च रात्रिशेषं यापयेत् ।

## अनन्तरं कर्तव्यम्

आचार्यः प्रभाते स्नात्वा अगा रंप्रविश्य, देवमुत्थाप्य पाद्यमाचमनं दत्वा, अग्निं विसृज्य स्नानश्वभ्रे देवंप्रतिष्ठाप्य अष्टोत्तरशतकलशैः संस्नाप्य शुद्धोदकैरभिषिच्य आस्थाने विष्टरे देवं संस्थाप्य नववस्त्रोत्तरीयाद्यैरलंकृत्य

अभ्यर्च्य विष्णसूक्तेन बहुशः पुष्पाजलिं दत्वा देवेशाय निदेवयेत् सौवर्णं यज्ञसूत्रं आचार्यश्च उत्तराभिमुखोभूत्वा 'अग्निं दूते' तिमंत्रेण संदद्यात् । देवं प्रार्थयेत् ।

'नशक्यंविधिवत्कर्तुं ब्रह्माद्यै रपि पूजनम् ।
न्यूनाऽतिरिक्तव्याघातदोषहीनं जगत्पते' ॥ इति स्तुत्वा –
"अज्ञानानामशक्तानामस्माकमदृढात्मनाम् ।
तस्मान्नित्यार्चनायां हि यदुद्भवमशोभनम् ॥
पूजयात्वनया विष्णोप्रशान्तंसर्वमस्तुनः" ।

इति नत्वा दण्डवत्प्रणामं कृत्वा यथाभागोपदंशैर्युक्तं पायसकृस-रगौल्यं यावकं शुद्धान्नं प्रभूतं निवेद्य पानीयाऽऽचमनं दत्वा कर्पूराद्यैर्मुखवासं तांबूलं च दत्वा देवमा(देवा) लयं प्रदक्षिणीकृत्य अर्चास्थाने संस्थाप्य अर्चयित्वा वैष्णवान् संपूज्य ब्राह्मणभोजनं कृत्वा आचार्यादिभ्यो दक्षिणांदद्यात् ।

एवं संवत्सरं प्रति समाचरेत् । तस्य(ते)संवत्सर नित्यार्चनाफलं लभेरन्निति विज्ञायते ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे मार्गशिरशुद्धद्वादशी समाराधनं नाम एकोनाशीतितमः पटलः ॥७९॥

## अथ अशीतितमः पटलः

अथ अग्निकुण्डादि होमोपकरणा नामधिदैवं व्याख्यास्यामः ।

### मृदादीनां देवता०

सिकतामृदौ भूमिदेवत्ये, स्थण्डिलस्य सोमः कुण्डा नामूर्ध्ववेदिः ब्रह्म, मध्यवेदिः प्राजापत्या, सभ्यपौंडरीकयोरधोवेदिर्दलयुता सौम्या, दलानां वसुदैवतम् खननं पितृदेवत्यम् षड्लेखाः स्कन्द देवत्याः प्रागश्रमुत्तरश्रं च लेखनं दैविकम् पश्चिमांत याम्यांतलेखनं पैतृकम् दर्भाणामृषयः इन्धनस्याऽग्निः, विहरस्योंकारः, क (रक)लशस्य पञ्चभूताः पृष्ठं पृथिवीं, पार्श्वमग्निः, कुक्षिराकाशः कंठे आपः, मुकुले वायुः, करकादि पात्राणामेव मधिदेवता भवंति ॥

(कूर्चाना मग्रं ब्रह्म, ग्रंथिर्विष्णुः, शेषमीश्वरदेवत्यम्, परिस्तरण-कूर्चानां (चतुर्णां) विष्णुः दक्षिणप्रणिधौ ब्रह्मा, उत्तरप्रणिध्या सोमः, पश्चिमपरिधेर्गन्धर्वः दक्षिण परिधेरिन्द्रः, उत्तरपरिधे र्मित्रावरुणौ(वा), आग्नेयोऽधोर्ध्वसमिधः प्रजापतिरीशः, वर्षिष्ठसमिधोर्जुह्वादेरग्निः स्रुवस्य सोमः, आज्यस्थालीदर्व्योश्च पृथिवी, चरुस्सर्व देवत्यंश्च, आज्यस्याऽग्निः, इन्धनस्य सर्वदेवताः, अन्येषां होमद्रव्याणां सविता, श्रीदेवत्यं बैल्वं, पालाशमाग्नेयं, नैयग्रोधं याम्यं, सौम्यं औदुंबरं, सौरं आश्वत्थं, शम्यं वायव्यं, खदिरं ब्राह्मं, इत्यधिदेवता भवंति। दैवतहीने अज्ञाते अग्निरिति विज्ञायते।

## कुंण्डे अग्नि मूर्तिध्यानम्

अथाऽग्निकुंण्डस्य मध्ये पश्चिमाभिमुखं ब्राह्म मासन मासीनं सर्वदैवतैः परिवृतं रक्तवर्णं त्रिपादं द्विशीर्षं चतुश्श्रोत्रं चतुश्शृंगं द्विनासिक मास्यद्वयं षण्णेत्रं मकुटाद्याभरणान्वितं सप्तहस्तं दक्षिणेस्रुवाऽक्षमाला-खड्गशक्तियुतं वामे तोमरव्यजनखेटकघृतपात्रयुतं त्रिहस्तम् अजवाहनं दक्षिणवामयोः स्वाहास्वधाभ्यां संयुतं इध्महोमे स्थितम्, अन्नहोमेत्वासीनम्, आज्यहोमे शयितमिति ध्यायेत्।

## सप्तानां जिह्वानां नामनि-वर्णः तत्र होमद्रव्याणि

"हिरण्या कनका रक्ता कृष्णाचैव वसुप्रभा अतिरक्ता बहुरूपा" इति सप्त जिह्वाः। तासु ऐशान्ये हेमाभा हिरण्यायां समिद्धोमं, इंद्रे श्यामाभा कनकायां आज्य होमं, आग्नेय्यां रक्ताभा रक्तायां यवहोमं, नैऋत्यांनीलाभा कृष्णायां लाजहोमं, वारुणे पीताभा वसुप्रभायासक्तुहोमं, वायव्ये श्वेताभा अतिरक्तायां तिलं, दक्षिणोत्तरयोर्मध्ये बहुवर्णनिभा बहुरूपाया मिध्म-चरुहोमे सप्तजिह्वासु च क्रमेण सप्तसमिद्धोमम्, अन्याऽग्निद्रव्याणि सर्वाणि मध्यमास्ये जुहुयात्।

## अग्नेः श्रोत्रादि स्थानं विज्ञाय ज्वलदग्नौ होमस्य कर्तव्यता

यत्रकाष्ठं तत्रश्रोत्रं धूमो नासिका अल्पज्वलितानेत्रे भस्म शीर्षमिति ज्ञात्वा श्रोत्रेहुते व्याधिपीडितम्, चक्षुष्यंधत्वं नासिकायां महारोगः मस्तकेः, मस्तके सर्वनाशः तस्मा दग्नै ज्वलने जुहुयादित्याह मरीचिः॥

इति श्रीवैखानसे मरीचिप्रोते विमानार्चनाकल्पे आघारादि अधिदेवाग्निध्यान विधिर्नाम अशीतितमः पटलः ॥८०॥

# अथ एकाशीतितमः पटलः

## यज्ञादीनां विष्णुपूजाङ्गत्वेनानुष्ठान प्रदर्शनम्

अथाऽतोनुष्ठानकल्पं व्याख्यास्यामः । सर्ववैदिकाचारास्तपोयज्ञाश्च विष्णुपूजाविधेर्भेद इति वैखानस सूत्रम् तत् सूत्रोक्ताऽनुष्ठानं सर्वं समाचरन्ति ॥

## सर्वकर्मानुष्ठानात्पूर्वमूर्ध्वपुण्ड्रधारणम्

नित्यनैमित्तिकानि कर्माणि ऊर्ध्वपुण्ड्रधर एव कुर्यात् । ऊर्ध्व पुण्ड्रधारणा दशुचिः शुचिरेवभवति(वेत्) । सर्वमंगलं वंशवृद्धिं च कारयेत् । ऊर्ध्वपुण्ड्रंविना जपहोमार्चनाध्यानादीन्नकुर्यात् । कुर्याच्छेन्निष्फलं भवति । तस्मा दूर्ध्वपुण्ड्रंधारयेत् ।

## पुण्ड्रधारणयोग्यमृद्ग्रहणम्

पर्वताऽग्रे नदी तीरे तीर्थस्थानेषु विष्ण्वालये गृहीत मृदं उत्तमम् । तुलसीमूले वल्मीके च गृहीतमृदं मध्यमं । अन्यस्मिन् शुचौदेशे गृहीतं मृदमधमम् ।

## द्रव्यान्तराणि

चन्दनादि सर्वगन्धद्रव्यैरुत्तमम् । श्रीपत्रतुलसीबिल्वैश्च मध्यमं, पञ्चगव्यैः शीततोयेन (भस्मना) अधमम् एतैर्द्रव्यै धारयेत् । श्वेतंसर्वसिद्धिदं, श्यामं सर्वशान्तिकरं, पीतं श्रीकरं, रक्तं वश्यकरमिति ।

## पुण्ड्रस्य दीपाद्यकृतित्वम्

हृदये महानग्निर्ज्वलति तस्य शिखा ज्वाला रूप वदूर्ध्वाग्रमूर्ध्वा पुण्ड्रंकुर्यात् । अथवा दीपाकृति वेणुपत्राकृति पद्मोत्पलकुमदानां मुकुलाकृति मत्स्यकूर्मशूर्पशंख दण्डाकृति वा ऋजु सुपार्श्वं मूर्ध्वपुण्ड्रंकुर्यात् ।

अंगुष्ठतर्जनी मध्यमानामिकानामेतेषां क्रमेण तुष्टिर्मुक्तिरायुर्वश्य मिति फलानि भवन्ति।

## ललाटादौ केशवादि स्मरणम्

ललाटे केशवाय, कुक्षौ नारायणाय; हृदये माधवाय कंठे गोविंदाय दक्षिणे उदरपार्श्वे विष्णवे दक्षिणे बाहुमध्ये, मधुसूदनाय कण्ठस्य दक्षिणे पार्श्वे त्रिविक्रमाय उदरवाम पार्श्वे वामनाय वामबाहुमध्ये श्रीधराय कण्ठस्य वामपार्श्वे हृषीकेशाय अपरे पद्मनाभाय ककुदिदामोदरायेति प्रणवादि नमोन्तमुच्चार्य मूर्ध्निविन्यसेत्। वामपार्श्वे दक्षिणपार्श्वे गतन्यासान् दक्षिणहस्तेन धारयेत् ऊर्ध्वपुंड्रं विना मुहूर्त्तमपि नाचरति। तदूर्ध्वपुण्ड्राकृतिं दृष्ट्वा मृत्युरपि दूरतो गच्छेत्। सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छतीति विज्ञायते।

## पवित्रस्य द्रव्यादिकम्

अथातः पवित्रलक्षणं वक्ष्ये - सुवर्णरजतगोवाल कुशविश्वामित्र काश दूर्वोशीर ऋजुतृणादिना पवित्रं कारयेत्।

## तेषां स्त्रीत्वादिकम् पित्र्यादौ दर्भसंख्या, ग्रन्थादि परिमाणम् ग्रन्थिदेवता

कुशादीनामग्रस्थूलं नारी मूलस्थूलंन पुंसकं मूला द्यग्रसमंपुमान् एतेषु स्त्री नपुंसकौ वर्जयेत्, एकाग्रं पैतृकं द्व्यग्रंदैविकं ऊर्ध्वंआभिचारिकं भवति अग्रं चतुरंगुलं ग्रंथिरेकांगुलं रज्जुवलयौद्व्यंगुलम्, अग्रग्रंथिशेषाणां क्रमेण ब्रह्मविष्णुशिवा अधिदेवताः।

## पवित्रस्य चक्रादिसाम्यम् पवित्रंविना कृतंकर्म निष्फलम्

यथा हरिहरमहेन्द्राणां चक्रं, शूलं, वज्रमिव ब्राह्मणानां पवित्रम् अपवित्रकरेण दत्तभुक्तजपहुतार्चनध्याना दीनि न कुर्यात्। कुर्याच्चेन्निष्फलमाभिचारिकं भवति।

## उच्छिष्टस्य वर्ज्यता

भुक्तोच्छिष्टं विवर्ज्यम् विण्मूत्रविसर्जने (वा) दक्षिणकर्णे समारोप्य कुर्यात्। आचमने पवित्रं नोच्छिष्टं सर्वदा धार्यम्।

### पवित्रालाभे

पवित्रालाभे अनामिकाया मुपवीतं संयोज्य कारयेदित्येके ।

### ब्राह्मस्नानम्

अथ ब्राह्मं स्नानम् वरुणं ध्यात्वा, नन्दिनी प्लाविनी मालिनी नलिनी ॥

हरिपादार्घ्यसंपृक्ता गंगा 'त्रिपथगामिनी । भोगवती त्रिदशेश्वरी' त्येताश्च, वारुणं मंत्र मुच्चार्य, जलंस्पृष्वा अभिमंत्र्य; आपोहिरण्य पवमानैः प्रोक्षयति । एवं ब्राह्मं स्नानमवगाह्य, स्नानं कुर्यात् ।

### मन्त्राणामृष्यादि स्मरणावश्यकता

सर्वेषां मंत्राणां प्रत्येकं ऋषिच्छंदोऽधिदैवतं ध्यात्वोच्चार्य कारयेत् । अन्यथा निष्फलं भवति । असुरा गृण्हीयुः ।

### सामान्यतः ऋष्यादिकम्

तस्माद्वा जायते सर्वेषां मत्राणां सामान्यम् ऋषि रंतर्यामी, छन्दो-गायत्रं, परमात्माऽधिदेवतेति । तस्माद्देवं मंत्रंप्रति ऋष्यादीनुच्चार्य, स्मृत्वा कारयेत् ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे अनुष्ठानकल्प-विधिर्नाम एकाशीतितमः पटलः ॥८१॥ (मातृकान्तरे ७६)

## अथ द्व्यशीतितमः पटलः

अथ संध्योपासनमन्त्राणामृषिच्छन्दोऽधिदैवतानि व्याख्यास्यामः ।

'सूर्य' इत्येतस्य 'अग्निर्गायत्रं सूर्य' इति ऋषिः छन्दोऽधिदेवतं । 'तेजश्च'इत्ये तस्च, ऋषि(?) छन्दो गायत्रं सविता देवता । 'अग्निश्चे'त्येतस्य, सूर्यऋषिः छंदोगायत्रं, अग्निर्देवता । 'आपोहिष्ठामयो भुव' इत्येतस्य, सिन्धुद्वीप ऋषिः छंदोगायत्रं आपोदेवता । गायत्र्याविश्वामित्र ऋषिः छन्दो गायत्रं सविता देवता । प्रणवस्य ऋषिः प्रजापतिः छंदोगायत्रं ब्रह्मा देवता । भूरादि समाहृतीनां अत्रि भृगु (पुरु) कु(त्स) त्सोमवसिष्ठगौतम

काश्यपांऽगिरस इति ऋषयः, गायत्र्युष्णिग नुष्टुप्बृहतीपंङ्क्तिस्त्रिष्टुप् जगत्यः छंदांसि, अग्निर्वायुरर्कोवागीशवरुण इन्द्रो विश्वेदेवा इति देवता गायत्र्याः पूर्ववत्। ओमाप इति गायत्री शिरसः ऋषिः ब्रह्मा छंदोऽनुष्टप् परमात्मादेवता। प्राणसंयमनं कृत्वा सव्याहृतिकां सप्रणवां गायत्रीम् अन्ते सशिरस्कां त्रिर्जपेत्।

सप्राणायामः तस्य ऋषिर्ब्रह्माछंदोगायत्रं। परमात्माऽधिदेवता। 'आया'त्वित्येतस्य वामदेव ऋषिः छन्दोऽनुष्टुप् जगती देवतागायत्री। सावित्र्याः विश्वामित्रऋषिः छन्दोगायत्रं सवितादेवता। 'उत्तमे शिखरे' इत्यस्य वामदेव ऋषिः छन्दोऽनुष्टुप् गायत्रीदेवता। 'मित्रस्ये'त्यस्य विश्वामित्र ऋषिः (भूर्भूरिति गायत्रं।) आद्यानां त्रिष्टुप्, अन्यस्य छन्दो बृहती रवि देवता। 'उद्वयंतमस' इत्येषां हिरण्यरूप ऋषिः प्रथमादि यथाक्रमेण अनुष्टुप् त्रिष्टुप् गायत्री जगती उष्णिक् शक्वरी इति छन्दो रविर्देवता। 'यच्छिद्धी'त्यादि शुनःशेफ ऋषिः गायत्रं पंङ्क्तिच्छिन्तुष्टुभं। 'कितवास' इति 'इमंम'इति च, त्रैष्टुभं, गायत्रम्। 'तत्वायामि, त्वंन्नो' इत्यादि त्रयाणां त्रिष्टुप् छंदो वरुणो देवता इति। अन्येषां मन्त्राणां सामान्य ऋष्यादीन् स्मृत्वा उच्चार्य कारयेत्॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे ऋषिच्छन्दोऽदेवताविधिर्नामद्व्यशीतितमः पटलः ॥८२॥ (मातृकान्तरे ७७ प०)

# अथ त्र्यशीतितमः पटलः

अथातो मन्त्राणां कल्पं व्याख्यस्याम -

## प्रणवस्य ब्रह्मस्वरूपतादिकम्

मन्त्राणां प्राणं प्रणवाकारं ब्रह्मरूपम्, 'ओमितिब्रह्मे' (तै० आ० उ१) ति श्रुतिः। तस्माज्जगत्कृत्स्नं प्रणवादन्यं नास्ति भगवन्तं प्रणव इति पठ्यते(पठन्ति)। प्रणवं त्र्यक्षरं। अकार उकार मकार इति। तेषां यथाक्रमेण ऋग्यजुस्सामाथर्व(साम) मयाः सत्वरजस्तमोगुणाः श्वेतपीत कृष्णनिभाः भूर्भुवस्वःस्थिता विष्णुब्रह्मेशानाऽधिदेवत्या भवन्ति। अकारो वलयाकारः, उकारः कुटिलाकारः, मकारो बिन्दुनादः, प्रणवस्यलिपेरंशोभवति। अकार

उकार संयोगा दोकारगुणो भवति। बिंदुनादसंयुक्तमोमिति। प्रणवस्य ऋषि च्छंदोधिदैवतम् पूर्ववत्। गोत्रमथर्वणमिति विज्ञायते।

अथातः प्रणवस्वरूपं वक्ष्ये –

## प्रणवस्य जीवात्मादिकम्

पीतवर्णः, सहस्रशीर्षः, सहस्राक्षः, सहस्रबाहुः, सहस्रोदरः, सहस्रपादः, ऊर्ध्वकेशो रक्तास्यपाणिपादः, शुक पिंच्छाम्बरधरो, विष्णुर्जीवात्मा, ब्रह्माबुद्धिः, ईशः कोपः, चित्तंसोम स्तलादि सप्त पातालाः पादा, भुजंगा अंगुलयः, अप्सरसो नद्यः, भूरादिसप्तलोकाः कुक्षिः, नाभिर्वसवः, महांडबहिरण्डवैष्णवांडाः शीर्षाः अग्निष्टोमादि (नदी) यज्ञाः केशाः, व्योम ललाटं, भ्रुवौमेघाः, चंद्रार्कौ चक्षुषी, शुक्रबृह स्पती कर्णौ, अश्विनौ नासिके, दंतोवायः, जिह्वासरस्वती, ओष्ठौसंध्ययोः नित्याग्निहोत्राणि, सर्वाग्नयो वदनं, ग्रीवाशचीपतिः, दिशो बाहवः रुद्रा स्संधिहस्ता, नक्षत्राणि अङ्गुलयः, तारका नखाः, वृषणौमित्रावरुणौ, उपस्थं प्रजापतिः, मरुतः पृष्ठम्, अस्थीनिपर्वताः, मंदरो मांसम्, ओषधयः शोणितम् प्रण(ळ) यंशिरोनद्यः, मूत्रकोशंसमुद्राः पुरीषं कांचनं, रेतोमृतम्, लोकालोकस्त्वक्, ऋषयोरोमकूपाः, स्वेदो वर्षं, वसनंसर्वोदधयः, वेदेतिहासम् आभरणं, सृष्टिस्थिति संहाराः क्रीडा, कल्पव्याकरणशिक्षानिरुक्तादिचतुष्षष्टिकलाः व्याख्यानम् बहुनाकिंप्रलोपेन, जगत्कृत्स्नं प्रणवादित्येवं ज्ञात्वा त्रिसंधिषु यथाशक्ति जपमाचरेत् त्रिमात्रो मात्रोवा सर्वारंभेषु अग्रतस्त्रिरुच्चार्य तदन्ते तथाकरोति प्रणवपूर्वमेव सर्वत्र जपमारभेत्। प्रणवहीनं यदि स्यात्सर्वं नश्यति। तस्मात्प्रणवादन्यं मंत्रंनास्तीति विज्ञायते।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे प्रणवस्वरूपंनाम त्र्यशीतितमः पटलः ॥८३॥ (मातृकान्तरे ७८)

# अथ चतुरशीतितमः पटलः

## गायत्र्या अक्षरेनत्ता सावित्रीति नाम्निनिमित्तम् ऋष्यादिकम् पादे अक्षर संख्या

अथ सावित्रीकल्पं वक्ष्ये –

'चतुर्विंशत्यक्षरा गायत्री'ति श्रुतिः। सा गायत्री सवितृदेवत्या, (तस्मा)त् सावित्रीत्युच्यते। तस्य ऋषि च्छन्दोऽधिदैवतं पुराचोक्तम्। अष्टाक्षरा त्रिपदा, चतुष्पदा षडक्षरा। जप्ये त्रिपादा, अर्चने चतुष्पदा।

## तस्याः स्वरूपम्

अग्निवर्णं; षट्कुक्षिः, पञ्चशीर्षः, शुक्लमुखः, कमलेक्षणः, ऋग्वेदः, प्रथमपादः। यजुर्वेदो द्वितीयः पादः, सामवेदस्तृतीयः पादः। पृथिवी चरणम्, ऊरू पर्वतो अंबरोऽ अस्थि, पूर्वः प्रथमः कुक्षिः, दक्षिणो द्वितीयः, पश्चिमः तृतीयः, उत्तरः चतुर्थः, पञ्चम ऊर्ध्वः, अधरः षष्ठ इति। पुराणानि आन्त्रम्, जगती दिव्य रूपम्, उदरान्तरमाकाशः, छन्दः स्तनौ, धर्मशास्त्रं जिघ्रा न्यायो बाहुः गिरि (गीः) कराः, ग्रीवाः, प्रथमः शिरः शब्द शास्त्रं, द्वितीयं शिक्षा, तृतीयंकल्पं, चतुर्थं निरुक्तं, पंचमं ज्येतिषम्। अनलं मुखं, वदनमिन्दुर्मण्डलं, श्वसनो वायुः अलका भूपंक्तिः, सहस्रकिरणोमौलिः, ताराः कुसुमम्, नक्षत्रमालाहारम्, ग्रहाः रत्नविभूषितम्, ब्राह्मो मूर्धा, शिखा रुद्रो विष्णुरात्मा, वेदान्ता विमलं मनः, वेदाः प्राणाः, मीमांसाश्चित्तम् इत्येवं ज्ञात्वा त्रिसंधिषु त्रिविधं ध्यान माचरेत्।

## त्रिविधं ध्यानम्

पूर्वासन्ध्या कौमारीं रक्तवर्णां हंसवाहिनीं अक्षसूत्र यज्ञोपवीतक मण्डलुधारिणीं ब्रह्मदेवतां सावित्रीं नाम, सवित्र्या 'वासमग्निः (हान)गां, गोत्रमिति यथाक्रमेण भूमि, गार्हपत्य मुपनय (निधा)नं, कात्यायनमित्येवं ध्यायेत्।

मध्याह्ने संन्ध्यायां यौवनीं रुद्राक्षाऽर्धचन्द्रत्रिशूल धारिणीं श्वेतवर्णां वृषभवाहिनीं रुद्रदैवतां गायत्रीं नाम, गायत्रेर्वासमंतरिक्षम् अन्यानि पूर्ववत्। सायंसंध्या सलक्षणां श्यामवर्णां सर्वाभरणभूषितां शंखचक्रधारिणीं

गरुडवाहिनीं विष्णुदेवतां सरस्वतीं नाम सरस्वतेर्वासंस्वर्गम् अन्यानि पूर्ववत्। एवं ध्यात्वा जपमारभेत्।

## अक्षरन्यासः न्यासफल च

पादादि मूर्धान्तं क्रमेण चतुर्विंशतिस्थाने अक्षराणि संन्यसेत्। पादांगुष्ठयोस्तत्कारं अंगुल्योस्सकारं, जंघयोर्विकारं, जान्वोस्तुकारं, ऊर्वोर्वकारं, गुह्यप्रदेशे रेकारं, वृषणे णिकारं, कटिप्रदेशे यकारं, नाभौ भकारं, जठरे र्गोकारं, स्तनयो र्देकारं, हृदये वकारं, कंठे यकारं, वदने धीकारं, तालौ मकारं, नासाग्रे हिकारं, चक्षुषोर्धिकारं, भ्रूमध्ये योकारं, ललाटे द्वितीययोकारं, विन्यस्य पूर्वतः पूर्वाऽभिमुखं नःकारं, दक्षिणतो दक्षिणाऽमुखं प्रकारं, पश्चिमतः पश्चिमाऽभिमुखं चोकारं, उत्तरतः उत्तराऽभिमुखं दकारं, मूर्ध्नि चतुर्मुखं सर्वं व्यवस्थितं यात्कारम्, एवमक्षराणि ज्ञात्वा विन्यसेत्। सर्वपापविनिर्मुक्तो भवतीति विज्ञायते।

## अक्षराणां ध्यानं देवतादिकं च

अथातोऽक्षराणां ध्यानं सर्वेषां वर्णानां त्रिसंधिषु पूर्ववत्, ब्रह्म (विष्णु) रुद्राकृति रूपम्।

## प्रत्येक मक्षरदेवता-तस्य फलम्

सर्वदेवताफलं च पृथगेव लक्ष्यते तत्कारं पीताभं, ब्रह्मदेवत्यं महापातकनाशनं, सकारं श्यामाभं, प्राजापत्यम्, उपपातकनाशनं, विकारं पिंगलाभं, सौम्यं, महापातकनाशनं, तुः कारं नीलाभं, ईश्वर देवत्यं, दुष्टपापग्रहरोगाद्युपद्रवनाशनं, वकारं वह्निवर्णं, साम्यं, भ्रूणहत्यादि मोचनं, रेकारं ज्वालारूपं बार्हस्पत्यं अगम्यागम पापविनाशनं, णिकारं विद्युन्निभं मैंद्रं अभक्ष्य भक्षणविनाशनम्, यंकारं हेमाभं वैष्णवबीजं ब्रह्महत्यादि-सर्वपाप विनाशनं, भकारं कृष्णाभम्, अर्यमदेवत्यं पुरुषहत्यादि पाप-विनाशनं, र्गोकारं रक्ताभं सावित्रं गोहत्यादि विमोचनं, देकारं श्यामाभं त्वाष्ट्रं स्त्रीहत्यादि पापविनाशनं, वकारं श्वेताभं पौष्णं गुरुहत्यादि पापनाशनं, स्यकारं स्वर्णाभं ऐंद्रं कूटकृतपापघ्नं, धीकारं पद्मसंकाशं वायव्यं अभक्ष्यभक्षणदोषघ्नं, मकारं पद्मरागनिभं वामदेवत्यं जन्मांतरकृतपापघ्नं, हिकारं श्वेतं मैत्रावरुणं सर्वपाप विनाशनं, योकारं कपिलाभं वैश्वदेवत्यं

प्राणिहिंसापाप विनाशनं, द्वितीययोकारं वैष्णवं दुष्टपापविनाशनं, नः कारम् अदित्यवर्णं ऐंद्रं इंद्रलोकप्रद्रं, प्रकारं नीलश्यामं रौद्र मीश्वरलोकप्रदं, चोकारं पीतवर्णं ब्राह्मं ब्रह्मलोक प्रदं, दकारं शुद्धस्फटिकसंकाशं वैष्णवं विष्णुलोकप्रदं, यात्कारं हेमाभं चतुर्वदनयुतं सर्वसिद्धिप्रदं (त्रि) संध्या संयुक्तं 'ओंभूर्भुवस्सुस्तत्सवितु'रि ति सावित्रीं शताष्टकं त्रिसंन्ध्यकं मनसा जपेत्। सावित्र्यध्ययनात् आयुः श्रीर्ब्रह्मवर्चसं प्रजासमृद्धिः धनधान्यसमृद्धिः भवीत। सर्वसंपत्करम्। ऐहिकाऽमुष्मिकफलप्रदं च। इष्टान्कामान् इहलोके चिर मनुभवन्ति। पश्चान्मुक्तिं समालभेरन्नित्याह मरीचिः।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे सावित्रीमंत्रकल्प विधिर्नाम चतुरशीतितमः पटलः ॥८४॥ (मातृकन्तरे ७९)

# अथ पंचाशीतितमः पटलः

अथ तत्वज्ञानोपदेशविधिः।

## तत्त्वोपदेशोपयुक्तोपोद्धतिः

अथातो मरीचिं मुनयः प्रणम्य चरितक्रिया ज्ञान योगेषु चतुर्षु पूजामार्गेषु चरितं(तत्क्रिये) भगवता विखनसा सूत्रे विस्तरेण प्रणीतम्, (ते) अन्यत्संक्षेपेणोक्तं, तदुपन्यासो बहुप्रयोगक्रमेण क्रियामार्गस्त्व याप्रणीतः। भगवत्तत्व ज्ञानयोगं च श्रोतुमिच्छाम इति अयाचन्त, तान् समीक्ष्य श्रूयतामिति मरीचिरुवाच--

तत्वज्ञानोपदेशविधिं वक्ष्ये–

## तत्त्वपदनिर्वचनम् ब्रह्मणःज्ञेयत्वम्, तस्य सकलत्वनिष्कलत्वे

तस्यभावस्तत्वमिति तस्य परब्रह्मणः परमात्मनो नारायणस्यभावः 'तत्वं नारायणः पर' इति श्रुतिः। तदवगमनं ज्ञानं तद्विदः ब्रह्म विदः। तस्मा त्परमात्मा ज्ञेयः, जीवात्मा ज्ञाता, श्रुतयो ज्ञानमिति ब्रह्मवादिनो वदन्ति। तद्ब्रह्मणो निष्कलस्सकलश्च स्वभावः।

### निष्कलस्वरूपम्

निष्कलः -- परमात्मानोऽन्यत् न किंचिदस्तीति क्षीरे सर्पिः, तिले तैलं, पुष्पे गंधः, फले रसः, काष्ठे अग्नि रिव अंतर्बहिश्च तत्सर्वं व्याप्याऽऽकाशोपमः 'अन्तर्बहिश्च तत्सर्वं व्याप्यनारायणस्स्थित' इति 'आकाशशरीरंब्रह्मे'ति। अशरीरः शरीरे (षु) व्याप्य तिष्ठति, विश्वव्यापक शीलत्वाद्विष्णुः दृश्यादृश्यः अत्यच्छः अमलः नित्यः अचिन्त्योऽप्रमेयः निर्गुणो निश्चलो निरवयवो निराद्यंतो निर्विकल्पो निर्द्वंद्वोऽनिर्वचनः अतीन्द्रियः सुसूक्ष्मत्वाद निर्देश्यः सदसदिति ब्रह्मवादिनो वदन्ति। (तत्र) परंधाम परंज्योतिः सर्वशः सर्वशक्तिमयः सर्वदेवमयः सर्वधर्ममयः (सर्वाधारमयः) सर्वाधार स्सनातनः ज्ञातृज्ञेयज्ञानहीनः ज्ञानघनः जाग्रत्स्वप्न सुषुप्तितुरीयस्थानगो बहिः प्रज्ञः प्रज्ञावस्थः स्थूलसूक्ष्मविभागेन वैश्वानरतेजः स्वरूपेण भुञ्जानः सर्वेषामात्मा गुहायां निहितः 'अणो-रणीयान्महतोमहीयानात्मागुहयां निहितोऽस्य जन्तो' रिति श्रुतिः। तस्माद्धृदयकमलान्तराकाशोपलब्ध वैश्वानरशिखायां त्रिगुणात्मको विष्णुः परमात्मा तिष्ठति। 'तस्या शिखायामध्ये परमात्माव्यवस्थितः। स ब्रह्मा स शिव' इति श्रुतिः। एवं निष्कलमिति विज्ञायते॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे निष्कलविधिर्नाम पंचाशीतितमः पटलः ॥८५॥ मातृकान्तरे पटल समाप्तिर्नास्ति॥

## अथ षडशीतितमः पटलः

### भगवतो जगत्सृष्टिः तयोर्भेदः

अथ सकलः काष्ठे अग्निर्मथनात् ज्वलन्निव निष्कलात्मको विष्णुः ध्यानमथनने भक्त्या संकल्पनात् सकलो भवति। तस्मादग्ने र्विस्फुलिंङ्ग इव ब्रह्मेशानादिदेवतारूपै र्भिन्नत्वात् कुलालचक्रस्थमृदो घटशरावदिभेद (दा) इव यद्यद्रूपं मनसा भावितं तत्तद्रूपो भूत्वा विष्णुः प्रकाशते। 'विश्वतश्चक्षुरुतविश्वतो मुखो विश्वतो बाहु रुतविश्वतस्पात्। संबाहुभ्यां नमति संपतत्रैर्द्यावा भूमी जनयन् देव एक'इति श्रुतिः तत्र सर्वव्याप्य शरीरः परमात्मैव सर्वभूतानां प्रभवरक्षणसंहृति निमित्तशरीरी भवति। 'अग्निर्वै देवाना मवमो विष्णुः परमस्तदंतरेण सर्वा अन्यादेवता'इति

ब्राह्मणम् । तस्मात् प्रधानः परमोऽव्ययो विष्णुः स एव पुरुषः स एवस्स्रष्टा, पाता, हर्त्ता, अखिलस्य । तद्भिन्नाः पुरुषाः ।

## श्रियो विष्णुविभूतित्वम्

तद्विष्णोर्विभूतिः श्रीः सा च नित्या आद्यन्तरहिता अव्यक्तरूपिणी प्रमाणाऽप्रमाणसाधारणभूता विष्णो स्संकल्पानुरूपा नित्यानन्दमयी मूलप्रकृतिरूपा शक्तिः तद्भिन्ना प्रकृत्यंशभूता पौष्णि तद्भिन्ना स्त्रियः तदात्मिका माया प्रकृतिः, मायीविष्णुः, प्रकृतिपुरुषावेतवनादी ताभ्यां-लोकप्रवृत्तिः विकारगुणाः सर्वे प्रकृत्युत्पन्नाः कार्य कारण कर्तृत्वेहेतुः प्रकृतिः, पुरुषः सुखदुःखानां भोक्तृत्वेहेतुः, प्रकृतिस्थःपुरुषः प्रकृतिजान् गुणान् भुंक्ते ।

## प्रकृतेर्द्वैविध्यदिकम्

सा प्रकृति द्विधाभवति चेतनाचेतनेति, अचेतना पंचभूतैः मनोबुध्यहंकाररूपै रष्टधा भिन्ना । अन्या जीव भूता चेतनेति । तथा प्रकृत्या सदासंश्लिष्टाः पुरुषाः, प्रकृतिस्थाः जीवात्मानः क्षेत्रज्ञाः बहवः, तेपि नित्या अनाद्य वद्यासंचित पुण्यपापफलम् भोक्तुं बहुविधं देहं प्रविश्य तत्तदात्माऽभिमानिनः तत्र शुभाऽशुभकर्माणि कृत्वा तत्तत्फलानुरूपंदेहं पुनःपुनःप्राप्य(नि) वर्तन्त इति विज्ञायते ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे सकलविधिर्नाम षडशीतितमः पटलः ॥८६॥ (मातृकान्तरे ८०)

# अथ सप्ताशीतितमः पटलः

## वैकुण्ठस्वरूपम् तत्र प्रमोदादिभेदः तेषु विद्यमान भगवद्रूपाणि

अथातः परमात्मन स्सकाशाद्धिरण्मय मण्ड मभवत्, तदन्तर्गतानां सर्वेषामण्डाना मुपरि सनातन(नंनित्य) मचिन्त्यं देवैरप्यनभिलक्ष्यं नित्यशुद्ध (बुद्धि) मुक्तस्वभाव पुरुषैरनु भूयमानं वैष्णवाण्डम् । तत्र विष्णु लोकाश्चत्वारः, आमोदः, संमोदः, प्रमोदः, वैकुण्ठमिति । एकैकस्योपरि यथाक्रमेण भवति । तस्मिन् हेममयप्राकार (चतुद्वारि) गोपुरतोरण शतसहस्रैः

कनककमलकुसुमादिभिरपि अलंकृते, अमृतजलपूर्णैश्शतसहस्रैश्वसरितां प्रभासमाने दिव्ये लोके सहस्रादित्य संकाशं हेममयं द्वादशतलैर्युत विमानं, नित्यज्ञानक्रियैश्वर्यब्रह्मादिदेव ऋषिभिःनित्य (दिव्य) परिजनैर्युतं मंदिरम् । तस्मिन् व्योमनिलये परमात्मा स्वसंकल्पेन देवीभूषणायुधैः सह आमोदे विष्णुः, प्रमोद महाविष्णुः, संमोदे सदाविष्णुः, वैकुंठे सर्वव्यापी नारायणः आसीनो भवेत् ।

## भगवतः सर्वोत्तमत्वम्, इच्छया जगत्सृष्टिः

'त मीश्वराणां परमं महेश्वरं तं देवानां परमं च दैवत'मितिश्रुतिः । 'यदा यदा प्रजास्सृजेयेति सोकामायत । तदा तदा स्वाभिमताऽनुरूप स्वरूपगुण स्वशक्त्या स्वलीलयैव इमं प्रपञ्चं कार्य कारणभावेन यथापूर्वं ससर्ज' इति श्रुतिः । सर्वेषां जीवानां प्रभोस्सिसृक्षोर्ब्रह्मणः स्वेच्छया भूतान्य-सृज्यन्त । 'आत्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अब्द्यः पृथिवी पृथिव्या ओषधय, ओषधीभ्योन्नं, अन्नाद्भूतानि जायंते' ति श्रुतिः । (तै.उ.२)

## चतुर्मुखस्योत्पत्तिः

एकदा प्रलयकाले भुजंगपतिभोग (पर्यंक) शयने शयितस्य नारायणस्य नाभिकमले ब्रह्मोद्भूतो भगवदंश श्चतुर्मुखो जगत्सर्वं सृजतीति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे श्रीवैकुंण्ठलक्षणंनाम समाशीतितमः पटलः ॥८७॥ (मातृकान्तरे ८१)

# अष्टाशीतितमः पटलः

अथ देहोत्पत्ति प्रकारः --

ओषधीभ्योन्नमुपजायते, तदन्नं त्रिविधं भवति, एकं मूत्रं, एकं पुरीषं, एकं पुरुषाणां शुक्लं, स्त्रीणां शोणितं, शुक्लशोणिते (तयो) क्षीरे सर्पिरिव-सर्वव्यापिनी माया शक्तिर्भवति। पुरुषबीज मूलसंचितंशुक्लं, स्त्री कुचमूल संचितंशोणितंच, संयोगकाले दैवयोगेन वायुनागर्भालयं प्रविशति।

## गर्भस्य वृद्धिक्रमः

तत्रैकरात्रोषितं कलिलं, द्विरात्रोषितंबुद्बुदं, त्रिरात्रो षितंमांसलं, चतुरात्रोषितं बन्धुं, अष्टरात्रोषितं सुकुमारं, नवरात्रोषितंयावनं, दशरात्रोषितं वयसं अर्धमासे अ(पि)ण्डाकृतिः, मासे शरीराकृतिः मासद्वये शिरोबाहु प्रदेशाः, त्रिमासे जठरकटिदेशाः, चतुर्थे मासे पाणिपादद्वयं, पञ्चमे मासे रोमरूपाणि, षष्टेमासे अस्थिसंघातं, सप्तमेमासे जीवप्रकाशः अष्टमेमासे (देहः) देहंकारोति नवमे मासे प्रचलनं करोति तत्तत ऊर्ध्वं जायते। स्नायु-मज्जास्थीनि रेतो मयानि त्वग्रक्त्तमांसानि शोणित मयानि, एवं षट्कोशविकृत त्वग्रुधिरमांसमेदोस्थिमज्जाशुक्लमिति क्रमेणांऽतर्भूतानि (एकांशीभूतानि) सप्तधातूनि। सप्तधातुमयं गात्रं भवति।

## पुरुषत्वादि निमित्तम्

शुक्लाधिके पुरुषः शोणिताधिके स्त्री, द्वयो स्तुल्ये नपुंसकं भवति। पुंसो वा स्त्रियो वा परस्परभावेन तयोरेको गर्भस्यवर्ण इति विज्ञायते।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे देहोत्पत्ति विधिर्नाम अष्टशीतितमः पटलः ॥८८॥ (मातृकान्तरे-८२)

# अथैकोननवतितमः पटलः

अथातः पृथिव्यादि महाभूतानां समवायं व्याख्यास्यामः ।

## शरीरे काठिन्याद्युपपादनम्, इन्द्रियोत्पत्तिः तद्विषयः

शरीरे यत्कठिनं तत् पृथिव्याः, यो द्रवः सोऽभसः, यदुष्णं तत्तेजसः, यत्संचरति सोनिलस्य, यत्सुषिरं तदाकाशस्य, (शात्) श्रोत्रादीनि ज्ञानेन्द्रियाणि । श्रोत्रमाकाशे वायौ(योः) स्पर्शः, अग्नेश्चक्षु (अभ्यः) अप्सजिह्वा, पृथिव्यां(व्याः) घ्राणम् । एवमिन्द्रियाणां यथाक्रमेण शब्दस्पर्श रूपरसगन्धा विषयाः वाक्पाणिपादपायूपस्थानि महाभूतेषूत्पन्नानि कर्मेन्द्रियाणि । तेषां क्रमेण वचनाऽऽदान गमनविसर्गाऽऽनन्दाश्च विषयाः ।

## बुद्ध्यादीनामुत्पत्तिविषयस्थानानि

चतुर्षु पृथिव्यादि महाभूतेषु क्रमेणोत्पन्नानि मनो बुद्ध्यहंकार-चित्तानीत्यन्तः करणचतुष्टयम् । तेषां क्रमेण संकल्पविकल्पाऽध्यवसाया नात्मन्यात्मावबोधनम्, अनु भूतार्थस्मरणानिच विषयाः । मनःस्थानं गलांतरं बुद्धे र्वदनम्, अहंकारस्य हृदयम्, चित्तस्य नाभिरिति ।

## अस्थिपादादीनां पृथिव्याद्यंशत्वम्

अस्थिचर्मरोमनाडीमांसाश्च पृथिव्यंशाः, मूत्रश्लेष्मरक्तशुक्लमे-दस्वेदाश्च अंबशाः, क्षुतत्तृष्णानिद्रालस्य मोहमैथुनानि अग्न्यंशानि, प्रचरणविलेखनोन्मीलनानि मीलनादीनि वाय्वंशानि, कामक्रोधलोभमोह भयान्याहिंसाऽसत्यस्तेया ब्रह्म कल्पनाः क्रोधगुणाः ।

## शब्दादीनां पृथिव्यादि गुणत्वम्

शब्दस्पर्शरूपरसगन्धाश्चैते पृथिवीगुणाः, तेषां गंन्धविहीनाश्चत्वारः अपांगुणाः, गन्धरसविहीनास्त्रयः अग्निगुणाः, शद्बः स्पर्श इति द्वौवायोर्गुणौ, शद्बमेकमेवाकाशस्य गुणः ।

## सात्विकगुणाः तेषां कार्यं च

सात्त्विक राजस तामस मिति त्रयो गुणाः । अहिंसा सत्याऽस्तेय

ब्रह्मचर्यकल्पनाक्रोधगुरुशुश्रूषा शौच संतोषाऽऽस्तिक्याऽऽर्जवाइति सात्त्विकलक्षणानि। अहं कर्ता अहं वक्ता अहं भोक्तेत्यादीनि अभिमान-गुणानि राजस लक्षणानि । निद्राऽऽलस्य मोह मैथुन स्तेयकर्माणि तामसलक्षणानि।

## सात्त्विकादीनां स्थानम्-तत्स्वरूपम्

ऊर्ध्वे सात्त्विकाः, मध्ये राजसाः, अधस्तात्तामसा इति। सम्यग्ज्ञानं सात्त्विकं, धर्मज्ञानं राजसं, तिमिरोऽन्धं तामसमिति।

## जाग्रदाद्यवस्थाभेदः

जाग्रत्स्वप्नसुषुप्तितुर्यमिति चतुर्विधावस्था। ज्ञानेंद्रिय कर्मेन्द्रिया-ऽन्तःकरण चतुष्टय चतुर्दश करणयुतं जाग्रत्। अन्तःकरण चतुष्टयमात्रयुक्तं स्वप्नं, चित्तैककरणयुता सुषुप्तिः। केवलजीवयुक्त मेव तुर्यमिति। (उन्मीलितजीवमध्यस्थ) परमात्मजीवात्मनोर्मध्ये जीवात्मा क्षेत्रज्ञ इति विज्ञायते। सोपि पञ्चमहाभूताः देहेंद्रियभूतगुणाः करण चतुष्टयानि इत्येतैः पंचविंशात्मकः पुरुषः तस्मात्पंच विंशात्मको देह इति विज्ञायते।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे भूरादि तत्व-प्रकाशोनाम एकोननवतितमः पटलः ॥८९॥ (मातृकान्तरे ८३)

# अथ नवतितमः पटलः

अथाते देहलक्षणं वक्ष्ये--

स्वांगुलीभिः षण्णवत्यंगुलो देहः। तद्वादशांगुलाधिकः (कः प्रमाणः) प्राणः प्राणायामेन समो भवति। (वह्निमण्डलम्, तत्पुरुषः,) (गुदादारभ्य द्व्यंगुलादूर्ध्वं मेढ्रं मेढ्रात्तद्व्यंगुलाधस्तान्मध्येकांगुलं देहः) गुदात्द्व्यंगुला दूर्ध्वं देहमध्यम्। तस्मिन् हेमाभं त्रिकोणं वह्निमण्डलम्। तन्मध्ये बिन्दुना-देनसह रेफबीजं ज्वलति तन्मध्ये मण्डल पुरुषो यज्ञमूर्त्तिः पिंगलाभः द्विशीर्षः चतुःशृगः षण्णेत्रः सप्तहस्तो दक्षिणे अभयस्रक्शक्तिखड्गयुतः वामे वरद स्रुक्खेटयुतः, त्रिपादः, पीतांबरधरः (श्रीवत्सांकः) किरीटकेयूर-हारादिसर्वाभरणयुक्तः। दक्षिणवामयोः स्वाहास्वधाभ्यांसहितः, सर्वदेवैः परिवृतः स्थितः।

## नाभिः तत्रद्वादशारचक्रं, तत्र जीवः

तदूर्ध्वे नवांगुलंकन्दस्थानं। चतुरंगुलोत्सेधायामं, त्वगादि सप्तधातु-भिर्भूषितं, (म) अण्डाकृतिकं, कन्दमध्ये नाभिः नाभौ (नाभेः) द्वादशारयुतं चक्रं, तत्र चक्रे पुण्यपापप्रचोदितस्तन्तुपञ्जरमध्यस्थो लूतिक इव प्राणारूढः प्रवर्त्तते (भ्रमति) जीवः।

## नाभेरूर्ध्वं कुण्डलिनी शक्तिः

तस्योर्ध्वे नाभौ (भेः) तिर्यग्गता अधऊर्ध्वे गता अष्टप्रकृति (रष्टधाकुटिला नागरूपा विद्यामु (द्युन्मु) खेन मूत्र (ऊर्ध्व) द्वारं संरुध्य, कन्दपार्श्वे स्थिता कुण्डलीभूता सर्पफणामणिमंडलश्रियमुपेयुषी कुण्डलि-नीशक्तिः आत्मनः फणेन ब्रह्मरुद्राख्यं सुषुम्नानाडीरन्ध्र मुपगूह्य तिष्ठति।

## हृदयं-तत्र सूर्यमण्डलम्-तत्र मूर्तिः

नाभ्यां उपरि वितस्त्या हृदयं तत्र सर्वं प्रतिष्ठितम्। हृदये अर्कबिंबं तस्मिन् सकारबीजान्वितं सहस्रज्वालायुतं ज्योतिर्ज्वलति। तन्मध्ये मण्डलपुरुषो विष्णुमूर्त्तिः तरुणादित्यसंकाशो हेममयो हिरण्यश्मश्रु-केशनखयुतः पीतांबरधरः श्रीवत्सांकः चतुर्भुजः शंखचक्रधरः अभय कट्यवलंबित हस्तः रक्तास्य नेत्रपाणिपादः सौम्यः सुप्रसन्न मुखः किरी-टकेयूरहारकटिप्रलंबयज्ञोपवीतादि सर्वाभरण भूषितः सृष्टिस्थित्यन्तकारणः देवीभ्यां परिषित्कैः सहितः स्थितः।

## नासाग्रे चन्द्रमण्डलम्-तत्रमूर्तिः

नासाग्रे शुद्धस्फटिकसंकाशं चंद्रबिंबम्। तस्मिन् ऋकारबीजा-न्वितम्, अमृतंस्रवन्तं श्वेतरोचिषं ध्यात्वा; तन्मध्ये मंडलपुरुषो नारायण मूर्त्तिः शुद्धस्फटिक संकाशः पीतांबरधरः श्रीवत्सांक श्चतुर्भुजः शंख-चक्रधरः अभयकट्यवलंबित हस्तः पद्मोदर दलाभनेत्रो रक्तास्यपाणि पादः किरीटकेयूरहारादि सर्वाभरणभूषितः।

## मूर्धनि मुक्तिद्वारम्

स्मेरमुखः देवीभ्यां परिषत्कै स्सहितः स्थितः तस्योपरि मूर्ध्नि सुषुम्नाया अग्रे मुक्तिद्वारं। तस्मिन् शिरः पद्मम् अधोमुखमूर्ध्वमूलं

षोडशदलयुतं तस्मिन् स्थितं अमृतधाराभि स्सहस्राभिराप्लाव्यमानं मण्डलपुरुष वासुदेवं ध्यायेदिति विज्ञायते ॥

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे देहलक्षणं नाम नवतितमः पटलः ॥९०॥ (मातृकान्तरे ८४)

# अथ एकनवतितमः पटलः

## हृत्पद्मस्थ भगवद्ध्यानविधिः

अथ कंदादुत्थितं द्वादशांगुलं सुज्ञाननालं अणिमामहिमालघिमागरिमाप्राप्तिः प्राकाम्यमीशत्वं वशित्व मित्यष्टैश्वर्य दलोपेतं प्रकृत्यात्मिक कर्णिकं विद्याकेसर संयुक्तं अधोमुखं हृदयकमलं प्राणायो मैर्विकसितं ऊर्ध्वमुखं भवति। तस्यान्तः कर्णिकामध्ये महानग्निर्ज्वलन् विश्वार्चि विश्वतोमुखः आपादतलमस्तकं संतापयति। तन्मध्ये पीताभा नीवारशूकवत्तन्वी वह्निशिखा तस्याः शिखायामध्ये प्रज्वलितज्योति रूपमेव स्वसंकल्पेन तप्त जांबूनदप्रभः पीतांबरधरः पद्माक्षः रक्तास्यपाणिपाद श्चतुर्भुज श्चक्रशंखधरोभयकट्यवलंबितहस्तः श्रीवत्सांकः सुप्रसन्नः शुचिस्मितः सर्वाभरणभूषितः हृदिस्थितः परमात्मा। दक्षिणवामयो (श्रीभूमिभ्यां) र्विभूतिमायाभ्यां परिषत्कै स्सह संस्थितः "नीवारशूकवत्तन्वी पीताभास्यात्तनूपमा तस्याश्शिखायामध्ये परमात्मा व्यवस्थितः" इति श्रुतिः। तं विष्णुं जिज्ञासुः ध्यान योगेन ज्ञानचक्षुषा पश्येत्।

'सदा पश्यन्ति सूरय' इति श्रुतिः। विश्वव्यापिनं विष्णुं ध्यानमथनेनाऽऽविर्भूतं तेजोभासुरं भक्त्या सकलं संकल्प्य; आवाह्य अभ्यर्चयेदिति। "प्रवः पांथमंधसो धियायते महेशूराय विष्णवे चार्चत" इति श्रुतिः। तस्माद्विष्णवर्चनमेव द्विजै रहरहः कर्त्तव्यमिति विज्ञायते।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे हृत्पद्ममध्यध्यानंनाम एकनवतितमः पटलः ॥९१॥ (मातृकान्तरे पटलसमाप्ति र्नास्ति)

# अथ द्विनवतितमः पटलः

## नाडिसंख्याः, तत्र मुख्याः, तत्स्वरूपम्

अथातो नाडीचक्रं वक्ष्ये –

कन्दोद्भूता(नि) द्विसप्तति सहस्राणि नाड्यः, तासु मुख्याश्चतुर्दश, इडा, पिंगला, सुषुम्ना, सरस्वती, वारु(चारणा)णी, पूषा, हस्तिजिह्वा, यशास्विनी, विश्वोदरा, कुहू, शंखिनी, पयस्विनी, अलंबुषा, गान्धारीति। आसा मादौ तिस्रा मुख्याः। तिसृषुसुषुम्नैव प्रधाना व्यक्ता वैष्णवी सात्वि(की)का मुक्तिमार्गेति विद्वद्भिः कथिता। सा कंदमध्ये (पद्मसूत्र-प्रतीकाशा वीणादण्डान्तर्निर्गतंत्री, अलाबुवद्वंशा स्थिना सहमूर्धान्तं स्थिता, तस्या दक्षिणभागे दक्षिणनासान्तं स्थिता पिंगला तस्यांभास्करश्च रति। इडावाम(पर)भागे वामनसान्तं स्थिता। तस्यां चन्द्रश्चरति। तौ राजसतामसौ विषाऽमृत भागौ दिवारात्रौ स्याताम्। सुषुम्नायाः पूर्वभागे च ऊर्ध्वाऽधोगता मेढ्रान्तांस्थिता कुहूः अपरे चो (र्ध्वगता) र्ध्वाधो गता जिह्वान्तंस्थिता सरस्वती पिंगलायाः पूर्वभागेचोर्ध्वाऽधोगता दक्षिणपादां ऽगुष्ठान्तंस्थिता यशस्विनी अलंबुसा च, अपरे दक्षिण नेत्रान्तं स्थिता पूषा पूषाऽलंबुसयो र्मध्ये वामनेत्रान्तं स्थिता हस्तिजिह्वा यशस्विनी कुह्वोर्मध्ये ऊर्ध्वगत सर्व गामिनी दक्षिणपाण्यंगुष्ठांतंस्थिता(चरणा) वारुणी पूषासरस्वत्योर्मध्ये दक्षिणकर्णान्तं स्थिता पयस्विनी इडायाः पूर्वभागे चोर्ध्वाऽधोगतावामपादांगुष्ठान्तंस्थिता (गान्धारी) हस्तिजिह्वा। अपरे वामनेत्रांतं स्थिता गांधारी हस्तिजिह्वाकुह्वोर्मध्ये अधश्चोर्ध्वगता सर्वगामिनि वामपाण्यंगुष्ठान्तं स्थिता विश्वोदरा। गान्धारीसरस्वत्योर्मध्ये वाम-कर्णांतंस्थिता शंखिनी। अलंबुसा कंदमध्ये ऊर्ध्वाधोगताः (दधोगताः) सर्वगामिन्यः पायुमूलाग्रगता अन्यास्सिराश्च अश्वत्थपत्रसिरावत्स मुत्पन्ना इति विज्ञयते।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे नाडीनिरूपणंनाम द्विनवतितमः पटलः॥९२॥ (मातृकान्तरे ८५प०)

# अथ त्रिनवतितमः पटलः

## नाडीषु प्राणादिवायुसंचारः, तेषां मुख्यः

अथैतासु नाडीषु प्राणाऽपानव्यानोदानसमान नागकूर्मकृकल (र) देवदत्तधनञ्जया इति दश वायवस्संचरन्ति। तेषु प्राणादयः पञ्च वायवो मुख्याः। तेषु प्राणापानौ मुख्यौ, एतयोः प्राण एव मुख्यः।

## प्राणादीनां स्थानं स्वरूपंच

प्राणस्थानमाख्याम् नासिकयोर्मध्यं, हृन्मध्यं, नाभि मध्यं, पादांगुष्ठाविति पञ्च। सचप्राणो राजावर्तमणिप्रभो निश्श्वासोच्छ्वासकरः हृत्पद्मं समाश्रित्यावर्त्य मुखनासिके करोति।

अपान इन्द्रकोपसमप्रभो नाभिं(गुद) समाश्रित्य, विण्मूत्रविसर्जनं करोति। समानः सन्धिगतः फेनवर्णः नाभिमाश्रित्य हानोपादनचेष्टादीनि करोति। उदानः किंजल्कसदृशः कण्ठमाश्रित्य अन्नपानादि पोषणक्रियां करोति। व्यानः व्योमाभः क्षीरे सर्पिरिव सर्वत्र व्याप्य करचरणशयनादिकं करोति। नागःश्वेतःकण्ठंसमाश्रित्य उद्गारादीन् करोति। कूर्मो रक्तः नेत्रे समाश्रित्य, निमीलनोन्मेषणादि करोति। कृकरः कृष्णः उदरं समाश्रित्य क्षुत्पिपासादीनि करोति। देवदत्तः पीतवर्णः सर्वग स्तन्द्रां करोति। धनंजयः श्यामाभः सर्वगः शोभादिकर्म करोति।

## जीवस्वरूपं तस्य कर्म तस्य जननक्रमः

जीवात्म अंजनाभः नित्यशुद्धः (बुद्धः बोधनिर्विकारः नित्याणु प्रमाणः) सर्वगत इत्येवंभूतं देहं प्रविश्य शुभाऽशुभकर्माणि करोति।

तत्कर्म द्विधा भवति ऐहिकमामुष्मिकं चेति। तत्रैहिकं भोजनाऽऽच्छादनस्थानगमनाऽऽसनशयनादिकम्। आमुष्मिकम् अहिंसादानधर्म परोपकारा (रभगवदाराधना) दि पुण्यपापानि सर्वाणि भवन्ति दैवयोगाद्देहावसाने स्वकर्मानरूपं परलोकं प्राप्य तत्तत्कर्मफलं भुक्त्वा क्षीणे फले निवृत्य आकाशं प्रविशति।

वायुर्भूत्वा अग्निं प्रविशति धूमो भूत्वा अपः प्रविशति। अपोभूत्वा अभ्रं प्रविशति। अभ्रंभूत्वा भूमौ वर्षति भूम्या ओषधिवनस्पतीन् प्रविशति

ओषधीभ्योन्नम् अन्नाच्छुक्लशोणितौच भवतः। ततःस्वविषयां योनिं प्रविशति। प्रतिदिवसवृध्द्या परिणतो जायते च। एवं क्षेत्रक्षेत्रज्ञयोश्च परस्परं संबंध (धादनन्तसंसारस्थावर) जंगम नरमृग पशुपक्षिजरायुजाऽण्डजस्वेदजोद्भिज्जभेदा बहवो भवन्ति इति विज्ञायते ।

(आधिकः पाठः - मातुकान्तरे अथ सप्ताशीतितमः पटलः)

## पांच भौतिक प्रलयः

अथा तः पांचभौतिक प्रलयं व्याख्यास्यामः -

यदा पुराकृतवशा द्विनाश मुपयाति तदा प्रथमं गंधात्मना ऽ वस्थितं भूमेर्गुणम् तत्कारण भूता एव आपः कबली कुर्वन्ति ।

एव मद्भिः कबलीकृते तस्मिन् शरीरेकात्स्न्र्येन नश्यति तदा शरीरं कुलालचक्रारूढ भ्रमणक्रिया मनुभवदिव व्याकुल मव तिष्ठते एवं स्वकारणभूतास्वप्सु तत्कार्यभूतगुणे प्रणष्टेऽपां गुण प्राचुर्याद्धेतोरिव तदास्वशरीर मापादचूडं बाह्येनाऽग्निनादह्यमानमिव मन्यते ततः कीलालाख्यं रुधिरं शुष्यति ।

तस्यामवस्थायां रुधिराऽत्मनाऽवस्थितं जलं च स्वकारणे तेजसि विलीयते एव ऽऽमपां विनाशेसति जला ऽ धारत्वात् श्लेष्मा च स्वा ऽ शयनाशा न्मुक्त स्वाशयबंधो भवति। तदा विमुक्त बंधे श्लेष्माख्ये दोषेपिताख्यदोषेण सहाऽग्नौ पतिते स चारग्नि स्तं दग्ध पुनर्दाह्य पदार्था ऽ भावादुपरमति । तदाऽग्निस्स्वकारण भूतं प्राणादि वायुमुपैति ।

तदा वायुरतिवेगो भवति एव मोग्न सयोगात्प्रवृद्धो वायुस्सर्वस्रोतो मुखैस्तिर्य गूर्ध्व मधश्चाऽपादतलमस्तकं प्रविश्य शरीर मितस्चेतस्चकं पयन् वेदनादिभिर्मनोव्याकुलं करोति। तस्मान्मनसो व्यकुलीभावान्नष्टस्मृतिर्मोहमावद्यते ।

तदा ऽऽत्मीयैर्व्यापारै न्मुक्तः पंचवायस्सवांयोनिं विसृज्य उच्छ्वासमभिनिष्क्रामयन्ति एव मभिनिष्क्रामित उच्छ्वासो ब्रह्मनाडीभूत सुषुम्नारंध्रं भित्वाशरीरस्थित मूष्माणं च संगृह्य पुनश्चर्मितायांधूतो पादाद्वायुर्यथा निर्गच्चति मुखं न प्रविशति तद्वन्मंदं मंदं मुदावहति । तस्मिन् काले वेगेनोत्थाय मुख्य प्राण भूतो वायुर्भवन्निव कंठ कूबर सप्त द्वार संधौ घुरुधुरु शब्दं कुर्वन् जीवाऽ त्मान मेवं प्रकारेण विकृष्य सर्वरक्त

ग्राहिणि जलूका यथा पादाऽ न्तरमलभमानो नोद्गच्छति तथा जीव सहितो वायु रपि स्थाना स्स्थानान्तरं विंदन्नुत्क्रमति ।

एवं गच्छन्तं जीवाऽत्मानं सूक्ष्मशरीरिणं सुकृत दुष्कृते सह प्रतिणेयाताम् ।

एवं पांचभौतिक प्रलयक्रम इति विज्ञायते ।

दुष्कृतां गति प्रपंच :-

अथ दुष्कृता मधर्मचारिणां नास्तिकादीनां गतिं व्याख्यास्यम :-

ते मृताः पाशदंडधरैर्यमभटैःर्निर्दयं पाशैर्दंडैःर्हन्यमाना निशिताऽऽयस कंटक शूल तप्तवालुका ऽऽ स्तृतेसिंहव्याघ्र शरभादि दुष्टमृगा ऽ धिष्टते भयंकरेऽ धतमसा आवृते वायु जलादि रहिते मार्गे नीयमानाश्च महता क्लेशेन दुष्प्रवेशंयमपुरं प्राप्य पुराकृतवशेन यमेन रौरवाद्येकविंशति नरकेषु चोदिता स्तत्र तत्र शस्त्रा ऽ ग्नि यन्त्रादिभिः पीडिता नानाविधयातनामनुभूय दंदशूकादियोनिंप्राप्य पुनः पुनर्जन्म मरणादिभिः पीडिता जल तुंडिकाव-न्मुहुर्मुहु र्जन्मकूपेमज्जनो न्मज्जनक्रमेण विनश्यन्ति ।

## सुकृतिनां गतिः

(प्रवृत्ति मार्गगानां पितृयाणमार्ग कथनं)

पुनरावृत्ति हेतुभूत यज्ञ दानादि प्रवृत्ति कर्मा ऽ नुष्ठाना त्कृत देहत्यागः प्रथमं धूममभियाति तस्माद्रात्रिं ततो ऽ परपक्षं तस्माद्दक्षिणायण प्रण्मासां स्तेभ्यस्संवत्सरं ततः पितृलोकं तस्मादाकाशं ततश्चन्द्रमसमिति क्रमेण देवतास्थानेषु विश्रम्यैवं पितृयाणेन देवलोक मधिवसन स्वपुण्या ऽ नु रूपं भोगमनुभूय क्षीणे पुण्ये निवृत्तस्सन् क्रमेणा ऽऽ काशं प्राप्य वायुधू-माभ्रमेघ रूपाणि भूत्वा वर्षात्सस्यं सस्यादन्नमन्नाद्रेतो भूत्वा ब्राह्मणादि योनिं प्राप्य संसरतीति विज्ञायते ।

निवृत्तिमार्गगानां अर्चिरादिमार्गकथनम् ।

अथातो ऽ र्चिरादिमार्गं व्याक्यास्याम :-

अपुनरावृत्ति हेतुभूत निवृत्तिकर्मणा परब्रह्मोपासनात् प्रपत्त्यादिमार्गरतो जीवः पूर्ववत्पांचभौतिक प्रलयाऽवसाने सूक्ष्मदेहस्थ स्सुषुम्नामाडी मार्गमधिवसन् ब्रह्मरंध्रंभित्वा प्रवृत्तोऽर्चिरभिसंभवति ।

अर्चिषो ऽ हरह्नश्शुक्लपक्षंतस्मादुत्तरायण षण्मासां स्तत स्संवत्सरं तस्मादादित्यं तत स्सोमं राजानं ततो वैद्युत मिति। एतेषु देवता स्तानेषु विश्रम्य देवयानमार्गेण भूरादीन् प्रप्य ब्रह्मांडकटाहं भित्वा ततो विरजां प्रविश्य कृत सूक्ष्मदेह परित्यागः पूर्वोक्त वैष्णवांडं गच्छतीति विज्ञायते।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे जीवोद्भवोनाम त्रिनवतितमः पटलः ॥९३॥ (मातृकान्तरे ८६)

# अथ चतुर्नवतितमः पटलः

## संसारहेतुः

अथ अयं देहःजन्मकृत्वा भार्यामयपाशनिबन्धितो भगवन्मायया मोहितः कामक्रोधलोभमोह मद मात्सर्य हिंसादीनि करोति।

योनि द्वारेण निष्क्रम्य पुनःपापीयसींयोनि माश्रित्य पुनर्जायमानः स्वर्गनरकफलेषु कर्मसु प्रवर्तते। तस्माद्भगवन्मायया मोहितत्वात् भगवन्तं समाश्रित्य भक्त्या नारायणमुपासीत।

## तत्तरणोपायः

तदुपासनात् सोपि भक्तवत्सलत्वात् भक्तानुकंपया (स्वमायां) मोचयति। तत आत्मा सम्यज्ज्ञानं प्रविशति। पश्चादाश्रमधर्मयुक्तो भगवदाराधनं करोति। तदाराधनेन संसारार्णवनिमग्नो जीवात्मा परमात्मानं नारायणं पश्यति। सोप्यपुनरावृत्तिकं दिव्यलोकं प्रसादयति। पश्चात्कृतकृत्यो भवति।

## मोक्षस्वरूपम् तद्भेदः

संसारबन्धन वासनान्मुक्तिर्मोक्षः। तदपि समाराधनविशेष-चतुर्विधपदावाप्तिः सालेक्यं सामीप्यं सारूप्यं सायुज्यमिति। आमोदप्राप्तिः सालोक्यं; प्रमोदप्राप्तिः सामीप्यम्; संमोदप्राप्तिः सारूप्यं; वैकुण्ठप्राप्तिः सायुज्यमिति। तच्च नित्याऽऽनन्दम् अमृतरसपानवत् सर्वदा तृप्तिकरं परमात्मनो नित्यनिषेवणं परंज्योतिः प्रवेशनम्। 'तद्विष्णोः परमं पदं सदा पश्यन्तिसूरय' इति श्रुतिः॥ भगवन्तं नान्यथा प्राप्नोतीति विज्ञायते।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे भगवत्सायुज्य-प्रदानंनाम चतुर्नवतितमः पटलः ॥९४॥ (मातृकान्तरे ८७)

# अथ पंचनवतितमः पटलः

## चतुर्विध भगवत्समाश्रयणम्

अथ भगवत्समाश्रयणं चतुर्विधम् भवति (समाराधनमित्यामनंति) जपहुताऽर्चनाध्यानमिति । सावित्रीपूर्वं वैष्णवीमृचम्, अष्टाक्षरं(च)वा, भगवन्तं ध्यात्वा अभ्यसेत् स जपः; अग्निहोत्रादिहोमे यत् हूयते तध्दुतं होमः; (पूजा) गृहे देवायतने वा वैदिकेन मार्गेण प्रतिमादिषु पूजयेत् तदर्चनम्; निष्कलसकलविभागं च ज्ञात्वा अष्टांऽगयोगमार्गेण परमत्मानं जीव आत्मना चिन्तयेत् तद्ध्यानमिति ।

## अर्चनस्योत्तमत्वम्, मूर्तिभेदनिरूपणम्

तेष्वर्चनं सर्वार्थसाधनं स्यात् । तत्र परमात्मैव पञ्चधा भवति । 'स वा एषपुरुषः पंचवा पंचात्मे' ति श्रुतिः ।

तस्मादाकाशादि महाभूतानां(क्रमेण) परमात्मानि भेद एव । सभ्या-ऽऽहवनीयाऽन्वाहार्यगार्हपत्याऽऽवसथ्या इति पञ्चाऽग्निवत् 'पञ्चधाग्नीन् व्यक्रमद्विराट्स्रष्टे' ति श्रुतिः । प्राणादि पञ्चवायुभेदैरिव पञ्चमूर्त्तिभेदैर्भिद्यतेति 'पोपूयमानः पञ्चभिः स्वगुणैः प्रसन्नैः सर्वानिमान् धारयिष्यसी' ति श्रुतिः ।

तस्मात् 'विष्णुपुरुषसत्याऽच्युतानिरुद्ध' इति ।

मूर्त्तीनां पञ्चानां आदिमूर्त्तिर्विष्णुः तद्भेदाश्च चतस्रो मूर्त्तयः । 'तद्विष्णोः श्रमापनुदायचतुर्गुणाये'ति श्रुतिः तस्मात् 'ब्रह्माचतुष्पात्' भवति । पादा दर्धात् त्रिपादात् केवलाच्च क्रमेण धर्मज्ञानैश्वर्यवैराग्यैरिति विषयगुणैः चतुर्भिः मूर्त्तयो भवन्ति । आदिमूर्त्ते श्चतुर्मूर्त्तित्वात् क्रमेणविष्णु र्महाविष्णुः सदाविष्णु र्व्यापी नारायण इति चतुर्मूर्त्तयो भवन्ति । विष्णोरंशःपुरुषः महाविष्णो रंशःसत्यः सदाविष्णोरंशःअच्युतः व्यापिनोंऽशोनिरुद्धः इति धर्मादि ब्रह्मगुणै श्चतुर्धाभिद्यते । पुरुषः पुरुषात्मकःपरमपुरुषः धर्ममय इति, सत्यः सत्यात्मकः ज्ञानस्सर्वतेजोमय इति, अच्युतोऽपरिमितः

ऐश्वर्यः श्रीपतिरिति, अनिरुद्धः महान् वैराग्यस्सर्वसंहार इति। एषां रूपं पुरा वर्णादिकथने विधि नाऽत्रोक्तम्। एवं पञ्चमूर्त्तिनामभिर्भेदैः गुरूपदेशेन अष्टाऽङ्गयोगमार्गेण ध्यात्वा आवाह्य अर्च्चयेदित्याह मरीचिः।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे ज्ञानस्वरूपनिरूपणंनाम पञ्चनवतितमः पटलः ॥९५॥ (मातृकान्तरे ८८)

## अथ षण्णवतितमः पटलः

अथातो अष्टांऽगयोगं वक्ष्ये –

जीवात्मपरमात्मनोर्योगो योग इत्यामनन्ति। 'यमनियमाऽऽसन प्राणायाम प्रत्याहार ध्यान धारण समाधय' इति योगांगानि ॥

### यमस्य लक्षणम्

तेषु यमः अहिंसा, सत्य, मचौर्यं, गृहस्थस्य स्वदार निरति रन्येषां सर्वत्रमैथुनत्यागः दया, आर्जवं, क्षान्तिः, धैर्यं, मिताशनं, शौच मिति यमगुणा दशधा भवन्ति।

### नियमस्य लक्षणम्

नियमस्तु तप स्संतोषास्तिक्य दान विष्णुपूजा वेदार्थश्रवण कुत्सितकर्मसुलज्जा गुरूपदेशश्रद्धा मंन्त्राऽभ्यासो होम इति नियमगुणा दशधा भवन्ति। एतै विंशतिगुणैर्युक्तो योगाधिकारी भवेत्।

### आसनस्य

आसनानि नवभेदानि—ब्राह्म स्वस्तिक पद्म गोमुख सिंहमुख वीरभद्र मयूराणि इति ॥

दक्षिणपादमूर्ध्वं वामपादमधःकृत्वा जान्वन्तरे अंगुष्ठौ निगूह्य, अंके वामपाणिं तदूर्ध्वे दक्षिणपाणि मुत्तानंन्यस्य ऋजुकायो भ्रू मध्येक्षणमासनं तद् ब्राह्मम्।

सीवन्या उभयोःपार्श्वयोः गुल्फद्वयं निक्षिप्य पूर्ववदासनं स्वस्तिकम्।

ऊर्वोरुपरि पादतलौ विन्यस्य पूर्ववद्धस्ततलद्वयं न्यसेत् तत्पद्मासनम्।

दक्षिणजानुं वामजानुं संश्लिष्टं निविशयेत् तत् गोमुखम् । (दक्षिणेतरं दक्षिणपार्श्वे, अदक्षिणं दक्षिणोरौ इति गुल्फौ निवेशयेत् तत् गोमुखम् ।

पूर्ववत् वृषणस्याऽधः सीवन्याः पार्श्वयोः गुल्फौ न्यस्य हस्तौप्रसार्य जान्वोः स्थाप्य नासाग्रं निरीक्ष्य संवृताऽऽस्यो भवेत् एतत् सिंहासनम् ।

गुल्फं सव्यं मेढ्रादुपरि विन्यस्य असव्यं तदुपरि न्यसेत् एतत् मुक्तासनम् ।

दक्षिणंपादं वामेरोरुपरि न्यस्य वामपादोपरि दक्षिणोरुंन्यसेत् एतत्, वीरासनम् ।

ब्राह्मं जान्वन्तरद्वयमग्र मंगुष्ठं निगूह्य भ्रूमध्येक्षणं गुल्फौ बृषणस्याऽधस्सीवन्याः पार्श्वयोःपादौ न्यस्य, पाणिभ्यां बध्वा भद्रासनम् । करतले भूमौ संस्थाप्य कूर्परौ नाभिपार्श्वयोर्न्यस्य न(उन्नत)तशिराः पादौ दंडवद्व्योम्नि संस्थितो मयूरासनमिति ।

## आसनस्योत्तमत्वादिकम्

एतेषु ब्राह्मस्वस्तिकपद्मासनान्युत्तमानि । गोमुख सिंहमुक्तानि मध्यानि । वीरभद्रमयूराणि अधमानि इति विज्ञायते । (मातृकान्तरे ९० )

अथातःप्राणायामः--

प्राणापानसमानयोगः प्राणायामः रेचक पूरक कुंभक इति सच त्रिविधो भवेत् । निश्वासविसर्गोरेचकः । निश्वासोध्मानं पूरकः । निश्वासनिरो(धः)धनं कुंभक(कइ)मिति ।

## रेचकादिप्रकारः

प्राणमपानेन संयोज्य देहमध्ये रेफबीजान्वितं वह्निमण्डलं प्रवेश्य तत्रस्थ पुरुषं पश्यति । अग्निं प्रज्वाल्य अग्निना सममुदरस्थमनिलंमिडया समारोप्य पूरयित्वा नासाग्रे ऋकारबीजान्वितम् अमृतं स्त्रवन्तमिन्दुमण्डलं तत्रस्थ पुरुषं च नेत्राभ्यां पश्यन् मन्दपिंगलयारेचयति । पुनरपि पिंगलया वायु मारोप्य पूरयित्वा सकार बीजान्वितम् अर्कमण्डलं तत्रस्थपुरुषं प्रविश्य (पश्येत्) इडया शनैर्विरेचयेत् ।

एवं त्रिसंधिषु चतुर्मासमाचरेत् । पृथक्चिह्नोपलक्षिता (तां)

नाडीशुद्धिमाप्नोति ।

प्राणमपानवायुना संयोज्य इडया षोडशमात्रैर्वायुना संयोज्य इडया षोडशमात्रैर्वायु मारोप्य म(अकारमूर्ति)कारं संस्मरेत् । पश्चात् चतुष्षष्टिमात्रं पूरितंधारयेत् । यावच्छक्यं तावद्धारयति । पिंगलया द्वात्रिंशन्मात्रै रेचयेत् । पुनः पिंगलया षोडशमात्रैर्वायुमारोप्य मकारमूर्त्तिं संस्मरन् पूरितंप्राणं धारयेत् । अकारमूर्त्तिं ध्यात्वा चत्वारिंशत्प्रणवं जपेत् । पश्चादिडयारेचयित्वा पुनः पूर्ववदिडया वायुमारोप्य पूरयित्वा धारयेत् । प्रणवं संस्मरन् सव्याहृतिकां सप्रणवां गायत्रीम् अन्ते सशिरस्कां त्रिर्जपेत् । एवं त्रिसंधिषु प्राणसंयमनं करोति ।

ततोऽग्निमंडलं प्रविश्य तत्रस्थपुरुषेण संयुज्य वह्निना सह वायुमारोप्य, पिंगलया आदित्यमण्डलमनुप्रविश्य (तत्रस्थपुरुषेण संयुज्य) पश्चादिडया वायुमारोप्य, चन्द्रमण्डल मनुप्रविश्य, तत्रस्थपुरुषेण संयुज्य, ततोऽवह्निना कुण्डलीमुखं तत्वा, वायुमारोप्य सुषुम्नयाचोर्ध्वं नीत्वा कण्ठ(न्द)मध्ये स्थितं हृदयकमलमूर्ध्वमुखं विकसितं कृत्वा तत्रपरमात्मानं नारायणं पश्यतीति विज्ञायते ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे यमनियमासन-प्राणायामविधिर्नाम षण्णवतितमः पटलः ॥९६॥ (मातृकान्तरे ९१)

# अथ सप्तनवतितमः पटलः

## प्रत्याहारस्वरूपम्, तद्भेतः

अथातः प्रत्याहारः पञ्चधा भवति । इन्द्रियाणां सर्वेभ्यो विषयेभ्यो बलादाहरणम्, आत्मनि सर्वमात्मव दीक्षमाणं, विहितकर्माणि (कर्मणां) बहिर्विनामनसाकृतं, पादांगुष्ठादिमूर्धान्तम् अष्टादशमर्मस्थानेषु वायुमारोप्य, धारयित्वा स्थानात् स्थनादूर्ध्वतोऽधस्ताच्च समाकर्षणं, नाडीमार्गेषु वायुमारोप्य निरोधनमिति च ।

## अष्टादशमर्मस्थानानि तल्लक्षणम्

पादांगुष्ठ गुल्फ जंघा(मध्य)चितिमूल जानूरुमध्य पायुमूल देहमध्य

मेढ्र नाभि हृदय कण्ठतालुमूल नासिका मूलाऽक्षिमण्डल भ्रूमध्य ललाट मूर्धान् इति अष्टादश स्थानानि ।

एतेषां प्रमाणं पादमानं सार्धचतुरंगुलं, तदवसान(गुल्फ) मंगुलं, ततो दशाऽगुलं जंघामध्यं, ततो दशाऽगुलं चिदिमूलं, तदर्धाधिकंत्र्यंगुलं देहमध्यं, ततो द्व्यर्धांगुलंमे(म्)मूलं, नाभिः चतुरंगुलम्, तदेका दशांगुलं हृन्मध्यम्, ततो द्वादशांगुलं कण्ठकूबरम्, षडंगुलं तालुमूलं । ततश्चतुरंगुलं नासिकामूलं, अक्षिमण्डलं द्व्यंगुलं, द्व्यंगुलं भ्रूमध्यं, ततो द्व्यंगुलं ललटान्तं त्र्यंगुलं मूर्धेति ।

### तत्रवायु संयमन प्रकारः

एतेषु स्थानेषु मनसा वायुमारोप्य; स्थानात् समाकृष्य निरोधंचो र्ध्वतोऽधश्च यथाक्रमेण करोति । इडा पिंगलाभ्यां वायु मारोप्य, कुण्डलीपार्श्वयोः आपूर्य, नासाभ्या मुदरस्थं वायु मारोप्य, पूरयित्वा, भ्रूमध्ये कूर्चौसमारोप्य, धारयति । एवं नित्यं समाचरेत् । आत्मनः प्राणम्सुषुम्नया भ्रूमध्यान्तं समारोप्य, यावन्मण्डलोदयं तावत् संयमनं करोतीति विज्ञायते ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे प्रत्याहारविधिर्नाम सप्तनवतितमः पटलः ॥९७॥ (मातृकान्तरे ९२)

# अथ अष्टनवतितमः पटलः

## धारणलक्षणम्, शरीरे पृथिव्यादिस्थानम्, तत्रध्येयं रूपम्

अथातो धारणानि अष्टधा भवन्ति । तेष्वात्मनि यमादिगुण-युक्तमनसास्थितिः, हृत्पद्मान्तराकाशे बाह्याकाशे धारणं च पृथिव्यादि महाभूतेषु पञ्चसु देवानां पंच धारणानि, हृत्पद्ममध्ये परमात्मानन्दा-विग्रहधारणमिति । पादादिजानुपर्यन्तं पृथिवीस्थानं तत्र लकारसंयुक्तं (नो) वायुमारोप्य, अनिरुद्धमूर्त्तिं ध्यात्वा धारयेत् । जान्वोः(नोः)पायुपर्यन्तम् अपांस्थानं तत्रवकारसंयुक्तं वायुमारोप्य, अच्युत मूर्त्तिंध्यात्वा धारयेत् । पायोर्हृदयान्तमग्निस्थानं तत्र रेफयुतं वायुमारोप्य सत्यमूर्तिं ध्यात्वा धारयेत् ।

हृदयात् भ्रूमध्यान्तं वायुस्थानं तत्र यकारसंयुक्तं वायुमारोप्य, पुरुषमूर्त्तिं ध्यात्वा धारयेत्। आभ्रूमध्यात् मूर्धान्तं व्योमस्थानं तत्र हकारसंयुक्तं वायुमारोप्य विष्णुमूर्त्तिं ध्यात्वा धारयेत्। एतेषां देवानां ध्यानस्वरूपं पूर्वं नाडीष्वकारसंयुक्तं वायुमारोप्य हृन्मध्ये प्रणवेन कार्यम्। स्वे स्वे संभृ(हृ)त्यकरणे प्रणवस्य नादान्ते परमानन्दविग्रहं परमात्मानं नारायणं शुद्धस्फटिकसंकाशं ध्यात्वा धारयेत्। एतां धारणां नियमादि संयुक्तः नित्यमाचरेत्। इत्याह मरीचिः।

इति श्रीवैखनसे मरीचिप्रोक्ते विमानार्चनाकल्पे धारणाविधिर्नाम अष्टनवतितमः पटलः ॥९८॥ (मातृकान्तरे ९३)

# अथ एकोनशततमः पटलः

## ध्यानस्वरूपम् तद्विभागः

अथातो ध्यानं वक्ष्ये – परमात्मनो जीवात्मना चिंतनं ध्यानं, निष्कलं सकलमिति (तत् द्विविधम्)। निष्कलं देवैरप्यनभिलक्ष्य मदृश्यं स्यात्। सकलं द्विविधं निर्गुणं सगुणं चेति। निर्गुणं निष्कलस्वभावः। परमात्मनोन्यन्नकिंचिदस्तीति काष्ठे अग्निरिव सर्वंव्याप्य आकाशोपमः सर्वेषां आत्मगुहायां निहितः अन्तर्बहिश्च संस्थितो दृश्यादृश्यस्थूलसूक्ष्मः अमलोऽत्यच्छः अप्रमेयो निरवयवो निरुद्योगो नित्योऽचिंत्यो निष्कलः तमेव प्राणायामप्रत्याहार धारणादात्मसंस्कारं कृत्वा आत्मना पश्येत्।

मध्यदेहान्मूर्धपर्यन्तं भ्रुवोर्मध्ये अन्तरात्मानं नारायणं सर्वजगत्कारणम् अव्ययम् अव्यक्तम् एकरूप परंज्योति र्ज्वलति। अवभासयति। एवं निर्गुणध्यानम् 'नारायणपरंज्योति रात्मा नारायणः परः' इति श्रुतिः। तस्मात्प्रधानपरमोऽव्ययो विष्णुस्सदा ध्येयः।

निष्कलमेव प्राणायामैर्विकसितहृदयकमलांतराकाशे वैश्वानरशिखामध्ये परंज्योति र्ज्वालारूपवत् स्वय मेवपुरुषः कृष्णपिंगलः ऊर्ध्वरेता विरूपाक्षः विश्वरूपः परमानंदविग्रहो भवेत्। तं परमयाभक्त्या पश्येत्।

तत्र सन्निहितो भवेत्। इति निर्गुणध्यानं भवतीति विज्ञायते ॥ (मातृकान्तरे ९४)

अथ सगुणध्यानं वक्ष्ये -

प्राणमपानेन संयोज्य, तमनुप्रविश्य तत्र पुरुषं दृष्ट्वा, पुनः पिंगलया आदित्यमंडलमनुप्रविश्य, तत्रस्थ पुरुषंदृष्ट्वा, ततश्चेडया चन्द्रमण्डल-मनुप्रविश्य, तत्र मण्डल पुरुषं दृष्ट्वा ततो ज्वलिताऽग्निना कुण्डलीमुख (ख)ज्वलनेन दग्ध्वा, सुषुम्नयाचोर्ध्वंगत्वा, प्राणायामेन विकसित हृदयकमलांतराकाशे वैश्वानरशिखामध्ये चतुरश्रं हेमाभं बिन्दुनासह यकारबीजान्वितं माहेन्द्रमण्डलं तन्मध्ये अर्धचन्द्राऽऽकृतिं श्वेतं बिन्दुनासह वकारबीजान्वितं वारुणं(मण्डलं) ध्यात्वा, तन्मध्ये प्रणववेष्टितं सुवर्णाऽऽभमादिबीजं स्मृत्वा, प्रज्वलितज्योतीरूपमेव भक्त्या सकलं संकल्प्य देवीभूषणायुधैस्सह परिषद्गणैस्सह कल्याणगुणनिधिं पूर्ववदध्या-येत्। एतत्सगुणध्यानमुत्तमम्। सर्वसिद्धिप्रदं सर्वत्र प्रयोक्तव्यम्।

हृत्पद्मान्तराकाशे वैश्वानरशिखामध्ये अग्नि(अर्क)मण्डलं पूर्व वद्ध्यात्वा, तन्मध्ये परंज्योतिरेव सकलं संकल्प्य, देवीभूषणायुधैः परिषद्गणै स्सहवृतं यज्ञमूर्त्तिं पूर्ववत् ध्यायेत्। अग्निहोत्रादि होमः तदपि सगुणध्यानम्।

हृत्पद्मे वैश्वानरशिखामध्ये अर्कमंडलं पूर्ववत् ध्यात्वा, पद्ममध्ये परंज्योतिरेव सकलं संकल्प्य, तरुणादित्यसंकाशं विष्णुं पूर्ववद्ध्यायेत्। एतत्सगुणध्यानं सर्वत्र प्रयोक्तव्यम् सर्वसिद्धिप्रदम्।

हृदयकमलान्तराकाशे वैश्वानरशिखामध्ये सोममंडलं पूर्ववद्ध्यात्वा, तन्मध्ये परंज्योतिरेव सकलं संकल्प्य, शुद्धस्फटिकसंकाशं नारायणमूर्त्तिं ध्यायेत्। सगुणध्यानं सर्वसिद्धिप्रदं सर्वत्र प्रयोक्तव्यम्।

एवं सगुणध्यानं चतुर्विधं भवति। एतानि वैदिक ध्यानमार्गाणि अन्यान्यवैदिकानि सर्वाणि जघन्यानि। तैःषड्भिःप्रकारैः भगवंतंनारायणं नित्यंसर्वज्ञितं भवति। सर्वं समाधिना पश्यतीति विज्ञायते।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे ध्यानभेदविधिः नाम एकोनशततमः पटलः ॥९९॥ (मातृकान्तरे ९४)

# अथ शततमः पटलः

## समाधिस्वरूपम्-तत्फलम्

अथातः समाधिं वक्ष्ये--जीवात्म(नः)परमात्मानो(त्मस) स्समावस्थ-समाधिः । यथा अनुष्णोपलमादित्यदर्शनादुष्णत्वमाश्रितमिव (तथा) परामात्मादर्शनात् प्रत्यगात्मा नित्यशुद्धबुद्धमुक्तस्वभाव (क) परमानन्द-मयत्वं प्राप्य, परमात्मानं नारायणं सदापश्यत्यनुभवत्येव । अष्टांऽगयोगमार्गेण नित्यमणिमाद्यैश्वर्यं च प्राप्नोति । जीवन्मुक्तो भवेत् ।

## दहत्यागप्रकारः

अथचांऽत्यकाले सर्वद्वराणि संयम्य, प्राण मपानेन संयोज्य, शोधयित्वा, सर्वेषु नाडीमार्गेषु निरुध्य 'हंसे'ति सुषुम्नयाचोर्ध्वं गत्वा, हृदयाऽम्भोजे प्राणमारोप्य, तदन्तराकाशे परे ज्योतिषि मनोवृत्तिं सुसंयम्य, परमात्मानं पश्यन् भ्रुवोर्मध्ये प्राणमारोप्य, प्रणवाक्षरेण सबिन्दुना देन(समुद्धाटयति) समुत्था(प्य) पयित्वा, प्राणमुत्सृजति । प्राणेनसह सर्वमात्मनि प्रलीयते । तदा परमात्मनासह वैकुण्ठ मवप्नोति ।

## ग्रन्थोपसंहारः

इत्येवं संसारसमुद्रोत्तरणोपायसाधनं ज्ञानयोगं च ब्रह्मणा पुरा मम प्रणीतम् । तदेव युष्माकं मयाचोक्तं । ज्ञानोपदेशं गुरुशिष्यमार्गेण ज्ञात्वा, पश्चात्परमात्मानं सदा पश्येत् ।

एवं सदाध्यातुमशक्यत्वात्, प्रतिमाादिषु पञ्च मूर्तिनामभेदैः समावाह्य अभ्यर्चयेत् । एतत्समूर्तार्चनम् । सर्वसिद्धिप्रदत्वात् गृहे देवायतने वा समूर्तार्चनमेव कारयेत् । अन्यथा न परंपदमाप्नोति । तस्मात् श्रुतिचोदितं परमगुह्य मेतत् ज्ञानयोगं च ज्ञात्वा समाचरे दित्याह मरीचिः ।

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे अयुतग्रन्थसंहितायां समाधिभेदोनाम शततमः पटलः ॥१००॥ (मातृकान्तरे ९६)

# अथ एकशततमः पटलः

अथातो ग्रंथगणनाविधिं व्याख्यास्यामः --

वैखानसमहाशास्त्रं सर्ववेदेषूद्धृतं सर्ववेदार्थसारभूतं अप्रतर्क्य-मनिन्दितं वैदिकैरुपसेवितं विष्णोराराधनं सर्वभूतहितार्थाय श्राद्धं प्रमाण मवलंब्य विष्णुना विखनसः उक्तम्। विखनसा भृग्वादीनामुक्तम्। भृगुणा काश्यपेन अत्रिणा मयाचैव तंत्राऽधिकारकाण्डसंहिताभेदैः चतुर्लक्षं प्रोक्तम्। तेषां क्रमेण प्रतिमार्गं ग्रंथसंख्यां वक्ष्यामि।

## अत्रि ग्रन्थसंख्या

अत्र प्रथमं प्रधानं विखनसस्सूत्रं पूर्वतन्त्रम्, आत्रेयतन्त्रं, विष्णुतन्त्रं, उत्तरतन्त्रमित्येतै श्चतुर्भि स्तन्त्रै रत्रिणा अष्टोत्तराशीति सहस्रग्रन्था उक्ताः।

## भृगु ग्रन्थसंख्या

खिल पुरातन्त्र वासाधिकार चित्राधिकार मानाधिकार क्रियाधिकारा ऽर्चाधिकार यज्ञाधिकार वर्णाधिकार प्रकीर्णाधिकार प्रतिगृह्याधिकार निरुक्ता ऽधिकार खिलाधिकार रूपेषु त्रयोदशेष्वधिकारेष्वपि संख्या पूर्ववत्।

अष्टोत्तराशीतसहस्रं ग्रन्था भृगुणाप्युक्ताः॥

## काश्यप ग्रन्थ संख्या

सत्यकाण्डं तर्ककाण्डं, ज्ञानकाण्डमिति त्रिविध काण्डेष्वपि काश्यपेन चतुष्षष्टिसहस्रग्रन्था उक्ताः।

## मरीचि ग्रन्थसंख्या

मया च जयसंहिता, आनन्दसंहिता, संज्ञानसंहिता, वीरसंहिता, विजयसंहिता, विजितसंहिता, विमलसंहिता, ज्ञानसंहितेति अष्टसु संहितासु लक्षाधिकचतुरशीति सहस्रग्रन्था उक्ताः॥

एतेषां चतुर्विधानां मूलं तद्वैखानससूत्रम् । एतैस्सहाऽष्टाविंशतिशास्त्रेषु चतुर्लक्षग्रंथाःपूर्णाः । तेषु एतद्विमानार्चनाकल्प आनंदसंहितायां सर्वशास्त्रसारभूतं गुह्याद्गुह्यतरं चतुर्वेदोद्भवमन्त्रैः चतुराश्रमिणा मनुष्ठेयम् । चातुर्वर्ण्यसमृध्यर्थं चतुराश्रमसिद्धिदं चातुर्वर्ण्यसाधनाय चत्वारोम्नाया वदंति । एतान् पुण्यान् सौम्यान् चतुर्विधान् विष्णोरर्चनाविधीन् यस्तु ब्रूयात्, यस्तु श्रावयेत्, यः पठेत्, यस्तु कर्त्ता, कारयिता, प्रेरयिता, अनुमोदिता च, सर्वे च विष्णुसायुज्यमाप्नुवंति न पुनर्जायंते । इत्याह भगवान् मरीचिः

इति श्रीवैखानसे मरीचिप्रोक्ते विमानार्चनाकल्पे ग्रंथगणनाविधिर्नाम एकाधिकशततमः पटलः ॥१०१॥

॥ समाप्तोयं विमानार्चनाकल्पः ॥

॥ मङ्गलानि भवन्तु ॥

